ब्राह्मण क्षत्रियो वैश्यो यजमानत्वमर्हति ।
यदि शूद्रोऽनुलोमश्च कर्तुमिच्छेत्तु भक्तिमान् ॥ ४२ ॥

राजान यजमान हि कल्पयित्वाऽऽरभेत्पुन ।
तथा कर्ता तु शूद्रादि समग्र फलमाप्नुयात् ॥ ४३ ॥

सूतादिप्रतिलोमस्तु कर्तु नार्हति किञ्चन ।
आद्य विष्णु विधातार ब्रह्माण च प्रणम्य च ॥ ४४ ॥

आलयार्चाविधि विष्णो प्रवक्ष्यामि यथाक्रमम् ।
विस्तराद्भूपरीक्षादि शृणुध्व सर्वमुत्तमा ॥ ४५ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे मुनिप्रश्नोत्तर नाम

प्रथमोऽध्याय ॥

---

## द्वितीयोऽध्याय

अत पर प्रवक्ष्यामि भूमे सम्यक् परीक्षणम् ।
भूपरीक्षणकाले तु यजमानोऽथ भक्तिमान् ॥ १ ॥

आचार्य वरयेत्पूर्व सर्वकार्योपदेशकम् ।
वैखानसेन सूत्रेण निषेकादिक्रियान्वितम् ॥ ॥ २ ॥

विप्र वेदविदा श्रेष्ठ नित्यस्वाध्यायसयुतम् ।
शौचाचारसमायुक्त भक्त्यध्यात्मगुणैर्युतम् ॥ ३ ॥

तेन सूत्रविधानेन नित्यहोमसमन्वितम् ।
पत्न्यपत्ययुत शान्त नारायणपरायणम् ॥ ४ ॥

आलयार्चाविधेर्मन्त्रान् प्रयोगं तदनुक्रमम् ।
प्रायश्चित्तं च वेत्तारं समाहूयाभिपूज्य च ॥ ५ ॥
एतैर्गुणैः सुसंपन्नमाचार्यं वरयेद्गुरुम् ।
हीनातिरिक्तदीर्घाङ्गं कुब्जमन्धं च वामनम् ॥ ६ ॥
क्षयापस्मारकुष्ठैश्च पापरोगैः समन्वितम् ।
क्रूरं मत्सरिणं षण्डं पाषण्डं बधिरं तथा ॥ ७ ॥
उन्मादेन युतं स्तेनं नास्तिकं शौचवर्जितम् ।
विष्णुभक्तिविहीनं च चलचित्तं च वर्जयेत् ॥ ८ ॥
आचार्यं वरयित्वैव तेनोक्तं सर्वमाचरेत् ।
कर्मेदं मे कुरुष्वेति याचेताचार्यमादरात् ॥ ९ ॥
आचार्यो यजमानेन भूमिं सम्यक् परीक्षयेत् ।
अङ्कुरानर्पयित्वैव शिल्पशास्त्रविशारदम् ॥ १० ॥
शिल्पिनं च समाहूय पूर्वपक्षे दिने शुभे ।
यजमानो गुरुश्चैव देवदेवं समर्च्य च ॥ ११ ॥
प्रसीदेति प्रणम्यैवं भक्त्या कार्यं समारभेत् ।
तुलसीभिः समायुक्ता कुशैर्वापि समायुता ॥ १२ ॥
क्षीरवृक्षवती चापि सपद्मसरसीयुता ।
प्रदक्षिणोदका वापि श्वेता वा पीतवर्णिनी ॥ १३ ॥
प्रागुदक्प्रवणा वापि विष्णोर्भूमिः प्रकीर्तिता ।
शुद्धां भूमिं खनित्वा तां तं मृदा पूरयेत्पुनः ॥ १४ ॥
अधिकं चेच्छुभं विद्यान्न्यूने न्यूनं समे समम् ।
तत्र दक्षिणतः पार्श्वे गौळी स्यात्सुस्वरा यदि ॥ १५ ॥

तत्र वृद्धिरविघ्नश्च देवस्यापि रतिर्भवेत् ।
जयानन्दाहेरत्यादिशुभशब्दा शुभावहा ॥ १६ ॥

अ ये शुभैर्निमित्तैश्च तद्वृद्धिमुपलक्षयेत् ।
ग्रामस्येत्याहता शुद्धा भूमि स्वा चाऽथवा भवेत् ॥ १७ ॥

पश्चिमे प्रवणा रक्ता ब्रह्मण परिकीर्तिता ।
दक्षिणे प्रवणा कृष्णा रुद्रस्य समुदाहृता ॥ १८ ॥

आदौ ब्रह्ममुखाज्जाता ऋषयो ब्राह्मणा मता ।
ऋषिगोत्रक्रमायाता ब्राह्मणाश्च यथाविधि ॥ १० ॥

ब्राह्मण्या ब्राह्मणाज्जातो विधिना मात्र ईरित ।
स चोपनीत सावित्रीयुक्तस्तु ब्राह्मणो भवेत् ॥ २० ॥

स चैव शाखाध्यायी तु श्रोत्रियश्चेति कीर्त्यते ।
गृहस्थ पाकयज्ञैश्च यष्टाऽनूचान उच्यते ॥ २१ ॥

हविर्यज्ञैश्च यष्टा तु भ्रूण इत्यभिधीयते ।
सोमयज्ञैश्च यष्टा चेदपि कल्प इतीरित ॥ २२ ॥

सर्वैर्युक्तश्चतुर्वेदी भवेच्च ऋषिरेव हि ।
नारायणपरो योगी निर्द्वन्द्वो मुनिरुच्यते ॥ २३ ॥

एवमष्टविधा विप्रास्तत्संस्कारविशेषत ।
विप्राणा वेदविद्याना नित्यस्वाध्यायिनामपि ॥ २४ ॥

पत्न्यपत्ययुताना च साग्नीना नित्यहोमिनाम् ।
शौचाचारयुताना च विष्णोर्नित्यार्चनावताम् ॥ २५ ॥

वास्तुविन्यासविधिना ग्राम सम्यक् प्रकल्प्य च ।
आदौ विष्णोश्च देवाना देश च परिकल्पयेत् ॥ २६ ॥

बालालयं प्रकल्प्यैव गृहाणि परिकल्पयेत् ।
विष्ण्वालयविहीने तु तद्देशे न वसेद् बुधः ॥ २७ ॥

विष्ण्वालयविहीनश्चेत्स देशस्त्वासुरः स्मृतः ।
ग्रामादिषु च सर्वेषु जनयुक्तेषु वास्तुषु ॥ २८ ॥

तद्वास्तुरज्जुपातादिदोषनाशाय पुष्टये ।
श्रियो वृद्ध्यै प्रजावृद्ध्यै धनधान्यविवृद्धये ॥ २९ ॥

भूम्यादिसर्ववृद्ध्यै च वेदवैदिकवृद्धये ।
वैखानसविधानेन वैदिकेनैव मार्गतः ॥ ३० ॥

प्रतिष्ठाप्य हरिं यत्नात्कारयेदर्चनं क्रमात् ।
तद्वास्त्वङ्गालये विष्णुं तान्त्रिकेण न चार्चयेत् ॥ ३१ ॥

विधिस्तु वेदमूलश्च दीक्षायुक्तस्तु तान्त्रिकः ।
ग्रामस्य पश्चिमे चापि ब्रह्मसूत्रात्तथोत्तरे ॥ ३२ ॥

देवदेवस्य विष्णोस्तु विमानं प्राङ्मुखं वरन् ।
कारयित्वा विधानेन प्रजानामभिवृद्धये ॥ ३३ ॥

स्थापयेद्देवमासीनं स्थितं वा शयितं बुधः ।
ऊर्जाल्पवत्रकं वापि श्रीभद्रं स्वस्तिकं तु वा ॥ ३४ ॥

सहस्रविप्रसम्पूर्णे ग्रामे पश्चिमतो दूरे ।
विमानं त्रितलं कुर्यादादिभूमिघनं तथा ॥ ३५ ॥

मध्ये तले समासीनं देवीभ्यां स्थापयेद्धरिम् ।
सहस्रानीकविप्रे तु तलयोरादिमध्ययोः ॥ ३६ ॥

आद्ये चैव समासीनं मध्यमे शयितं हरिम् ।
स्थितं वा श्रीमहीयुक्तमूर्ध्वे तु स्थापयेद्धरिम् ॥ ३७ ॥

सहस्रविप्रवासे तु ग्रामे तदधिकेऽपि च ।
तन्मध्य ब्रह्मभाग तु चतुर्भाग विभज्य च ॥ ३८ ॥

तद्भागे चैव वाय ये विमान प्राङ्मुख वरम् ।
पञ्चगर्भगृहैर्युक्त त्रितल परिकल्पयेत् ॥ ३९ ॥

विमाने पञ्चमूर्तीस्तु सुखासीना स्थितास्तु वा ।
विधिना स्थापयेत्पश्चादर्चयेदभिवृद्धये ॥ ४० ॥

उत्तमोत्तममित्याहु पञ्चमूर्त्यर्चन बुधा ।
सहस्रविप्र यूनेऽपि तथा ग्रामस्य मध्यमे ॥ ४१ ॥

अशक्तश्चैकमूर्ति वा स्थापयेन्मध्यम तु तत् ।
तस्यालयस्योत्तरत पार्श्वे दक्षिणतोऽथवा ॥ ४२ ॥

आचार्यस्यार्चकाना च गृहाणि परिकल्पयेत् ।
पूर्वे यद्यालय कुर्यात्स्थित प्रत्यङ्मुख हरिम् ॥ ४३ ॥

दक्षिणे चेत्स्थित वापि शयान चाप्युदङ्मुखम् ।
देवीयुक्त शयान च दक्षिणामुखमुत्तरे ॥ ४४ ॥

सर्वत्र शयन श्रेष्ठ हरेरित्याह वै भृगु ।
ग्रामप्रेक्ष हरि कुर्याद्दूर कुर्यात्पराङ्मुखम् ॥ ४५ ॥

शुभदा हरिदृष्टि स्यात् हरो दृष्ट्या विनाशयेत ।
कोणे दक्षिणदृष्ट्यैव हरि पश्यन्तमाचरेत् ॥ ४६ ॥

बाह्ये तटाकमध्ये वा पार्श्वेऽ यत्र मनोरमे ।
प्राग्द्वारमुत्तम विष्णोर्मध्यम पश्चिमामुखम् ॥ ४७ ॥

अधम चोत्तरद्वार दक्षिणाभिमुख तथा ।
आग्नेयादिषु कोणेषु द्वार नेव विधीयते ॥ ४८ ॥

पश्चिमे मध्यमे कुर्याद्यत्नाद्देवालयं हरे ।
शक्तो भवत्या यदीच्छेच्चेद् यत्रालयमाचरेत् ॥ ४९ ॥
एवं भवत्येव राजा च राजधानीं च कारयेत् ।
नगरे पश्चिमे कुर्यात्पत्तने खर्वटेऽपि वा ॥ ५० ॥
कण्टके कुटिके वापि विमानं पश्चिमे तथा ।
अन्यदेशेषु कुर्याच्चेत्पञ्चमूर्तींविनाचरेत् ॥ ५१ ॥
कारयेदन्यदिग्भागे पञ्चमूर्तिविवर्जितम् ।
नद्यास्तीरे समुद्रस्य तीरे वापि वनाश्रये ॥ ५२ ॥
शैलाग्रे शैलपार्श्वे वा विमानं कारयेद्बुधः ।
अन्यत्रैवार्चकानां च निवासः पार्श्वतो भवेत् ॥ ५३ ॥
ब्राह्मणानां निवासो यः स ग्रामः सम्प्रकीर्तितः ।
विप्रश्रेष्ठनिवासस्तु सोऽग्रहार इतीर्यते ॥ ५४ ॥
राज्ञो वा सर्वभृत्यादिनानाजातिसमायुतम् ।
नगरी राजधानीति राजवेश्मेति च स्मृतम् ॥ ५५ ॥
वणिजां तु निवासस्तु नगरं चेति कीर्त्यते ।
द्वीपान्तरागतद्रव्यक्रयविक्रयकौशलम् ॥ ५६ ॥
समुद्रतीरपार्श्वस्थं पत्तनं समुदाहृतम् ।
सर्वेषां वणिजां वासः खर्वटाख्यमिति स्मृतम् ॥ ५७ ॥
एतद्विधिकृतं यत्तत्तेषामेव तु दण्डकम् ।
शूद्राणामेव वासस्तु कुटिकं परिभाषितम् ॥ ५८ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे भूपरीक्षालयदेशविधिर्नाम द्वितीयोऽध्यायः ॥

## तृतीयोऽध्याय

अत पर प्रवक्ष्यामि कर्पणे लक्षण परम् ।
मासे चाश्वयुजे वापि कार्तिकये मासि वा पुन ॥ १ ॥

यजमानानुकूलर्क्षे शुक्लपक्षे दिने शुभे ।
यत्र देवालय कुर्यात्ता भूमि कर्षयेच्छुभाम् ॥ २ ॥

पञ्चहस्तादिभेदेपु यथेष्ट शक्तितो बुध ।
शास्त्रेणैव विनिश्चित्य विमान मण्टपादि च ॥ ३ ॥

मानाङ्गुलेन मानेन यावद्विस्तारमालयम् ।
गोपुरावरणै सर्वैर्युक्त यावच्चतुर्दिशम् ॥ ४ ॥

तावद्भूमि समाहृत्य शल्यगुल्मतृणानि च ।
व्यपोह्य शोधयित्वैव समीकरणमाचरेत् ॥ ५ ॥

विधिना तद्दिनात्पूर्वमङ्कुरानर्पयेत्क्रमात् ।
पञ्चताल हल कुर्याच्चतुस्तालमपि तथा ॥ ६ ॥

क्षिणि द्वादशताल च खदिरेणासनेन वा ।
युग द्वादशताल च वेणुना चम्पकेन वा ॥ ७ ॥

षट्प्रादेश प्रतोद च शेप युक्त्यैव कारयेत् ।
यजमानो गुरुश्चापि स्नात्वा स्नानविधानत ॥ ८ ॥

यजमानगृहे देवमावाह्याभ्यर्चयेत्क्रमात् ।
विष्वक्सेन च वीश च चक्र चापि समर्चयेत ॥ ९ ॥

हवि सम्यङ्निवद्यैव भक्त्या दत्त्व प्रणम्य च ।
पायसान्न समश्नीयाद्दत्विग्भि सह बान्धवै ॥ १० ॥

रूपयौवनसम्पन्ना वस्त्रैराभरणैरपि ।
श्वेतगन्धैश्च माल्यैश्च दर्शनीयामलङ्कृताम् ॥ ११ ॥

स्त्रियमाहूय तद्धस्ते दक्षिणे कमलं नवम् ।
वामे दीपं च दत्त्वैनामग्रतो गमयेत्स्त्रियम् ॥ १२ ॥

तूर्यघोषयुतं गत्वा तां भूमिं सम्प्रविश्य च ।
स्तोत्रैश्च तूर्यघोषैश्च जयशब्दैः समन्वितः ॥ १३ ॥

तत्र पश्चिमदेशे तु धान्यैः पीठानि कल्पयेत् ।
देवमावाह्य चाभ्यर्च्य हविः सम्यङ् निवेदयेत् ॥ १४ ॥

वीशं प्रत्यङ्मुखं पूर्वे दक्षिणे चक्रमुत्तरे ।
निग्नरसेन समभ्यर्च्य हविः सम्यङ् निवेदयेत् ॥ १५ ॥

वृषौ श्वेतौ तु रक्तौ वा सम्पूर्णाङ्गावरोगिणौ ।
स्वर्णशृङ्गौ रौप्यखुरौ पश्चिमे स्थापयेत्ततः ॥ १६ ॥

आचार्यो यजमानेन वस्त्राद्यैरपि पूजितः ।
करके तोयमादाय प्रादक्षिण्यवशेन च ॥ १७ ॥

वैष्णवेनैव मन्त्रेण धारया परितोऽपि च ।
सम्प्रावत्करकात्तोयं सीमान्तं तत्र निर्णयेत् ॥ १८ ॥

मौञ्जीरज्जुं समादाय प्राङ्मुखं प्रयतो वृषौ ।
युगं च लाङ्गले न्यस्य रुद्रमन्त्रेति बन्धयेत् ॥ १९ ॥

विष्णुसूक्तं समुच्चार्य पश्चिमाद्येव तद्भुवम् ।
किञ्चित्तु कृषणं कृत्वा पुनराहूय कर्षकम् ॥ २० ॥

अलङ्कृतेन तेनैव सर्वत्रापि च कर्षयेत् ।
पश्चिमादि तदारभ्य दक्षिणोत्तरतः क्रमात् ॥ २१ ॥

सम्यग्भूकर्षणं कृत्वा गावस्तत्र निवासयेत् ।
पश्चादन्यदिने वापि द्वितीयं कर्षयेत्तथा ॥ २२ ॥

कृष्टभूम्या तु सर्वत्र बीजानि च निवापयेत् ।
शालिव्रीहियवान् मुद्गान् प्रियङ्गून् सर्षपानपि ॥ २३ ॥

तिलान् मापान्मसूराश्च गोधूमान् षाष्टिकानपि ।
शुद्धान् कुलुत्थाश्चादाय सोमं राजानमित्यत ॥ २४ ॥

अभिमृश्य च सर्वाणि विष्णुसूक्तं समुच्चरन् ।
सर्वत्रावापनं कुर्यादथ वारुणमन्त्रत ॥ २५ ॥

जलसेकं तत कृत्वा रक्षां सर्वत्र कारयेत् ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे बीजावापनविधिर्नाम
तृतीयोऽध्याय ॥

---

## चतुर्थोऽध्यायः

अत पर प्रवक्ष्यामि बालालयविधिं क्रमात् ।
यत्र मूलालयं कुर्यात्तस्मादैशान्यगोचरे ॥ १ ॥

सौम्ये वायव्यदेशे वा यथेष्टं शक्तित शुभम् ।
पञ्चहस्तादहीनं च तरुणालयमारभेत् ॥ २ ॥

पञ्चहस्ताद्विहीने तु न रमेत हरि पर ।
बालालयं मृदा कुर्यात्तु तत्र शिलेष्टकै ॥ ३ ॥

मध्ये त्रिवेदीसहितमर्चापीठं च कारयेत् ।
विमानमादौ निश्चित्य यजमानस्य शक्तित ॥ ४ ॥

विमानस्यानुरूपं हि ध्रुवबेरं च कारयेत् ।
देवीभ्यां सहितं बिम्बमासीनं स्थितमेव वा ॥ ५ ॥

नवभेदेष्वथैकं च प्रोक्तलक्षणसंयुतम् ।
ध्रुवबेरानुरूपं तु कौतुकं कारयेद् बुधः ॥ ६ ॥

अथवा कौतुकं कृत्वा कौतुकस्यानुरूपतः ।
ध्रुवं तस्यानुरूपं च विमानं कारयेत्पुनः ॥ ७ ॥

सद्यः कर्ताऽप्यशक्तो वा प्रथमे तरुणालये ।
यथालाभेन मानेन दारवं बिम्बमाहरेत् ॥ ८ ॥

अश्वत्थेनाथवा कुर्यात् ध्रुवबेरोक्तदारुणा ।
बिम्बं सम्यक् समादाय स्थापनारम्भमाचरेत् ॥ ९ ॥

स्थापनादिवसात्पूर्वमङ्कुरानर्पयेत्क्रमात् ।
प्रतिष्ठोक्तगुणैर्युक्तान्नृत्विजो वरयेत्क्रमात् ॥ १० ॥

वास्तुहोमाङ्गहोमौ च हुत्वा चैवाक्षिमोचनम् ।
कृत्वा च विधिना पश्चात्तद्बिम्बमधिवासयेत् ॥ ११ ॥

बालालयस्याभिमुखे यागशालां प्रकल्प्य च ।
अग्नीनां पञ्च कुण्डानि परितः परिकल्पयेत् ॥ १२ ॥

आलयस्योत्तरे रात्रौ वास्तुहोमश्च हूयते ।
पञ्चाग्नीनामथाघारं जुहुयाच्च यथाविधि ॥ १३ ॥

तेषामाघारहोमान्ते बिम्बमानाय तत्र वै ।
जलेन कुम्भमापूर्य वस्त्रयुग्मेन वेष्टयेत् ॥ १४ ॥

सौवर्णमङ्गलादीनि निक्षिप्य ध्यानमाचरेत् ।
कुम्भे देवेशमावाह्य अग्रे बिम्बं निधाय च ॥ १५ ॥

कलशै स्नपयित्वैन वस्त्राद्यैरपि भूषयेत् ।
श यावेद्यास्तु मध्ये च व्रीहिराशि विकीर्य च ॥ १६ ॥

पञ्चशयनाद्यास्तीर्य पुण्याह वाचयेत्पुन ।
प्रतिसराव धा कृत्वा शयने शाययेद्विभुम् ॥ १७ ॥

होल प्रशस्य सभ्याग्नौ दवानावाह्य तत्क्रमात् ।
निर्वाप च तथा कुर्यादाज्येन जुहुयात्पुन ॥ १८ ॥

पञ्चाग्निपु च होम च यथोक्त जुहुयु क्रमात् ।
प्रभाते विधिना स्नात्वा ऋत्विग्भि सहितो गुरु ॥ १० ॥

आचार्यस्थापकादिभ्यो यजमानो मुदान्वित ।
यथोक्तदक्षिणा दद्यात्सोत्क दैवसन्निधौ ॥ २० ॥

आचार्य स्थापकैर्युक्तश्चरराशौ विशेषत ।
देव कुम्भ समानीय बालागार प्रविश्य च ॥ २१ ॥

रत्नन्यास विना पीठे मन्त्रेण स्थापयेत्प्रभुम् ।
दक्षिणे चोत्तरे देव्यौ श्रीभूम्यौ स्थापयेद्बुध ॥ २२ ॥

कुम्भाद्बिम्बे च तच्छक्ति जलेनावाह्य मन्त्रत ।
आसनादिभिरभ्यर्च्य हविस्तत्र निवेद्य च ॥ २३ ॥

धात्रादिद्वारदेवाश्च द्वारि तद्द्वारपालकान् ।
विष्वक्सेन च गरुड श्रीभूत भूतनायकम् ॥ २४ ॥

तत्तद्देशे समावाह्य नाम्नाभ्यर्च्य बलि ददेत् ।
उक्तमन्त्रैर्विधानेन देवानिन्द्रादिकानपि ॥ २५ ॥

तत्तद्देशे समावाह्य नित्य ताश्च समर्चयेत् ।
आवाहनविसर्गौ च निषिद्धौ तरुणालये ॥ २६ ॥

नित्यार्चनविधानेन नित्य देवेशमर्चयेत् ।
प्रतिष्ठोक्तक्रमेणैव शिष्ट सर्व समाचरेत ॥ २७ ॥

पञ्चमूर्तिप्रतिष्ठा चेच्चूलिकासहित शुभम् ।
मध्ये गर्भयुत कृत्वा गर्भागारे परे पद ॥ २८ ॥

तत्र मानुषभागे तु सोन्नत कारयेत्स्थलम् ।
ऊर्ध्वं तल समुद्दिश्य तत्र देव समर्चयेत् ॥ २९ ॥

मध्यमे विष्णुमूर्ति च पुरुष मुखमण्टपे ।
सत्य दक्षिणतो देवमच्युत पश्चिमे तथा ॥ ३० ॥

उत्तरे ह्यनिरुद्ध च चूलिकाया यथाक्रमम् ।
पञ्चमूर्तिप्रतिष्ठोक्तविधिना स्थापये द्बुध ॥ ३१ ॥

यथोक्तपञ्चमूर्तीनामर्चन च समाचरेत् ।
गुरवे चाथ ऋत्विग्भ्य पृथग्दद्याच्च दक्षिणाम् ॥ ३२ ॥

ग्रामादिषु च सर्वत्र सौम्यमूर्ति जगत्पतिम् ।
पूर्व वै स्थापयेद्विष्णु सर्वसपत्समृद्धये ॥ ३३ ॥

रुद्रादीनन्यदेवाश्च स्थापयेच्च तत परम् ।
तद्ग्रामादिषु विप्राद्या प्रविशेयुर्गृहाणि च ॥ ३४ ॥

यद्य यथा भवेत्तत्र वृद्धिर्नैव भवेत्तत ।
बालालयेऽर्चन कुर्वन् विमान कारयेद्बुध ॥ ३५ ॥

एतत्साम्रतमित्युक्त शक्त साम्रतमाचरेत् ।
राज्ञो ग्रामस्य शक्तानामन्यथा तु विपद्भवेत् ॥ ३६ ॥

बालालय विना पूर्वमालयारम्भण तु यत् ।
तत्तु हारकमित्युक्तमशक्तानामिद स्मृतम् ॥ ३७ ॥

यजमान प्रसन्नात्मा नवभेदविधानत ।
ऋत्विगुक्तगुणैर्युक्तानर्चकान् परिचारकान् ॥ ३८ ॥

प्रधानाचार्यपूर्वं तान् वरयित्वा च तै क्रमात ।
प्रतिष्ठातप्रभृत्येव भक्त्या यत्नात्स्वशक्तित ॥ ३९ ॥

नित्यार्चनमविच्छिन्न कारयेत्तु विधानत ।
नित्यार्चने तु विच्छिन्ने यजमानो विनश्यति ॥ ४० ॥

आचार्यस्थापकादीनामर्चाहीने महद्भयम् ।
आद्योऽचकोऽथ पुत्रादिस्तन्नियुक्तोऽथवार्चयेत् ॥ ४१ ॥

ग्रामाङ्गविहिता पूजा विच्छिन्ना चेत्प्रमादत ।
तद्ग्रामस्य विनाश स्यात्तस्मान्नित्य समर्चयेत ॥ ४२ ॥

अविच्छिन्नार्चनाय च भूमिभोग च कल्पयेत ।
हविषश्चोपदशाज्यगन्धा च मुखवासयो ॥ ४३ ॥

धूपदीपार्घ्यद्रव्याणा पुष्पगन्धाक्षतान् प्रति ।
नवभेदेष्वथैकैक निश्चित्य परिकल्प्य च ॥ ४४ ॥

आचार्यस्यार्चकाना च परिचारकसयुतम् ।
भूमिभोगै सुसम्पन्ना दक्षिणा परिकल्पयेत् ॥ ४५ ॥

सङ्क्रान्त्या श्रवणे चैव द्वादश्यो पर्वणोरपि ।
जन्यस्मिन् पुण्यनक्षत्रे विशेषेणार्चनाय च ॥ ४६ ॥

हविषा स्नपनादीनामुत्सवस्य तथैव च ।
नवकर्मक्रियार्थं च प्रायश्चित्तक्रिया प्रति ॥ ४७ ॥

वाद्यघोषणकर्तॄणा भूमिभोगाश्च शक्तित ।
शुश्रूषकाणा भक्ताना भोजनार्थं च कल्पयेत् ॥ ४८ ॥

सर्वमाचार्यहस्ते तु जलेनैव ददेत्ततः ।
देवदेवस्य हस्ते तु दत्तमेव न संशयः ॥ ४९ ॥

द्विजाग्रहारे विप्राद्याः परमं विष्णुमव्ययम् ।
वैखानसविधानेन प्रतिष्ठाप्य प्रयत्नतः ॥ ५० ॥

सायं प्रातश्च होमान्ते तेनैव विधिना बुधाः ।
नित्यं भक्त्यार्चनं कुर्युरैहिकामुत्रसिद्धये ॥ ५१ ॥

कुर्याच्चेद्बालकं मार्गमशक्तो भक्तिसंयुतः ।
भक्तिमेव पुरस्कृत्य विनैव तरुणालयम् ॥ ५२ ॥

पूर्वं विमानं कृत्वैव ध्रुवबेरं च कौतुकम् ।
कारयित्वा विधानेन प्रतिष्ठां कारयेद्बुधः ॥ ५३ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे बालालयविधिर्नाम चतुर्थोऽध्यायः ॥

---

## पञ्चमोऽध्यायः

उभेषु सर्वसस्येषु पुष्टेषु च दिने शुभे ।
सस्यस्य पश्चिमे देशे विष्णवसेनं समर्चयेत् ॥ १ ॥

चक्रं चाशं च संपूज्य गाश्च तत्र समानयेत् ।
प्राङ्मुखास्ताः स्थापयित्वा तानि सस्यानि सर्वशः ॥ २ ॥

गोदानसूक्तमुच्चार्य गोगणेभ्यो निवेदयेत ।
सद्य कर्तुमशक्तो वा यजमानोऽथ तद्भुवम् ॥ ३ ॥
एव ता कर्षयित्वैव दर्भादीनि तृणानि च ।
बहुलान्येव सहृत्य भूमौ सर्वत्र तत्र वै ॥ ४ ॥
विप्रकीर्य च गा सर्वा सवत्सा सप्रवेशयेत ।
तृणेषु गोभिर्ग्रस्तेषु तृणान्यास्तृणुयात्पुन ॥ ५ ॥
गोगणैरपि सक्रान्ता भूमि शुद्धा भवेत्तत ।
गोमूत्रैर्गोमयैर्दुग्धैर्वत्सास्यनिसृतैरपि ॥ ६ ॥
स्वय च पतितै रोमै फनै श्वासैस्तथैव च ।
यातैश्च शयनैस्तासा खुरै पूर्णैश्च पादनै ॥ ७ ॥
भूमि शुद्धा भवेदेवमिति धर्मविदो विदु ।
देव बालालयेऽभ्यर्च्य हवि सम्यड्निवेदयेत् ॥ ८ ॥
ता भूमि सप्रविश्यव नवसूत्रान् प्रमार्थ च ।
प्रागग्रैरुत्तराग्रैस्तैश्चतु षष्टिपदानि च ॥ ९ ॥
कल्पयित्वा च तद्देवानभ्यर्च्य बलिमर्पयेत् ।
ऐशा यामीश पर्ज य जयन्त च समर्चयेत् ॥ १० ॥
महे द्रादित्यसत्याश्च भृशमप्यन्तरिक्षकम् ।
प्राच्या बाह्ये समभ्यर्च्य सूत्रसन्धो बलि ददेत् ॥ ११ ॥
अग्नि वितथमुष्णाशु ग्रहक्षतयमावपि ।
गन्धर्व भृङ्गराज तमृषिणा निर्ऋतिं तथा ॥ १२ ॥
दौवारिक च सुग्रीव पुष्पदन्त सरित्पतिम् ।
असुर शोषण राग जवन च सुपूजयत् ॥ १३ ॥

नाग मुख्य च भल्लाट सोममर्गलमेव च ।
अदितिं सूरिदेव च सूत्रसंधौ समर्च्य च ॥ १४ ॥

आग्नेयादि तथैशान्त बाह्ये चैषां बलिं ददेत् ।
ब्रह्मार्यमा दण्डधरो पाशभृद्धनदस्तथा ॥ १५ ॥

मध्यमादिचतुर्दिक्षु पञ्चैतानपि पूजयेत् ।
सवितार च सावित्रमाग्नेय्यां दिशि पूजयेत् ॥ १६ ॥

कोणे तु नैर्ऋते चेन्द्रमिन्द्राज च समर्चयेत् ।
वायव्ये च तथा कोणे रुद्र रुद्राजमर्चयेत् ॥ १७ ॥

ऐशान्येऽप्यर्चयेदाप आपवत्स तथैव च ।
ब्रह्मा नवपदस्येशो मध्ये तत्परितोऽष्टसु ॥ १८ ॥

अर्यमाद्याश्च चत्वार पृथक् षट्पददेवता ।
साविञ्याद्यास्तथाष्टौ च प्रत्येक द्विपदाधिपा ॥ १९ ॥

देवा द्वात्रिंशदीशाद्या प्रत्येक पददेवता ।
चतुःषष्टिपदाना च चत्वारिंशच्च देवता ॥ २० ॥

सधौ सन्धौ समभ्यर्च्य सवत्सपूर्वैर्बलिं ददेत् ।
गर्भाल्यप्रदेशे च पञ्चसूत्रै प्रसारितै ॥ २१ ॥

प्रागग्रैरुत्तराग्रैश्च पदानि परिकल्पयेत् ।
नाग भूत च यक्ष च दुर्गा घोटमुखा तथा ॥ २२ ॥

धात्रीं च वपुष चैव राक्षस च तत परम् ।
जय कृष्ण मुरण्ड च शिव प्राण कविं तथा ॥ २३ ॥

चक्र च पुरुहूत च विद्या यशसमित्यपि ।
भद्रा वेदभृत चैव तापस सज्ञुपामपि ॥ २४ ॥

निधा चैव ततो विद्वानमित पाञ्चभौतिकम् ।
प्रागग्रपञ्चस्थलेषु सन्धौ देवान समर्च्य च ॥ २५ ॥
तत्रस्थेभ्योऽन्यदेवेभ्य सर्वेभ्यश्च बलि ददेत् ।
श नो देवीति मन्त्रेण जल सर्वत्र सेचयेत् ॥ २६ ॥

सर्वदेवेभ्य इत्युक्त्वा बलि बाह्ये च कारयेत् ।
वास्तु स्वस्त्यस्तु सर्वत्र इत्युक्त्वा स्नावयेज्जलम् ॥ २७ ॥

विसृज्य देवान् तत्रस्थमर्चयेद्वास्तुपूरुषम् ।
द्वात्रिंशत्प्रस्थसपूर्ण खण्डस्फुटितवर्जितम् ॥ २८ ॥

नवकुम्भ प्रगृह्यैव सूत्रेण परिवेष्ट्य च ।
नादेयैरद्भिरापूर्य तस्मिन् वरुणमर्चयेत् ॥ २९ ॥

कुम्भ सन्यस्य तत्रैव पल्लवाङ्कुरभूषितम् ।
प्रभाते च गुरु स्नात्वा ता भूमि सप्रविश्य च ॥ ३० ॥

गर्भालये ब्रह्मपद ब्रह्माणमभिपूज्य च ।
तत्रैव हस्तमात्र तु निम्न विस्तारमेव च ॥ ३१ ॥

अवट च खनित्वैव तत्कुम्भ पार्श्वतो न्यसेत् ।
विष्वक्सेन च देवेशमर्चयित्वा प्रणम्य च ॥ ३२ ॥

कुम्भस्थेन जलेनैव वारुण मन्त्रमुच्चरन् ।
अवट पूरयित्वा तु फुल्ल पद्म समाहरेत् ॥ ३३ ॥

तत्पद्म तज्जले न्यस्य निमित्तमुपलक्षयेत् ।
दक्षिणावर्तगे दृष्टे जले तस्मिन् विशेषत ॥ ३४ ॥

प्रदक्षिणगते पद्मे महादिक्षु समाश्रिते ।
शुभ तत्र विजानीयाद्विदिशासु समाश्रिते ॥ ३५ ॥



तस्मिन्नधोमुखे पद्मे वामावर्ते गतेऽपि च ।
अशुभं तु भवेत्तेन शान्तिस्तत्र सुहूयताम् ॥ ३८ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे
चतुःषष्टिपददेवताविधिर्नाम
पञ्चमोऽध्यायः ॥

---

## षष्ठोऽध्यायः

अतः परं प्रवक्ष्यामि शृणुध्वं मुनिसत्तमाः ।
शिलेष्टकानां न्यासस्य प्रथमादिविधिक्रमम् ॥ १ ॥

अयने चोत्तरे कुर्याद्दक्षिणे वा त्वरान्वितः ।
मार्गशीर्षकमाघौ द्वौ निन्दितौ ब्रह्मणा पुरा ॥ २ ॥

तयोरपि च कर्तव्यं त्वरितेनेति केचन ।
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ॥ ३ ॥

न हि प्रतीक्षते मृत्युः कर्तव्यो धर्मसङ्ग्रहः ।
तस्मात्सर्वप्रयत्नेन देवकार्यं समाचरेत् ॥ ४ ॥

त्रीण्युत्तराणि रोहिण्या हस्तं स्वातिपुनर्वसू ।
श्रवणं वारुणं चैव मैत्रं सौम्यं तथैव च ॥ ५ ॥

युग्माश्च तिथयः सर्वाः प्रशस्ता रिक्तवर्जिताः ।
गुरुभार्गवचन्द्रज्ञवाराः सौम्याः प्रकीर्तिताः ॥ ६ ॥



चरराशि विवर्ज्यैव स्थिरराशि समाहरेत् ।
मेदिनीति च मन्त्रेण तद्देश खानयेद्बुध ॥ ७ ॥

शल्यान्यपोह्य विधिना यावत्तोयसमागमम् ।
शिलान्त वा खनित्वा तु शोधयित्वा समन्तत ॥ ८ ॥

वालुकाभि प्रपूर्यैव जलेन सहित शन ।
समा भूमि च कृत्वाऽथ यावत्सामा तन्निर्णयम् ॥ ९ ॥

तालोन्नता हस्तमात्रचतुरश्रा शिला शुभा ।
हस्तायामार्धविस्तारा भागोत्सेधाश्च शोभना ॥ १० ॥

इष्टका वाथ सगृह्य वारुणेनैव मन्त्रत ।
जलाधिवास कुर्वीत त्र्यहमेकाहमेव वा ॥ ११ ॥

तत प्रपा च कृत्वैव प्रमुख दक्षिणेऽथवा ।
पूर्वस्मिन्नेव दिवसे रात्रौ होम समाचरेत् ॥ १२ ॥

सूत्रे वैखानसे प्रोक्त वास्तुहोम यजत्तथा ।
वालुकोपरि तत्स्थाने पर्यग्नि चापि कारयेत् ॥ १३ ॥

प्राच्यामाहवनीयस्याप्यन्वाहार्यस्य दक्षिणे ।
प्रतीच्या गार्हपत्यस्य चावसथ्यस्य चोत्तरे ॥ १४ ॥

सभ्याग्नेर्मध्यमे चैव पञ्चाग्नीना पृथक् पृथक् ।
मृदा वा सिकताभिर्वा कुण्डान्येव प्रकल्पयेत् ॥ १५ ॥

उक्तेनैव विधानेन तेष्वाघार समाचरेत ।
आघारान्ते च होतव्य पञ्चस्वग्निषु वैष्णवम् ॥ १६ ॥

होतव्य पौरुष सूक्तमै द्रमाहवनीयके ।
आग्नेय च विधानेन व्याहृत्यन्त प्रति प्रति ॥ १७ ॥

अन्वाहार्ये विष्णुसूक्तं याम्यं नैर्ऋतिसंयुतम् ।
वैष्णवं गार्हपत्ये च वारुणं वायुदैवतम् ॥ १८ ॥

सौम्यमीशानदैवत्यमावसथ्ये च वैष्णवम् ।
सभ्ये च सर्वदैवत्यं विष्णुसूक्तं च वैष्णवम् ॥ १९ ॥

मध्ये मण्डलमालिप्य चतुरश्रं समं ततः ।
पञ्चवर्णैरलङ्कृत्य धान्यान्यपि विकीर्य च ॥ २० ॥

धान्योपर्युपधानेन वासांस्यास्तृणुयात् क्रमात् ।
ताः शिलावेष्टका वाथ सप्तभिः कलशैस्ततः ॥ २१ ॥

पुर आहवनीयस्य स्थापयेच्च विधानतः ।
वस्त्रैरावेष्ट्य ताः सर्वाश्चतुर्वेदाधिदैवताः ॥ २२ ॥

चतुर्वेदमयाश्चैव चतुरश्राः शिलाः शुभाः ।
वस्त्रे वस्त्रे पृथक् दिक्षु चेष्टका वाथ सन्न्यसेत् ॥ २३ ॥

पुण्याहान्तेऽथ बध्नीयादतः प्रतिसरानपि ।
शाययित्वैव ताः सर्वाः मन्त्रेण विधिकोविदः ॥ २४ ॥

वस्त्रेणोपरि सञ्छाद्य प्रत्येकं पुष्पसम्युतम् ।
ततः प्रभाते चाचार्यो यजमानसमन्वितः ॥ २५ ॥

स्नात्वा सम्यग् विशुद्धात्मा देवागारं प्रविश्य च ।
यजमानोऽथ धर्मात्मा देवदेवमनुस्मरन् ॥ २६ ॥

आचार्यं पूजयित्वा तु वस्त्राभरणपूर्वकैः ।
चतुरः स्थापकाञ्छुद्धानुक्तलक्षणसंयुतान् ॥ २७ ॥

पूजयित्वा विधानेन वस्त्रमाल्यानुलेपनैः ।
शिला वाथेष्टका वापि कुर्याद् ग्रामप्रदक्षिणम् ॥ २८ ॥

बालालयमलङ्कारैर्वाद्यघोषैश्च सयुतम् ।
स्वस्तिसूक्त समुच्चार्य देवस्थान प्रविश्य च ॥ २९ ॥

आचार्य शिल्पिभि सूत्र तत्र सम्यक् प्रसार्य च ।
द्वार सम्यग्विदित्वैव प्राग्द्वारादि यथाक्रमम् ॥ ३० ॥

द्वारस्य दक्षिणे भागे स्थापयेदिष्टका शिला ।
आत्मसूक्त च जप्त्वैव जपेन्नेकाक्षरादिकम् ॥ ३१ ॥

विराजोऽसीति तत्पश्चादग्निमीळ इति ब्रुवन् ।
ता शिलामुत्तराग्रा च पूर्वस्मिन सन्न्यसेद्गुरु ॥ ३२ ॥

इषेत्वोर्जेत्वेति जप पूर्वाग्र दक्षिणे न्यसेत् ।
अग्न आयाहि इत्युक्त्वा पश्चिमे चोत्तराग्रकम् ॥ ३३ ॥

श नो देवीति चोक्त्वा तु पूर्वाग्र चोत्तरे न्यसेत् ।
एतेन विधिना चैवमिष्टकाश्चापि विन्यसेत् ॥ ३४ ॥

ध्रुवसूक्त समुच्चार्य दृढीकरणमाचरेत् ।
मध्ये ब्राह्मे तथेन्द्रादि चैशान्यान्त यथाक्रमम् ॥ ३५ ॥

प्रतिष्ठोक्तैश्च मन्त्रैश्च नवरत्नानि विन्यसेत् ।
तथैव धातुबीजाश्च न्यसेत्कूर्मगजादिकम् ॥ ३६ ॥

शिला वाथेष्टकामूर्ध्वे ध्रुवसूक्तेन सन्न्यसेत् ।
आचार्यस्थापकादीनामृत्विजा दक्षिणा ददेत् ॥ ३७ ॥

ग्रामगर्भ न्यसेच्चेत्तु मध्ये विष्णवालये तथा ।
पश्चिमालयदेशे वा ग्रामगर्भ निधापयेत् ॥ ३८ ॥

श्रीदेव्यास्त्वालये वाथ सभास्थानेऽथवा न्यसेत् ।
पश्चाच्छिल्पिनमाहूय विधिज्ञमभिपूज्य च ॥ ३९ ॥

शिलाभिरिष्टकाभिर्वा दृढलक्षणसंयुताम् ।
उपरिष्टात्तु संयोज्य भित्तिं सौम्यां प्रकल्पयेत् ॥ ४० ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे
प्रथमशिलेष्टकाविधिर्नाम
षष्ठोऽध्यायः ॥

---

## सप्तमोऽध्यायः

अतः परं प्रवक्ष्यामि विमानानां विधिं क्रमात् ।
पञ्चहस्तविमानं यद्विष्णोस्तदधमाधमम् ॥ १ ॥

त्रिहस्तमध्यदेवानामधमाधममुच्यते ।
सप्तहस्तविमानं यदधमामध्यमं स्मृतम् ॥ २ ॥

नवहस्तकृतं यत्तदधमादुत्तमं भवेत् ।
हस्तानेकादशारभ्य चैकविंशतिकादधः ॥ ३ ॥

मध्यमादधमं मध्यमुत्तमं चाभिधीयते ।
त्रयोविंशतिकादूर्ध्वं पञ्चाशद्धस्तकान्तकम् ॥ ४ ॥

उत्तमादधमं मध्यमुत्तमं च त्रिधा भवेत् ।
इष्टं शक्तिमपेक्ष्यैव यथाशक्ति समारभेत् ॥ ५ ॥

शिलाभिरिष्टकाभिर्वा विमानं तु विधीयते ।
तस्यार्धं पादहीनं वा समं वा मुखमण्डपम् ॥ ६ ॥

चतुर्भागैकभागं वा पञ्चभागैकमेव वा ।
भित्तिमूलघनं प्रोक्तं गर्भे गर्भालयं विदुः ॥ ७ ॥

एकभूमिविमानस्य विस्तारात् द्विगुणोच्छ्रयम् ।
ज्ञात्वा तदुच्छ्रय तस्मादष्टभाग तु कारयेत् ॥ ८ ॥

एकभागमधिष्ठान द्विभाग पादवर्गकम् ।
प्रस्तरश्चैकभाग स्याद् ग्रीवा तस्यैकभागिका ॥ ९ ॥

शिखर तद्द्विभाग स्यात्स्थूपी चैकाशसयुता ।
एव षड्वर्गसयुक्त विमान सम्प्रशस्यत ॥ १० ॥

शिल्पशास्त्रोक्तमार्गेण शिल्पिभि कारयेत्क्रमात् ।
एकभूमिविमान तदधम परिचक्षते ॥ ११ ॥

द्वितल मध्यम प्रोक्तमुत्तम त्रितल भवेत् ।
अशक्तानामिद ज्ञेय शक्ताना त्वधिक विदु ॥ १२ ॥

तलैर्द्वादशभिर्युक्तमुत्तमोत्तममुच्यते ।
अशक्य तन्मनुष्याणा देवानामभिधायते ॥ १३ ॥

ब्रह्मा नलिनक विष्णोस्तलैर्द्वादशभिर्युतम् ।
विमान दृष्टवानब्धौ तत्रैवापूजयद्धरिम् ॥ १४ ॥

नलिनक सप्ततल पञ्चभूमियुत तु वा ।
त्रितल वा मनुष्याणामुत्तमोत्तममुच्यते ॥ १५ ॥

नलिनक तथा श्रीमत्स्वस्तिक च तथैव च ।
महापद्मविमान च पर्वताकृतिक तथा ॥ १६ ॥

विमान सर्वतोभद्र तथा पञ्चवसतकम् ।
श्रीप्रतिष्ठितक चापि विमान स्वस्तिक तथा ॥ १७ ॥

सोमार्धमङ्गनाकार तथा वै प्रालीनकम् ।
पद्माकार चित्रशिल्प सोमच्छद चतुष्पुटम् ॥ १८ ॥

ऊर्जलिनत्रक वापि न्रह्मवृत्त चतुर्मुरवम् ।
नन्दीविशालमष्टाङ्ग तथैवोत्पलफुल्लकम् ॥ १९ ॥

न न्द्यावर्त श्रियावृत्त तथा गान्धारपञ्चकम् ।
विष्णोरेतानि शस्तानि विमानानि प्रचक्षते ॥ २० ॥

नलीनकाल्यो विष्णोरुत्तमोत्तम एव तत् ।
पद्माकार चित्रशिल्प पर्वताकृतिक तथा ॥ २१ ॥

चतुर्मुखविमान च ब्रह्मवृत्त तथैव च ।
प्रनलीनविमान च गरुडाकारमेव च ॥ २२ ॥

ऊर्जाल्पत्रक चाष्टौ ब्रह्मणा निर्मितानि वै ।
विमान स्वस्तिक चापि श्रीप्रतिष्ठितक तथा ॥ २३ ॥

श्रीस्वस्तिकविमान च नन्द्यावर्त तथैव च ।
श्रियावृत्त महापद्म तथा गान्धारपञ्चकम् ॥ २४ ॥

तथैवोत्पलफुल्ल च विष्णुना निर्मितानि वै ।
नन्दीविशालमष्टाङ्ग वृषभाकारमेव च ॥ २५ ॥

चतुष्पुट तथा भद्र वृत्तमस्तकसधिकम् ।
अञ्जनाकारमप्येव पञ्जरामुखमेव च ॥ २६ ॥

वृत्तसौभद्रक चैव सर्वतोभद्रक तथा ।
विमान वृषभच्छन्दमुरगच्छन्दमेव च ॥ २७ ॥

कोष्ठ्यावृत्तविमान च भूतवैहारमेव च ।
रुद्रेण निर्मिता येतद्विमानानि तपोधना ॥ २८ ॥

अप्सरोमण्डप शुद्ध दिव्य पञ्चवस तकम् ।
माहेन्द्र स्वस्तिवृत्त च मायाबहुविकारकम् ॥ २९ ॥

उत्पल पङ्कलग्न च श्रीस्वस्तिकनिवेशनम् ।
वार्पी ब्रह्मसभा चैव तथैवोत्पलपत्रकम् ॥ ३० ॥

महापद्म महाच्छ द देववृत्त तथैव च ।
इन्द्रेणैतद्विमानानि निमितानि सुखार्थिना ॥ ३१ ॥

सोमच्छन्द सोमवृत्त बहुपत्र सुपौष्टिकम् ।
श्रीवत्साकृतिक घोण छ दवृत्त च वेदिकम् ॥ ३२ ॥

सिद्धयोग चतुर्वक्त्र कूटाकार विलोकनम् ।
कुम्भाकार च गान्धार तिलक स्वस्तिक तथा ॥ ३३ ॥

शशिवृत्त विशाल च तथा बालेन्दुक पुन ।
एतान्यपि विमानानि शशिना निर्मितानि वै ॥ ३४ ॥

वेदिक वेदिवृत्त च सोमघोण चतुर्मुखम् ।
आह्निक कीचक यानमग्निच्छन्दोरग तथा ॥ ३५ ॥

हस्तिपृष्ठ च नौवृत्त प्रमदालम्बक त्रिवृत् ।
ऋषभ मयूरवृत्त त्रिकूट शिल्पवृत्तकम् ॥ ३६ ॥

गोधाङ्ग मण्डुक चापि परिभ्रामणमस्तकम् ।
पाशिक पङ्कलग्न च तथैव गगनेचरम् ॥ ३७ ॥

शाह्निक रसवृत्त च निर्यूह परिबृंहितम् ।
गान्धर्व गगन चैव हरिच्छन्दमनन्तकम् ॥ ३८ ॥

वैनतेय विमान च भूताकारमिलावृतम् ।
एतानि सनकाद्यैस्तु मुनिभिर्निर्मितानि च ॥ ३९ ॥

षण्णवतिविमानानि कीर्तितानि पुरातनै '

पञ्च भद्र तथा चूर्ण चूलिक चेति तानि च ॥ ४० ॥

चतुर्भेदानि सर्वाणि विमानानि पृथक् पृथक् ।

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे विमानभेदविधिर्नाम

सप्तमोऽध्याय

---

## अष्टमोऽध्यायः

षड्वर्गसहित नित्य विमान दोषवर्जितम् ।
तत्र वस्तु मनीषा स्याद्देवताना विशेषत ॥ १ ॥

विमानाना च सर्वेषा सामान्यमिदमुच्यते ।
अधिष्ठान पादवर्ग प्रस्तरग्रीवकावपि ॥ २ ॥

शिखर स्थूपिका चेति षड्वर्गा इति कीर्तिता ।
अधिष्ठानादिवर्गेषु विभाग परिकीर्त्यते ॥ ३ ॥

उपान प्रथम ज्ञेय जगती कुमुद तथा ।
वलिका चापि कण्ट च तथाप्यधरपट्टिका ॥ ४ ॥

महापट्टी च विज्ञेया विज्ञेया चोर्ध्वपट्टिका ।
पादाश्चापि प्रमाणेन परिकल्प्या विशेषत ॥ ५ ॥

ताटी च तर्करी चैव कुम्भ च फलका तथा ।
बोधिका चोत्तरा चैव प्रतिपट्टी च वालिका ॥ ६ ॥

लम्बेष्टका च कण्ट च वेदिका च तथैव च ।
शालाकूट महानासी तथैव क्षुद्रनासिका ॥ ७ ॥

ग्रीवा शिखरकुम्भं च स्थूपिका च क्रमेण च ।
इत्युद्देशक्रमेणैव विमानाङ्गं प्रचक्ष्यते ॥ ८ ॥

निर्देशानपि वक्ष्यामि निबोधत पृथक् पृथक् ।
उपानमेकभागं स्यात्पञ्चांशा जगती तथा ॥ ९ ॥

कुमुदं च चतुर्भागमेकभागा तु वल्लिका ।
खण्डं द्विभागमुद्दिष्टमेका त्वधरपट्टिका ॥ १० ॥

पादेनैव समं द्वारं तदर्धं द्वारविस्तरम् ।
द्विभागा स्यान्महापट्टी तदर्धं चोत्तरपट्टिका ॥ ११ ॥

सर्वेषां च प्रमाणेन द्विगुणं गात्रमुच्यते ।
पादबन्धं निखण्डं च प्रतिखण्डं तथैव च ॥ १२ ॥

न च छिद्याद्विमानेषु तत्कर्ता तु विनश्यति ।
प्राणिरूपं न कर्तव्यं कण्ठे पादान् प्रवेशयेत् ॥ १३ ॥

पादाश्च त्रिविधा प्रोक्ता समाश्रयनिराश्रया ।
सिंहहंसगजव्याला पादानामाश्रया शुभा ॥ १४ ॥

हंसमाला कजेरुक्ता हरे सिंहाश्रया शुभा ।
गजाश्रया समाख्याता देवसेनापतेस्तथा ॥ १५ ॥

समवृत्तं तथैकान्तं गोकर्णं कोमलं तथा ।
नागहस्तं स्फुटवृत्तं तालवृन्तक एव च ॥ १६ ॥

एते सप्त पदा प्रोक्ता वृत्ता लोकपरिश्रुता ।
चतुरङ्गमवष्टब्धं वज्रं चतुरवन्तिकम् ॥ १७ ॥

तथा वायुपरीतं च षष्ठं च प्रियदर्शनम् ।
पिण्डिपादं षोडशाश्रं शलाका पिण्डिका तथा ॥ १८ ॥

एते च नव सम्प्रोक्ता पादा षोडशभेदका ।
मुक्ताफलाग्रपुष्पैर्वा वल्लीपत्रैर्विशेषत ॥ १९ ॥

पादाना कल्पयेद्रूपा परिमाणेन तत्त्ववित् ।
अष्टादश द्वादशाष्टौ वाङ्गुल्य पादविस्तर ॥ २० ॥

उत्तमान्तरहीनाना विमानाना प्रकल्पिता ।
कुम्भ ताटी पृथक्कार्या फलका च प्रमाणत ॥ २१ ॥

अयोन्य कण्ठमात्रेण भवेयुरविशेषत ।
प्रत्युत्तर च माला च लम्बवेदी तथैव च ॥ २२ ॥

पादविस्तारमात्रेण भवेदेतच्चतुष्टयम् ।
हसमाला कवेरुक्ता भूतमाला हरस्य तु ॥ २३ ॥

विद्याधराणा माला स्याद्धरेर्नारायणस्य तु ।
चतु षष्टिपद कृत्वा बाह्य च परिवर्जयेत् ॥ २४ ॥

द्वितीय शिखर विद्याद्वेद्ग्रीवा तृतीयकम् ।
कृत्वा पञ्चदशै पञ्च पादान् बाह्याविवर्जयेत् ॥ २५ ॥

शेषैश्च नवभिर्ग्रीवा कुर्याद्वा युक्तित शिर ।
हसमालासमा ज्ञेया कूटशालासमुन्नति ॥ २६ ॥

कूटशालासमा ज्ञेया परिवारालयोन्नति ।
ब्रह्मस्थान पद सम्यक् नवधा परिकल्पयेत् ॥ २७ ॥

मध्यम मकुट विद्यात्तावन्मात्रा तदुन्नति ।
तदूर्ध्वे पिण्डिकास्तिस्रस्तदूर्ध्वे च शिरोच्यते ॥ २८ ॥

पादद्वयेन शाला स्यादेक कूटमिहोच्यते ।
शालाया पार्श्वत पादाश्चत्वारश्चाष्ट वा स्मृता ॥ २९ ॥

द्वौ द्वौ पादौ महानास्य शेषा सिंहपदा स्मृता ।
कूटशाला महानासी पादधार्यो प्रकल्पयेत् ॥ ३० ॥

एव चोपरिभूमीना कूटशालाविधिक्रमम् ।
कूटशालान्तरे हारान् क्रमेणैव निवेशयेत् ॥ ३१ ॥

सिंहक्षुद्रमृगाश्वाना सर्वेष्वेव विधिक्रम ।
शाला स्यात्सर्वभूमीना गर्भागारसमापि वा ॥ ३२ ॥

तदर्धे कूटक प्रोक्त महानास्योऽपि तत्समा ।
विमानस्य तु विस्तारात्कलाशेन विहीनकम् ॥ ३३ ॥

सममध्यर्धपादोन प्रमुख कैश्चिदुच्यते ।
पादेनैव सम द्वार तदर्धे द्वारविस्तृतम् ॥ ३४ ॥

पादविस्तारयुग्मेन विमान समविस्तरम् ।
तदर्धे तस्य बाहुल्य तदर्धे च कवाटयो ॥ ३५ ॥

गर्भागार त्रिभागैक शालाना विस्तृत भवेत् ।
गर्भागारस्य विस्तार दशधा परिकल्पयेत् ॥ ३६ ॥

एकद्वित्रिभिरून वा सम वा पादमानकम् ।
अष्टभागैकहीन तु द्वारमान प्रकल्पयेत् ॥ ३७ ॥

तदर्धे विस्तृत प्रोक्त द्वारोत्सेध तु वेरकम् ।
कवाटबाहुल्यमुक्तमष्टम स्तभविस्तरम् ॥ ३८ ॥

द्विगुण स्तम्भविस्तार यामविस्तारमुच्यते ।
तदर्धे यामबाहुल्यमुक्तमेतन्मनीषिभि ॥ ३९ ॥

द्वादशाङ्गुलविस्तार स्तम्भस्यैकतल भवेत् ।
तलोन्नति परिज्ञाय द्वाभ्या द्वाभ्या विवर्धयेत् ॥ ४० ॥

एकेन वाथ द्वाभ्यां वा हीनाधिक्यं न दोषकृत् ।
षडूढम्तेन त्रिकं प्रोक्तं पादानामेकभूमिके ॥ ४१ ॥

भूमौ भूमौ यमेनैव पादायामं प्रवर्धयेत् ।

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे विमानालङ्कारो नामाष्टमोऽध्यायः ॥

---

## नवमोऽध्यायः

अतः परं प्रवक्ष्यामि विमानानां प्रभेदकम् ।
प्रणम्य सर्वलोकेशं चतुर्मूर्तिं चतुर्गुणम् ॥ १ ॥

यानि यच्छन्दतो ह्यासन्नङ्गोपाङ्गयुतानि च ।
तानि तच्छन्दतो विद्याद्विमानानि विशेषतः ॥ २ ॥

ब्रह्मच्छन्दमिति प्रोक्तं चतुरश्रविमानकम् ।
विष्णुच्छन्दमिति प्रोक्तमष्टाश्रकविमानकम् ॥ ३ ॥

षोडशाश्रं भवेदैन्द्रं रुद्रवास्तु निरश्रकम् ।
ग्रीवाशिखरकूटेषु भेदं च परिकल्पयेत् ॥ ४ ॥

अतः परं प्रवक्ष्यामि शिखराणां क्रियाविधिम् ।
शिरश्चतुर्विधं प्रोक्तं ब्रह्मणा परमेष्ठिना ॥ ५ ॥

अष्टाश्रं चतुरश्रं च शाला मण्डलमेव च ।
मण्डलं द्विविधं ज्ञेयं छत्रनिन्द्यप्रमानतः ॥ ६ ॥

पञ्चभाग द्विभाग वा सप्तभाग त्रयोऽथवा ।
नवभाग चतुर्भागमेकादशसु पञ्चकम् ॥ ७ ॥

त्रयोदशसु षड्भागमेकादशसु सप्तकम् ।
सप्तदशाष्टभाग वा विस्तारार्धमिति स्मृतम् ॥ ८ ॥

स्थानाभिवृद्धिकामश्चेन्नगरल विनिक्षिपेत् ।
कुम्भादधस्ताद्गलाना स्थान प्रोक्त महर्षिभि ॥ ९ ॥

विमानप्रकृतेरू र्ध्वमुत्तरार्ध च यद्भवेत् ।
विमानस्य महाद्वार दशभाग च कारयेत् ॥ १० ॥

अथवा तन्महाद्वारमष्टभाग समाचरेत् ।
अधश्चैक भुजङ्ग स्यात्तङ्गोऽप्येकमूर्ध्वत ॥ ११ ॥

शुद्धद्वार तु तन्मध्ये ध्रुवबेर तु तत्समम् ।
विमानसमविस्तार प्रथमावरण स्मृतम् ॥ १२ ॥

अथवाप्यधिक तत्र कुर्यादर्धाधिक तथा ।
दक्षिणेऽप्युत्तरे चापि पश्चिमे च तथा भवेत् ॥ १३ ॥

पश्चिमात् द्विगुण प्राच्या मुखमण्डपपूर्वत ।
प्रमुखे तत्र सोपानमालयार्धमिति स्मृतम् ॥ १४ ॥

प्रमुखे तत्र विस्तार त्रिभाग परिकल्प्य च ।
तत्पश्चिमाद् द्विभाग स्यात्पूर्वभागस्य चान्तरम् ॥ १५ ॥

स देशो गरुडस्योक्तस्तत्सूत्रे पश्चिमाश्रिते ।
कुबेरेशानयोर्मध्ये चोत्तरे भित्तिपार्श्वत ॥ १६ ॥

विष्वक्सेनस्य देश स्यात्प्राच्या द्वारस्य दक्षिणे ।
इन्द्रस्याग्नेस्तथाग्नेय्या याम्ये चैव यमस्य च ॥ १७ ॥

नैर्ऋत्या निर्ऋते स्थान वारुण्या वरुणस्य च ।
वायुदेशे तु वायोश्च सौम्ये सोमस्य चोच्यते ॥ १८ ॥

ईशस्यैशान्यकोणे तु दक्षिणे भास्करस्य तु ।
आलय परिवाराणा प्राकाराश्रयमेव हि ॥ १९ ॥

विमान परित पार्श्वे शय्यादेश प्रकल्पयेत् ।
प्रमुखे परितश्चापि मण्डप कारयेत्तथा ॥ २० ॥

विमानात्पादहीनस्तु गोपुरोच्छ्राय उच्यते ।
विमानस्यार्धमुत्सेध प्राकार परिकल्पयेत् ॥ २१ ॥

गोपुरस्य बहि पार्श्वे द्वयोरालयमुच्यते ।
दक्षिणे वक्रतुण्डस्य नागराजस्य वामत ॥ २२ ॥

आलय परिवाराणामर्धं मूलालयस्य वै ।
त्रिहस्तमालय तेषा कारयेत्तु विधानत ॥ २३ ॥

अशक्त परिवाराणामालय प्रतिमा विना ।
देशे यथोक्ते सर्वेषा पीठ तत्रैव कारयेत् ॥ २४ ॥

प्रथमावरणात्तस्मात् द्वितीय द्विगुण स्मृतम् ।
द्वितीयावरणात्तस्मात्तृतीय त्रिगुण स्मृतम् ॥ २५ ॥

सर्वावरणनिस्तार प्रमुखे द्विगुण स्मृत ।
द्वितीयावरणे कुर्यादाग्नेय्या पचनालयम् ॥ २६ ॥

न्यसेत्तत्पश्चिमे देशे स्नानपानीयतोयकम् ।
पुष्पसञ्चयदेश च कुर्यादैशान्यपश्चिमे ॥ २७ ॥

द्वितीयावरणे तत्र तृतीयावरणेऽपि च ।
प्रमुखे शिल्पशास्त्रेण मण्डप कारयेत्क्रमात् ॥ २८ ॥

द्वितीयावरणे वाथ तृतीयावरणे तथा ।
चतुर्थावरणे वापि यावत्प्रमुखविस्तृति ॥ २९ ॥

तद्विस्तार त्रिभाग तु कृत्वा तत्र च तत्र च ।
द्विभाग पश्चिमे हित्वा महाभूतस्य तत्र वै ॥ ३० ॥

देवालयस्याधिष्ठानसम पीठ प्रकल्पयेत् ।
तत्पीठात्पश्चिमे चक्र ध्वज शङ्ख च कारयेत् ॥ ३१ ॥

द्वितीयावरणे तद्वत् द्विभाग सव्यपोह्य च ।
तत्र चक्र प्रकल्प्यैव तृतीये वा चतुर्थके ॥ ३२ ॥

ध्वज शङ्ख तथा वीश पूर्ववत्परिकल्पयेत् ।
ये देवा प्रमुखे प्रोक्तास्तानाहुरनपायिन ॥ ३३ ॥

दक्षिणादिशि द्वारे तान्नकुर्यात्प्रमुखे तथा ।
विष्वक्सेन तथेन्द्रादीन् तत्तद्दिक्ष्वेव कल्पयेत् ॥ ३४ ॥

द्वितीय गोपुर तुल्यमधिक वा विशेषत ।
तृतीयावरणसयुक्त गोपुरद्वारमुच्यते ॥ ३५ ॥

प्रमुखे चापरे वापि गोपुर परिकल्पयेत् ।
एकप्राकारमधम द्विप्राकार तु मध्यमम् ॥ ३६ ॥

त्रिप्राकारयुत यत्तदुत्तम परिचक्षते ।
चतु प्राकारसयुक्त पञ्चप्राकारसयुतम् ॥ ३७ ॥

षट्प्राकारयुत चैतदुत्तमोत्तममुच्यते ।
तत्तद्गोपुरसयुक्त यथाशक्ति च कारयेत ॥ ३८ ॥

द्वितीयावरणे वाथ तृतीयावरणे तथा ।

चतुर्थे वाय्यथैशान्ये कूप प्राकारपार्श्वत ॥ ३९ ॥
प्रमुखे वाग्रत पार्श्वे तटाकमपि कारयेत् ।

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे परिवारालयविधिर्नाम
नवमोऽध्याय ॥

---

## दशमोऽध्यायः

अथात सम्प्रवक्ष्यामि गर्भन्यासविधि बुधा ।
समुद्राच्चैव नद्याश्च पर्वतात्तीर्थदेशत ॥ १ ॥
हृदात्कुलारवासाच्च वल्मीकाच्च खलादपि ।
गजदक्षिणदन्ताच्च वृषदक्षिणशृङ्गत ॥ २ ॥
पृथक् पात्रे गृहीतव्या मृत्तिकास्ता सुशोभना ।
वज्रमौक्तिकवैडूर्यान् शङ्ख च स्फटिक तथा ॥ ३ ॥
पुष्य चन्द्रमणि चैव नील ब्रह्ममणिं तथा ।
रत्नानि सपरीक्ष्यैव गृह्णीयात्तानि यत्नत ॥ ४ ॥
मन शिला हरितालमञ्जन श्यामसीसक ।
सौराष्ट्र रोचन चैव गेरिक पारद तथा ॥ ५ ॥
एतान् सङ्गृह्य धातून् वै शालिनीवारकङ्गुभि ।
माष कुलुत्थनिष्पावतिलमुद्गयवानपि ॥ ६ ॥
उक्तानेतास्तथा लोहै कारयेत यथाक्रमम् ।
सम्पूर्णपाकनिर्दोषान् नवाश्चापि समाहरेत ॥ ७ ॥
हिरण्य रजत ताम्रमायस त्रपु सहरेत् ।
उत्पलस्य च मूल च पद्ममूल तथैव च ॥ ८ ॥

गृह्णीयात्कौमुद मूल मूल नीलोत्पलस्य च ।
सर्वाण्येतानि सङ्गृह्य कूर्मचक्राम्बुजान्यपि ॥ ९ ॥

ऋषभ मङ्गलान्यष्टौ सुवर्णेनैव कारयेत् ।
फेलामष्टाङ्गुलायामा तावदङ्गुलविस्तृताम् ॥ १० ॥

भागमालसमुत्सेधामर्वोत्सेधोत्तरच्छदाम् ।
कृत्वा ताम्रमयीं स्निग्धां नवकोष्ठसमन्विताम् ॥ ११ ॥

अच्छिद्रामक्षतां रम्या यन्नमालघनायुताम् ।
ऋक्षाण्येव परीक्ष्यैव पूर्वोक्तानि शुभानि वै ॥ १२ ॥

पञ्चाग्नीन् कल्पयित्वैषामाघार जहुयात्तथा ।
एकत्राहवनीये वाप्याघारमिति केचन ॥ १३ ॥

पूर्वेद्युरेव कर्तव्य रात्रौ होम विधानत ।
जुहुयाद्वैष्णव सूक्तमतो देवादिक पुन ॥ १४ ॥

लोकपालेभ्य इत्युक्त्वा तथा नारायणाय च ।
बीजेभ्य सर्वधातुभ्य सर्वलोहेभ्य एव च ॥ १५ ॥

नदीभ्यश्च ह्रदेभ्यश्च पातालेभ्यस्तथैव च ।
वृक्षेभ्यश्चैव नागेभ्यो दिग्गजेभ्यस्तथैव च ॥ १६ ॥

व्याहृत्यन्त यजेदेतैर्मन्त्रै पञ्चसु चाग्निषु ।
प्रभाते विधिना स्नात्वा पुण्याह वाचयेत्क्रमात् ॥ १७ ॥

मृदो द्रव्याणि निक्षिप्य फेलाया देवसन्निधौ ।
कनिक्रदादिशकुनसूक्तघोषसमन्वितम् ॥ १८ ॥

वैष्णव पौरुष सूक्त जपन्वै प्रोक्षणैरपि ।
सम्प्रोक्ष्यैव यथान्याय ता फेला द्रव्यकै सह ॥ १९ ॥

तत्रैव स्थापयेद् द्रव्य विधिना गर्भभाजने ।
प्रक्षाल्य पञ्चगव्येन प्रणव मन्त्रमुच्चरन् ॥ २० ॥

गायत्र्या प्रोक्षयेत्पश्चाच्छुद्धतोयेन वै बुध ।
समुद्रमृत्तिका पूर्व परित प्रक्षिपेत्तत ॥ २१ ॥

दिश्यैन्द्र्या पार्वता याम्या तीर्थजा प्रक्षिपेत्तत ।
नादेयी पश्चिमे सौम्ये हृदजा विन्यसेत्क्रमात् ॥ २२ ॥

कौलीरवासामाग्नेय्या वाल्मीकी नैर्ऋते न्यसेत् ।
वायव्या खिलजा प्रोक्ता चैशान्या हस्तिदन्तजा ॥ २३ ॥

ब्रह्मस्थाने च दातव्या वृषदक्षिणशृङ्गजा ।
पाद्ममुत्पलमूल तु कौमुद मूलमेवच ॥ २४ ॥

इन्द्रादीना महादिक्षु प्रक्षिपेच्च यथाक्रमम् ।
वज्रादीनि च रत्नानि इन्द्रादीना दिशि क्रमात् ॥ २५ ॥

मन शिलाद्य च तथा शाल्याद्य च यथाक्रमम् ।
हिरण्य ब्रह्मण स्थाने ऐन्द्रे तु रजत न्यसेत् ॥ २६ ॥

याम्ये ताम्र निधातव्य वारुण्यामायस न्यसेत् ।
त्रपु सौम्ये क्षिपेद्विद्वान् सर्वमेवमसङ्करम् ॥ २७ ॥

गरुड कूर्मरूप च शङ्खचक्रसमन्वितम् ।
विदिक्षु सन्यसेदेव मण्यादीनि यथाक्रमम् ॥ २८ ॥

धनुर्दण्ड गदात्मीयजातिद्रव्य तथैव च ।
सुवर्णेनैव कृत्वा तु ब्रह्मस्थाने विनिक्षिपेत् ॥ २९ ॥

हैमानि मङ्गलान्यष्टौ क्रमादैन्द्रादिषु न्यसेत् ।
तत्तद्दिगीशमन्त्रैश्च सर्वाण्येतानि निक्षिपेत् ॥ ३० ॥

एवमेव विनिक्षिप्य शालिबीजैश्च पूरयेत् ।
फलामाच्छादयेच्छिष्टामुत्तराच्छादवासमा ॥ ३१ ॥

दिक्परिच्छेदनार्थाय लक्षण लक्षयेद्बहि ।
अर्चयेल्लोकपालास्तान् दिग्भित्तिमिव चिन्तयेत् ॥ ३२ ॥
अन्तर्भूमण्डल ध्यायेत्सर्वमेवमशेषत ।
अनन्त चैव नागेन्द्रमर्चयित्वा तु मन्त्रत ॥ ३३ ॥

अनुमान्य च त देव तद्बोढार सुचिन्तयेत् ।
वेष्टयित्वा तु वस्त्रेण व्रीहेरुपरि निक्षिपेत् ॥ ३४ ॥

रात्रावेव निधातव्य गर्भपात्र सुशोभनम् ।
सौम्ययुक्ते शुभांशे वा स्थिरे चोभयोदये शुभे ॥ ३५ ॥

ऊर्ध्वानन निधातव्य राशौ शुद्धाष्टमव्यये ।
ब्राह्मणो यजमानश्चेन्न्यसेद्द्वै पट्टिकोपरि ॥ ३६ ॥

नृपश्चेत्तु निधातव्यमुपानादुपरि स्थिरम् ।
तस्मादेकाङ्गुल न्यून वैश्याना तु विधीयते ॥ ३७ ॥

ततश्चैकाङ्गुल न्यून शूद्राणामभिधीयते ।
द्वारस्य दक्षिणे भागे भित्तिमध्ये त्रिभागत ॥ ३८ ॥

धातु समीपे न्यसतव्यमिति शास्त्रस्य निश्चय ।
अभ्यर्च्य मेदिनी मुख्या विष्णोर्देवीं वसुन्धराम् ॥ ३९ ॥

आत्मसूक्त जपित्वैव जप्त्वा चैकाक्षरादिकम् ।
विष्णोवार्यमिति ध्यात्वा न्यसेत्तद्भावभावितम् ॥ ४० ॥

मेदिनी देवीत्युक्त्वैव गर्भ तत्रैव विन्यसेत् ।
एकाक्षरादिसूक्त च ध्रुवसूक्त जपेत्तत ॥ ४१ ॥

1 T 6

वैष्णव विष्णुसूक्त च जपेद्रुरुरतन्द्रित ।
आचार्यस्थापकादीनामृत्विजा दक्षिणा ददेत् ॥ ४२ ॥

अन्नाद्य च यथाशक्ति दापयेत्सर्ववर्णिनाम् ।
एव गर्भ तु विन्यस्य पादबन्धादि कारयेत् ॥ ४३ ॥

न्यसेदेव विधानेन गर्भ ग्रामस्य वृद्धये ।
अथ मूर्धेष्टकान्यासविधि वक्ष्ये समासत ॥ ४४ ॥

कल्पिते च विमाने तु पूर्वोक्तेन विधानत ।
शुभे मुहूर्ते पूर्वाह्ने कुर्याच्चल समाप्तिकाम् ॥ ४५ ॥

शिला पञ्चेष्टका वाथ निर्व्रणाश्च घना शुभा ।
यथावत्ता प्रगृह्यैव स्थूपीशूलसमन्विता ॥ ४६ ॥

प्रथमेष्टकावदायामा यथोक्त तत्क्रमेण वै ।
अधिवास च होम च तथैवाभ्यर्चनादिकम् ॥ ४७ ॥

अत्रापि सम्प्रकुर्वीत यथावद्विधिकोविद ।
न्यक्ष पूर्वे समभ्यर्च्य धा यपीठे यथाक्रमम् ॥ ४८ ॥

दक्षिणे भरत चैव मित्र वै पश्चिमेऽर्चयेत् ।
विमानपाल क्षत्तारमुत्तरे त्वर्चयेत्क्रमात् ॥ ४० ॥

तत प्रभाते त्वाचार्यो यजमानसमन्वित ।
स्नात्वा शुद्धाम्बरधरो यथाशक्ति स्वलङ्कृत ॥ ५० ॥

शिला वाथेष्टकास्तद्वत्कारयित्वा प्रदक्षिणम् ।
स्थापयेत्पूर्वभागे तु दक्षिणे पश्चिमे तथा ॥ ५१ ॥

उत्तरे च प्रतिष्ठाप्य लम्बयेत्सूत्रमल वै ।
गर्भागारस्य मध्ये तु स्थूपीमध्य यथा भवेत् ॥ ५२ ॥

मूर्धेष्टका शिलास्तद्वत्तन्यसेदूर्ध्वतोमुखा ।
तथैव नवरत्नानि प्रक्षिपेदुपरि क्रमात ॥ ५३ ॥

यथाशक्ति समृद्ध्यर्थं सुवर्णं तत्र निक्षिपेत ।
सुधयाच्छादयित्वा तु स्थापयेत्स्थूपिशूलकम् ॥ ५४ ॥

सूक्तमात्मादिक जप्त्वा प्रोक्षणै प्रोक्षयेत्त्रिभि ।
सुधाकर्माद्यलङ्कार तद्विमानोदित क्रमात् ॥ ५५ ॥

कारयेदुक्तमार्गेण शिल्पिभि परिवारवत् ।
विधिना ध्रुववेर तदुक्तद्रव्येण चैव हि ॥ ५६ ॥

ताम्रेण शिलया वापि दारुणा वापि कारयेत ।
अथवा ध्रुवबेर तु मृण्मय कारयेत्क्रमात् ॥ ५७ ॥

मृण्मय कर्तुकामस्तु शूलयुक्त समाचरेत् ।
तस्माच्छूलविधानार्थं दारुसग्रहमिष्यते ॥ ५८ ॥

प्रतिमान्त स्थदारूर्वं शूल इत्युच्यते बुधै ।

श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे गर्भन्यासमूर्धेष्टकाविधिर्नाम
दशमोऽध्याय ॥

---

## एकादशोऽध्याय

वक्ष्यामि परिवाराणा नवभेद यथाक्रमम् ।
विष्वक्सनश्च गरुडो भूतपीठस्त्रयस्तथा ॥ १ ॥

परिवार इति प्रोक्तो देवेशस्याधमाधमे ।
पूर्वोक्तै सहितो न्यक्ष श्रीभूत चैव पञ्चश ॥ २ ॥

परिवारानिति प्राहुरेतानधममध्यमे ।
अष्टावि द्रादिदिग्देवा भास्करेण समायुता ॥ ३ ॥

विन्नस्वर्मलक्षत्तारौ परिवारविधानय ।
दवा सप्तदश प्रोक्ता पूर्वोक्तैरधमोत्तमे ॥ ४ ॥

नथैव देवै पूर्वोक्तै परिवारैर्यथाविधि ।
प्रथमावरणद्वाराद् बाह्ये चोभयपार्श्वत ॥ ५ ॥

निम्नश नागराज च कल्पयेद्वै यथाक्रमम् ।
एकोनविंशति प्रोक्ता देवा वै मध्यमाधमे ॥ ६ ॥

तथा मध्यममध्ये च मध्यमस्योत्तमेऽपि च ।
उत्तमेऽप्यधमे मध्ये चोत्तमेषु च पञ्चसु ॥ ७ ॥

तथैकोनविंशतिभिश्चक्र ध्वजधरानपि ।
द्वात्रिंशदिति देवास्तानशक्त कल्पयेदिति ॥ ८ ॥

महेन्द्र प्रियमग्नि च पश्चिमाभिमुखान् क्रमात् ।
हरिपाल तथा स्कन्द यम विघ्नेशमेव च ॥ ९ ॥

उत्तराभिमुखानतान् दक्षिणाभित्तिमाश्रितान् ।
निर्ऋति सप्तमातॄश्च विष्णु वरुणमेव च ॥ १० ॥

ज्येष्ठा वायु तथा चैतान् प्राङ्मुखानेव कल्पयेत् ।
तथा भृगु च ब्रह्माण कुबेर रुद्रमेव च ॥ ११ ॥

तथैव विष्णुमेना च दक्षिणाभिमुखान् क्रमात् ।
दुर्गा सरस्वती चापि पश्चिमाभिमुखी न्यसेत् ॥ १२ ॥

गरुडेन युतान देवानेकविंशतिकान विदु ।
प्रथमावरणे चैव देवानेतान् प्रकल्पयत ॥ १३ ॥

मध्यमे मध्यम चेतन्मार्गमाहुस्तपोधना ।
प्रथमावरणे देवानिन्द्रादाश्चाष्ट भास्करम् ॥ १४ ॥

नवैनान् विधिना प्रोक्तान् द्वितीयावरणे क्रमात् ।
दक्षिणे पूर्वद्वारस्य स्कन्द भौम श्रिय तथा ॥ १५ ॥

भूदेवी च हवि पाल पश्चिमाभिमुखानिमान् ।
अग्नि दुर्गा च विघ्नेश रोहिणी सप्तसयुताम् ॥ १६ ॥

ऋतून् देवाश्च मन्द च मातृसप्तकसयुतान् ।
उत्तराभिमुखानतान् कल्पयेत यथाक्रमम् ॥ १७ ॥

नर धर्म बुध धात्री विष्णु ज्येष्ठा सुरप्रियाम् ।
व्याहृति पुष्पपाल च प्राङ्मुखानेव कल्पयेत् ॥ १८ ॥

गङ्गामपि मुनान् सप्त ब्रह्माण सोममेव च ।
दस्र तथा भव बुद्ध विष्वक्सेनमपि क्रमात् ॥ १९ ॥

तथा पञ्च महाभूतान् दक्षिणाभिमुखानिमान् ।
सरस्वती मनु चैव हरिं शङ्करमेव च ॥ २० ॥

हरिणी गरुड चैव कल्पयेत्पश्चिमामुखान् ।
द्वितीयावरणे चैताश्चतुस्त्रिंशच्च कल्पयेत् ॥ २१ ॥

विघ्नेश नागराज च द्वारपार्श्वे प्रकल्प्य च ।
प्रमुख च तथा तल ध्वज शङ्ख प्रकल्पयेत् ॥ २२ ॥

चत्वारिंशत्तथाष्टौ च देवता परिकीर्तिता ।
मध्यमोत्तममार्गे तु प्राहुरेव पुरातना ॥ २३ ॥

देवाभिमुख ब्रह्माण ब्रह्मस्थाने प्रकल्प्य च ।
प्रथमावरणेऽष्टौ च दिग्देवान् भास्कर तथा ॥ २४ ॥

नव देवान् प्रकल्प्यैव द्वितीयावरणे तथा ।
भाम श्रिय हरि गाल पश्चिमाभिमुखानिमान् ॥ २५ ॥

स्कन्द दुर्गां च मन्द च विश्वकर्माणमेव च ।
रोहिणा सतसयुक्ता बृहस्पतिमपि क्रमात् ॥ २६ ॥

मातृसप्तकसयुक्ताश्चोत्तराभिमुखान् क्रमात् ।
बुध धाता च पुरुष मित्र ज्येष्ठा कवि तथा ॥ २७ ॥

पुरपालमिमान दद्यात् प्राङ्मुखानेव कल्पयेत् ।
गङ्गा महायमुनाद् सप्त ब्रह्माण च तथैव च ॥ २८ ॥

क्षत्तारमपि सोम च महाभूत महीमपि ।
विघ्नेशमेव च रुद्र च दक्षिणाभिमुखान् पुन ॥ २९ ॥

नलिनाक्ष च वागदेवी यक्ष प्रत्यङ्मुखानिमान ।
गरुड पूर्वतः कुर्यात त्रिंशद्देवानिमान् विदु ॥ ३० ॥

तद्बाह्ये पूर्वतद्वार नागराज च कल्पयेत् ।
दक्षिणोत्तरपार्श्वस्थावन्यो यममिवीक्षकौ ॥ ३१ ॥

शक्त्यादि दक्षिणस्थान शङ्खचक्रौ च कारयेत् ।
तच्चक्रोत्तरत पार्श्वे शार्ङ्गादीन् कारयेत् क्रमात् ॥ ३२ ॥

तस्माद्बहिर्गजेन्द्र कुर्याद्दक्षिणे दन्तिनायकम् ।
तद्गजस्योत्तरे शाल कृत्वा तत्र रथ न्यसेत् ॥ ३३ ॥

तस्माद्बहिस्तथा शङ्ख दक्षिणेऽध्यक्षक तथा ।
शङ्खस्योत्तरत स्थान चक्र च परिकल्पयेत् ॥ ३४ ॥

देवानकादशैताश्च कल्पयेदिति शासनम् ।
उत्तमाधममित्येव मार्गमाहुर्मनीषिण ॥ ३५ ॥

प्रथमावरणे ध्यात् षण्मुखान्तान् यथाक्रमम् ।
रविमिन्द्र तथैवाग्नि पश्चिमाभिमुखानिमान ॥ ३६ ॥

भौम यम च मन्द च दक्षिणे चोत्तरामुखान ।
निर्ऋति त्रिदशाचार्य पुरप वरुण तथा ॥ ३७ ॥

बुध ध्रुव च वायु च प्राङ्मुखानेव कारयेत् ।
गङ्गा शुक्र कुबेर च सोम रुद्र तथैव च ॥ ३८ ॥

दक्षिणाभिमुखान् कुर्यादुत्तरे भित्तिपार्श्वत ।
ईशमुत्तानपाद च वेदर्षाष्ट्र प्रिय तथा ॥ ३९ ॥

पश्चिमाभिमुखान् कुर्यात् द्वाविंशद्देवतास्त्विमा ।
द्वितीयावरणे देवान् वक्ष्यमाणास्तु कल्पयेत् ॥ ४० ॥

तथा न्यक्ष सुरादेवी श्रिय च हविरक्षकम् ।
पश्चिमाभिमुखान् कृत्वा विघ्नेश पुष्परक्षकम् ॥ ४१ ॥

दुर्गामपि विवस्वन्त रोहिणी सहसयुताम् ।
मातृस्तथैव सतैतानुत्तराभिमुखान् क्रमात ॥ ४२ ॥

सध्या च वादिककाल रमण धातिमेव च ।
तथा भृशाख्य ज्येष्ठा च मायामपि च नारदम् ॥ ४३ ॥

प्राङ्मुखानेव कृत्वैव ब्रह्माणमृषिसप्तकान् ।
क्षतार दक्षिणे भित्तौ वरुण पञ्चगृतकान ॥ ४४ ॥

महा च विष्वक्सेन च नासत्य दक्षिणामुखान् ।
व्याहृति च स्वधा स्वाहा कारयेत्पश्चिमामुखा ॥ ४५ ॥

गरुडेन युतास्त्वेतास्त्रयस्त्रिशच्च देवता ।
एकादश च पूर्वोक्तान् देवानपि च कल्पयेत ॥ ४६ ॥

एकस्या दिशि ये देवा प्रोक्तास्तास्तत्र युक्तित ।
समभाग च कृत्वैव कारयेत यथाक्रमम् ॥ ४७ ॥

एकादशापि पूर्वोक्तै पट्षष्टिर्देवता स्मृता ।
एवमेव क्रमेणैव कुर्यादुत्तममध्यमम् ॥ ४८ ॥

प्रथमावरणे देवानिन्द्रादीन् लोकपालकान् ।
कल्पयित्वा रविस्थाने प्रह्लाद तत्र कल्पयेत् ॥ ४९ ॥

विपर्यये तु द्वारस्य वामपार्श्वे प्रकल्पयेत् ।
द्वितीयावरणे सूर्यं भौम स्कन्द तथैव च ॥ ५० ॥

पश्चिमाभिमुखान् कृत्वा काश्यप मन्दमेव च ।
गुरु चोदङ्मुखान् विद्यात् धर्मं सौम्य हरि पुन ॥ ५१ ॥

शक्र ध्रुव च वेदास्तु पश्चिमाभिमुखान्विदु ।
गङ्गा सोम स्मर चैतान् दक्षिणाभिमुखानपि ॥ ५२ ॥

रुद्रमुत्तानपाद च देवान्वै पश्चिमामुखान् ।
देवान् सप्तदशैतास्तु कारयेत यथाक्रमम् ॥ ५३ ॥

तृतीयावरणे यक्ष सुरा पद्म च पावकम् ।
पश्चिमाभिमुखान् कृत्वा विघ्नेश पुष्पदन्तकम् ॥ ५४ ॥

भौम दुर्गां तथा सप्तरोहिणीसयुता क्रमात् ।
विवस्वन्त तथा मातृरुत्तराभिमुखानिमान् ॥ ५५ ॥

पर्जन्य च तथा सन्ध्या वादिककालमेव वै ।
प्रजापतिं तथा मित्र श्रीदेवा च भृशाश्वकम् ॥ ५६ ॥

ज्येष्ठामपि तथा माया नारद प्राङ्मुख विदु ।
ऋषीश्च सप्त ब्रह्माण क्षत्तार दक्षमेव च ॥ ५७ ॥

तीर्थमप्यरण शान्त महाभूत महीमपि ।
सती चोत्तरपार्श्वे तु दक्षिणाभिमुखान् विदु ॥ ५८ ॥
दक्ष च व्याहृति मिद्धि म्त्राहा नै पश्चिमामुखाम् ।
गरुडेन युतान् देवाश्चतुस्त्रिशदिमान विदु ॥ ५० ॥
पूर्वमद्रे बहिर्न्वानेकादश च कल्पयेत् ।
विष्णुभूतयुतान् देवान् परिवारान द्विसप्तति ॥ ६० ॥
उत्तमोत्तममार्गेण परिवारानिमान् विदु ।
समर्थश्चोत्तम कुर्यान्समर्थोऽधम चरेत ॥ ६१ ॥
नवभेदेन वक्ष्येऽहमर्चकान् पारचारकान ।
अर्चको मन्त्रकल्पज्ञ शौचाचारसमायुत ॥ ६२ ॥
ऋत्विगुक्तगुणैर्युक्तो वैष्णवो भक्तिमानृजु ।
अनालस्य सत्यवादी प्रसन्नश्चैक उत्तमत ॥ ६३ ॥
तथैकपरिचारश्च द्वौ प्रोक्तावधमावमे ।
पूर्वोक्तगुणसयुक्तस्तथैकोऽर्चक उत्तमे ॥ ६४ ॥
द्वौ प्रोक्तो परिचतारो तथवाधममध्यमे ।
देवस्य परिवाराणामर्चनाद्यथगेव च ॥ ६५ ॥
अर्चकौ द्वौ च सप्रोक्ता चत्वार परिचारका ।
अधमोत्तममार्गे स्यात तथा व मध्यमाधम ॥ ६६ ॥
अर्चकाश्च त्रय प्रोक्ता पञ्च व परिचारका ।
एतैश्चोक्तगुणैस्तस्मान्मध्यो म यममध्यमे ॥ ६७ ॥
चत्वारश्चार्चका प्रोक्ता पञ्च न परिचारका ।
(पञ्चार्चका रुद्रसख्या परिचर्तार एव च ।)
मध्यमोत्तममार्गे तु तसान्त्षोडश कीर्तिता ॥ ६८ ॥

षडर्चकाश्च सप्रोक्तास्त्रिगुणा परिचारका ।
चतुर्विंशतिकाश्चैते तस्माद्देवोत्तमाधमे ॥ ६९ ॥

अर्चका विंशति प्रोक्तास्त्रिंशच्च परिचारका ।
एते पञ्चाशदित्युक्तास्तस्मादुत्तममध्यमे ॥ ७० ॥

पञ्चाशत्परिचर्तार पञ्चविंशतिरर्चका ।
पञ्चसप्ततिकाश्चैते तस्माद्देवोत्तमोत्तम ॥ ७१ ॥

एवमेते समायुक्तान् तादृशैर्विभवैर्युतान् ।
श्रद्धाभक्तिसमायुक्तान यत्नेनैव च कारयेत् ॥ ७२ ॥

विमानमधिक स्याच्चेदधिक सर्वमाचरेत् ।
उत्तमे चाधम कर्म कुर्याच्चेत्स विनश्यति ॥ ७३ ॥

अधमे चोत्तम कर्म यदि कुर्यात्तदुत्तमम् ।
उत्तमोत्तममार्गे तु सर्वं कर्म शुभावहम् ॥ ७४ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे नवविधार्चक-
परिचारकविधिर्नामैकादशोऽध्याय ॥

---

## द्वादशोऽध्याय

अत पर प्रवक्ष्यामि शिलाजातिशुभाशुभम् ।
गिरिजा भूमिजा चैव वारिजा च शिला भवेत् ॥ १ ॥

उत्तमा गिरिजा ज्ञेया मध्यमा भूमिजा भवेत् ।
वारिजा चाधमा प्रोक्ता प्रतिमादिषु कर्मसु ॥ २ ॥

विवर्णा स्फुटिता वृद्धा न ग्राह्या स्यात्कदाचन ।
सुस्निग्धास्फुटिता ग्राह्या तरुणा घोषवत्तरा ॥ ३ ॥

स्त्रीपुनपुसकाश्चेति त्रिविधा च शिला भवेत् ।
विशालमायता कृष्णा स्त्रिय विद्याच्च ता शिलाम् ॥ ४ ॥

एकवर्णा घना स्निग्धा व्यक्तघोषा पुमान् भवेत् ।
अव्यक्तघोषवर्ण च कर्कश च नपुसकम् ॥ ५ ॥

नपुसक तु न ग्राह्यमिति पूर्वजदर्शनम् ।
पुभावेषु पुमान् ग्राह्य स्त्रीभावेषु स्त्रिय हरेत् ॥ ६ ॥

एकस्या वा शिलाया तु तत्तद्देवा समाहरेत् ।
अधोमुखा शिला सर्वास्तसात्पार्श्वादिधाङ्कयेत् ॥ ७ ॥

उन्नतस्तु शिरोभाग प्रवणे पाद उच्यते ।
उन्नतप्रवणाभावे गौरव तु यत शिर ॥ ८ ॥

शिरोभाग शिर कृत्वा निम्नेषु च पदो पदे ।
शिरोमुख तथा कार्यं निम्न चापि यथा शिला ॥ ९ ॥

एतौ स्पष्टा तु विज्ञेयौ प्रशस्ता प्रतिमा प्रति ।
श्वेता च पद्मवर्णा च कुलुत्थाभा च मुद्गभा ॥ १० ॥

पाण्डरा माषवर्णा च कपोता भृङ्गसन्निभा ।
श्वेतपद्मकुलुत्थाभा ब्रह्मक्षत्रविशा हिता ॥ ११ ॥

मुद्गवर्णा तु शूद्राणा शेषा साधारणा स्मृता ।
सिरा विवर्ण स्फुटितो भेदो रेखा च पञ्चम ॥ १२ ॥

सुपिरश्चैव गर्भश्च सप्त दोषा शिलागता ।
सिरया यजमानस्य कुल भवति निन्दितम् ॥ १३ ॥

वैवर्ण्ये कीर्तिनाशाय स्फुटित कुलनाशनम् ।
भेदाद्भवति बन्धूना भेदन तु तथैव हि ॥ १४ ॥



वरूप्य रेखया चैव सुषिरात्स्थाननाशनम् ।
छेदने तक्षणे चापि मण्डलं यत्र दृश्यते ॥ १५ ॥

सगर्भा तां शिलां विद्याद् द्रुमे चापि तथा विदुः ।
भेकोऽहिः शलभो गोधा वृश्चिको गृहगोळिका ॥ १६ ॥

आखुः खद्योतकश्चापि कृकलासो दृषज्जलम् ।
चित्रको गोनसश्चापि सिकताकूर्ममत्स्यकाः ॥ १७ ॥

पोटगैते शिलागर्भास्तेषां लक्षणमुच्यते ।
मञ्जिष्ठवर्णे मण्डूको गर्भे भवति मण्डले ॥ १८ ॥

कृष्णे भुजङ्गमं विद्याच्छलभो नीलवर्णके ।
पीतके मण्डले गोधा वृश्चिकः स्याद्गवेधुके ॥ १९ ॥

कपोतवर्णे गर्भे स्यान्मण्डले गृहगौलिका ।
कपिले मूषिकं विद्यात् खद्योतो मरसनिभे ॥ २० ॥

अरुणे कृकलासः स्याद्गुडवर्णेऽश्मको भवेत् ।
आपो निस्त्रिंशवर्णे तु विचित्रं चित्रकं विदुः ॥ २१ ॥

गवेधुकाभेऽस्य स्चो गोनसं तत्र निर्दिशेत् ।
कूर्माभे कूर्म एव स्याच्छ्यामे मत्स्यो भवेद् ध्रुवम् ॥ २२ ॥

जलाद्भयमरेर्भीतिः सम्यनाशस्तथैव च ।
गोपीडा विषयेऽशान्तिस्तस्कराच्चाग्नितो भयम् ॥ २३ ॥

अर्थहानिरवर्षश्च गर्भस्रावो विवर्णता ।
राष्ट्रनाशो महाव्याधिर्वाक्कण्ठवल्हीनता ॥ २४ ॥

एते दोषाः क्रमेणोक्ता गर्भेष्वेतेषु सत्सु वै ।
तस्मात्परीक्षा कर्तव्या वेरं शैलं च दारवम् ॥ २५ ॥

अलक्ष्ये गर्भचिह्नेऽपि शोधनोपाय उच्यते ।
ब्राह्मी वज्री च शूली च विष्णुक्रान्ता कुबेरदक् ॥ २६ ॥

अजाक्षीरेण सपिष्टच्य शिलाया तत्र लेपयेत ।
एकरात्रपरिक्लेदाद्बोधावृश्चिकयोर्भपु ॥ २७ ॥

प्रतिभासे तु तत्तोय सम्प्रक्षाल्य प्रदर्शन ।
सहदेवा च मासा च वटशृङ्ग तथैव च ॥ २८ ॥

गोक्षीरेणैव सपिष्टच्य कल्क तत्र प्रलेपयेत् ।
एकरात्रसमायोगे कूर्मदर्दुरयोर्भपु ॥ २९ ॥

त्रिशूलभूतजा धात्रीगोक्षीरेणैव लेपयेत् ।
त्रिरात्रात्प्रतिभासस्तु कृकलासो भवस्तथा ॥ ३० ॥

फल कुबेरकुष्ठ च मासी च करवीरकम् ।
मुक्ता क्षीरत्रययुक्त च शेषप्राणिप्रदर्शनम् ॥ ३१ ॥

लेपयेद्वारुणैर्मन्त्रै सर्वान सद्भाग् पृथक् पृथक् ।
प्रलेपेषु कृतेष्वेषु न स्याच्चेद प्रदर्शनम् ॥ ३२ ॥

सा शिला च सुसग्राह्या विधिना बेरपीठयो ।

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे अज्ञातगर्भपरीक्षाविधिर्नाम द्वादशोऽध्याय ॥

---

## त्रयोदशोऽध्यायः

अथ बेराय वक्ष्यामि शिलासङ्ग्रहण क्रमात् ।
परीक्ष्य शुभनक्षत्र शुभलग्न पुरैव तु ॥ १ ॥

आचार्यो यजमानश्च तद्दिन तत्परायणौ ।
पूजयित्वा हरिं देवममित चानपायिनम् ॥ २ ॥

गरुड च समावाह्य स्थण्डिले सम्यगर्चयेत् ।
इममर्थं समुद्दिश्य कुर्याद्ब्राह्मणभोजनम् ॥ ३ ॥

शुभे मुहूर्ते सप्राप्ते देवेश सप्रणम्य च ।
एवमेतत्परीक्षाम प्रसीद भगवन्निति ॥ ४ ॥

परीत्य मदिर पश्चाच्छकुनानभिलक्ष्य च ।
शुभानि यानि चोक्तानि गच्छेद्यत्र शिला भवेत् ॥ ५ ॥

अशुभ यत्र दृश्येत निमित्त सन्निवृत्य च ।
कृत्वा तु शान्तिहोम च पश्चाद्वै शिल्पिना सह ॥ ६ ॥

आचार्यं पुरतो गच्छेद्विष्णुर्मा पात्वितीरयन् ।
वने वा जलपार्श्वे वा गिरिपार्श्वेत एव च ॥ ७ ॥

यत्र सलक्ष्यते युक्ता शिला सा शुभलक्षणे ।
तस्यास्तु दक्षिणे पार्श्वे प्रतीच्या वा मनोरमे ॥ ८ ॥

अङ्गार तर्पयित्वा तु रक्षा तत्र विधाय च ।
खानयित्वा तु परित शिलायाश्च यथार्हकम् ॥ ९ ॥

शिला छित्त्वा समुद्धृत्य पार्श्वयित्वा तु ता क्रमात् ।
रेखाबिन्दुकलङ्कादीन् लक्षयित्वा गुणान्विताम् ॥ १० ॥

दोषहीना विदित्वा तु युक्ता तामभिमन्त्र्य च ।
शिलापार्श्वे बलि दद्याद्वनराजाय चोच्यते ॥ ११ ॥

उद्वास्य तत्र वसतो देशे देवा इति ब्रुवन् ।
भूतयक्षपिशाचाना नागाना च यथादिशम् ॥ १२ ॥

बलिं दत्त्वा नमोऽन्तेन तत्तन्नाम्नैव तद्बलिम् ।
पूर्वेद्युरेव शर्वर्यामुद्दिष्टदिवसाद्गुरुः ॥ १३ ॥

शान्तिहोमं ततः कुर्याद्देवीभ्यां च पृथक् पृथक् ।
तत्तद्दैवत्यमन्त्रं च हुत्वा मन्त्रविचक्षणः ॥ १४ ॥

अङ्गहोमं च हुत्वा तु मूलहोमश्च हूयताम् ।
साधनानि ततो नीत्वा होमस्योत्तरपार्श्वतः ॥ १५ ॥

तक्षकं च समाहूय शिल्पशास्त्रविशारदम् ।
धान्यराश्युपरि न्यस्य ताटनीं गुलिकामपि (वुलिकामपि ?) ॥ १६ ॥

वस्त्रेणोपरिसंछाद्य तत्पार्श्वे शिल्पिनं तथा ।
वस त्वमत्र चेत्युक्त्वा संविधाय गुरुस्ततः ॥ १७ ॥

तस्यैव दक्षिणे देशे कलशान् पञ्च विन्यसेत् ।
धान्यराशौ क्रमेणैव कलशान् विधिना न्यसेत् ॥ १८ ॥

मृद्गन्धाक्षतपुष्पाम्बुकुशवारिषु पूरितान् ।
देवीभ्यां च पृथक् चैव तत्पार्श्वे कलशान् न्यसेत् ॥ १९ ॥

वस्त्रेणोपरि सञ्छाद्य रक्षां सम्यग्विधाय च ।
शान्तचक्रौ खगेशं च तस्य पार्श्वे समर्चयेत् ॥ २० ॥

तस्य दक्षिणपार्श्वे तु पौण्डरीकं विधानतः ।
अग्निं संसाध्य तस्मिन्वै बिल्वपत्रैर्घृताप्लुतैः ॥ २१ ॥

श्वेताब्जैः कुमुदैर्वापि विष्णुसूक्तपुरःसरम् ।
मूर्तिमन्त्रैः क्रमेणैव सर्वासां पर्षदामपि ॥ २२ ॥

तत्तन्मन्त्रैश्च जुहुयादुदुत्यं चित्रमित्यपि ।
ततः प्रतिसरां बध्वा तस्याश्चैव तु पश्चिमे ॥ २३ ॥

समास्तीर्य कुशाग्राणि मृगाजिनमथोपरि ।
स्नात्वानश्नन् दिवा रात्रौ क्षीरं पीत्वा तदैव तु ॥ २४ ॥

आत्मानं तु भृगुं मत्वा मार्कण्डेयमथापि वा ।
विष्णुर्मां पात्विति ध्यायन् रक्षां कृत्वाऽत्मनः क्रमात् ॥ २५ ॥

सौवर्णयज्ञसूत्राद्यैर्भूषणैरपि भूषितः ।
श्वेतवस्त्रोत्तरीयोऽसौ श्वेतमाल्यानुलेपनः ॥ २६ ॥

तस्मिन् शयन आचार्यः शयीत नियतात्मवान् ।
इमं मन्त्रं जपन्नेवमासित्वा ब्राह्ममासनम् ॥ २७ ॥

आदिदेवं महादेवं जगन्नाथं जनार्दनम् ।
दासस्य मे शुभान्यद्य सूचय स्वप्नतो मम ॥ २८ ॥

इत्युक्त्वा च हरिं ध्यायंस्ततः स्वापं च कारयेत् ।
श्रीरूपं विष्णुबिम्बं वा पुष्पितं वा वनस्पतिम् ॥ २९ ॥

विद्वांसं ब्राह्मणं वापि शुद्धमन्यं वृषादिकम् ।
पश्येत शुभमेव स्यात्प्रसन्नो भगवान् ध्रुवम् ॥ ३० ॥

अन्यथाऽहि खरोष्ट्रादीन् पश्येच्चेदशुभावहम् ।
तस्यापि च पुनः शान्तिं हुत्वा शेषं समाचरेत् ॥ ३१ ॥

ततः प्रभाते शुद्धात्मा स्नात्वा त्वहतवस्त्रधृत् ।
शिलां प्रदक्षिणं कृत्वा प्रोक्षणैः प्रोक्षणं चरेत् ॥ ३२ ॥

नवनीतेन चाभ्यज्य क्षालयेत्पञ्चगव्यकैः ।
ततस्तक्षकमाहूय मानयित्वा तु तां शिलाम् ॥ ३३ ॥

मानोन्मानप्रमाणानि तालगम्यक्रमेण तु ।
अधोनालीप्रमाणं च मौळिमानं शिखामणेः ॥ ३४ ॥

सर्वं संलक्ष्य मानं च किञ्चिन्न्यूनाधिकं तु वा ।
मध्यसूत्रं तथालम्बेत्पार्श्वसूत्रे च लम्बयेत् ॥ ३५ ॥

मुखादिभागान् संलक्ष्य धातुरागैश्च रेखयेत् ।
यथा लक्ष्यं भवेत्स्पष्टं तथा चिह्नं च कारयेत् ॥ ३६ ॥

किञ्चिदप्यधिकं कृत्वा तालमानं च मानवित् ।
एतयोः पार्श्वतश्चापि घनं नाहं च मानतः ॥ ३७ ॥

विसृज्य तक्षकं पश्चात्स्थापितैः कलशैः क्रमात् ।
स्नापयेत्तां शिलां छिद्याद् देवदेव्योरपि पृथक् ॥ ३८ ॥

ततश्च टाङ्कीं चापि उलिकामपि तत्क्षणात् ।
सङ्गृह्य स्वयमाचार्यो विष्णुगायत्रिमुच्चरन् ॥ ३९ ॥

उदुत्यमिति चोक्त्वा तु छिद्याच्चैवोत्तरामुखः ।
स चापि तक्षकः सर्वं स्वशास्त्रोक्तं च कारयेत् ॥ ४० ॥

सर्वतश्छेदयित्वा तु व्यक्तं चिह्नं यथा भवेत् ।
स्विष्टाकारं च जुहुयात्ततो हुतभुजि क्रमात् ॥ ४१ ॥

आचार्यदक्षिणां दद्याद्यथोक्तां शक्तितोऽपि वा ।
यजमानस्तु तत्काले तत्तत्कर्मकृतामपि ॥ ४२ ॥

ततः शकटमारोप्य प्लवं वापि यथार्हतः ।
उत्तानं च पुनः पादं समारोप्यालयं नयेत् ॥ ४३ ॥

स्थापिते पथि रात्रौ तु चक्रशान्तौ समर्चयेत् ।
एवमेव च गत्वा वै देवालयसमीपतः ॥ ४४ ॥

अवरोप्याप्रमादेन भूमौ यन्त्रैरपि क्रमात् ।
आचार्यस्तक्षकश्चैव तावुभौ तत्परायणौ ॥ ४५ ॥

प्रतिमां लक्षणैर्युक्तां तक्षकैः कुशलैरपि ।
हेयदेशं व्यपोह्यैव शिलाप्रतिमकोविदैः ॥ ४६ ॥

कारयेदप्रमादेन चिरकालेन चात्वरः ।
साङ्गोपाङ्गं च प्रत्यङ्गं यथार्हं दर्शनीयकम् ॥ ४७ ॥

स्थानकं चासनं चापि श्रीभूमीसहितं क्रमात् ।
कारयित्वाप्रमादेन स्थापयेत्तद्बहिः पदे ॥ ४८ ॥

अङ्गोपाङ्गं ततः सर्वं यावच्छिन्नं प्रकल्पयेत् ।
घटशर्करया पश्चात्संयोज्य च विधानवित् ॥ ४९ ॥

देवस्योक्तेन मार्गेण वर्णकैश्चित्रतां नयेत् ।
सर्ववर्णसमायुक्तं साङ्गोपाङ्गं च सुन्दरम् ॥ ५० ॥

अथवा कारयेद्विद्वां श्चक्रशङ्खौ च साश्रयौ ।
पादाश्रयं वा कुर्वीत चित्रार्थं वा भवेद्यथा ॥ ५१ ॥

शिलामयं दारुमयं ध्रुवं कुर्वन् विधानवित् ।
चित्रवर्णयुतं कुर्याद् ध्रुवं तद्वच्च कौतुकम् ॥ ५२ ॥

चित्रवर्णयुतानेव कारयेत सपीठकान् ।
एकबेरप्रतिष्ठा चेद्वर्णहीनं शिलामयम् ॥ ५३ ॥

ब्रह्मस्थाने प्रतिष्ठाप्य पूजयेदिति शासनम् ।
अन्यत्र ब्रह्मभागात्तु वर्णहीनं शिलामयम् ॥ ५४ ॥

कथञ्चिदिति न स्थाप्यं दारवं चाह पूर्वजः ।
दारवप्रतिमां कुर्याद्दारुणैकेन बुद्धिमान् ॥ ५५ ॥

शयानं दारवं बेरं न कुर्यादिति केचन ।
स्थानकं नरसिंहं च शिलयैव प्रकल्पयेत् ॥ ५६ ॥

त्रिविक्रमं च वाराहं कारयेत विधानवित् ।
केवलं नरसिंहं तु वर्णहीनं शिलामयम् ॥ ५७ ॥

देवीभ्यां रहितं कुर्यात्तितीर्षुर्भवसागरम् ।
शत्रूणां विजयायैव पश्चान्मुक्तिप्रदायकम् ॥ ५८ ॥

शिलामयं ध्रुवं बेरं वर्णवस्तुप्रतिष्ठितम् ।
कर्तुः स्थानस्य देशस्य सर्वसम्पत्करं मतम् ॥ ५९ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे शिलासङ्ग्रहणविधिर्नाम त्रयोदशोऽध्यायः ॥

---

## चतुर्दशोऽध्यायः

अथातः शैलबेरस्य वक्ष्यते स्थापनाविधिः ।
ध्रुवस्य स्थापनं कुर्यादयने चोत्तरे शुभे ॥ १ ॥

दक्षिणे वाथ पुण्यर्क्षे स्थिरराशौ विशेषतः ।
मार्गशीर्षं च माखं द्वौ वर्जयेत्तु प्रयत्नतः ॥ २ ॥

तस्मात्तु दिवसात्पूर्वमङ्कुरानर्पयेत्तथा ।
शूलस्थापनमार्गेण यागशालां प्रकल्प्य च ॥ ३ ॥

अलङ्कृत्य च तन्मध्ये शय्यावेदीं प्रकल्पयेत् ।
पञ्चाग्नीनां तु कुण्डानि कारयेत्तद्विधानतः ॥ ४ ॥

अधिवासं तथा कुर्याद्बेरशुद्ध्यर्थमेव च ।
जलगन्धकुशोदेषु प्रत्येकं तु दिनं दिनं ॥ ५ ॥

श्वभ्रं कृत्वा तु तत्प्राच्यां धान्यान्यास्तीर्य चोपरि ।
कलशान् सप्त संपूर्णान् सोपस्थानान्निधाय च ॥ ६ ॥

विधिवत्कलशैर्वैरमभ्यर्च्य स्नापयेत्ततः ।
पञ्चशयनान्यास्तीर्य भूपयित्वार्चयेत्तथा ॥ ७ ॥

बध्वा प्रतिसरां बिम्बं शाययित्वा विचक्षणः ।
उत्तराच्छादनं कुर्याद्वस्त्रेणैव गलादधः ॥ ८ ॥

यथोक्तेन विधानेन पञ्चाग्न्याघारमाचरेत् ।
होता हौत्रक्रमेणाग्नौ सभ्ये हौत्रं प्रशंसति ॥ ९ ॥

निरूप्याज्यं तथाध्वर्युः परिषिच्य च वैष्णवम् ।
हुत्वा पुरुषसूक्तं च विष्णुसूक्तं ततः परम् ॥ १० ॥

सर्वदैवत्यहोमं च जहुयादुक्तमार्गतः ।
पश्चादाहवनीयाग्नौ पौरुषं सूक्तमेव च ॥ ११ ॥

वैष्णवं चतुरावर्त्य हुत्वा चैन्द्रं जुहोति वै ।
अन्वाहार्ये सुहोतव्यं वैष्णवं च जयानपि ॥ १२ ॥

अभ्याधानान् राष्ट्रभृतौ ब्राह्मं तत्र जुहोति च ।
गार्हपत्ये च होतव्यं शतमावर्त्य वैष्णवम् ॥ १३ ॥

जुहुयादावसथ्ये तु विष्णुसूक्तमतःपरम् ।
रुद्रसूक्तं ततो हुत्वा रात्रिशेषं व्यपोह्य च ॥ १४ ॥

ततः प्रभाते स्नात्वैव पञ्चस्वग्निषु वैष्णवम् ।
विष्णुसूक्तं च हुत्वैषामन्तहोमश्च हूयताम् ॥ १५ ॥

गर्भालयं प्रविश्याथ पदानि परिकल्प्य च ।
दैविकांशं त्रिधा कृत्वा द्व्यंशं पूर्वं व्यपोह्य च ॥ १६ ॥

पश्चिमे चैकभागे तु स्थापयेत स्थितं हरिम् ।
अथवा तद्द्विभागे वा स्थापयेदिति निश्चयः ॥ १७ ॥

देवस्य दक्षिणे पार्श्वे श्रियं वामे महीं तथा ।
कुड्यकौतुकयोर्मध्ये मुन्योः स्थानमुदाहृतम् ॥ १८ ॥

प्रतिष्ठोक्तक्रमेणैव रत्नन्यासं समाचरेत् ।
बेरं गर्भालयं नीत्वा ध्रुवसूक्तं समुच्चरन् ॥ १९ ॥

विष्णुसूक्तं ततो जप्त्वा पौरुषं सूक्तमेव च ।
स्थापयेत् ध्रुवबेरं तु देव्यौ च स्थापयेत्क्रमात् ॥ २० ॥

तत्तन्मन्त्रं समुच्चार्य मुनी च स्थापयेत्क्रमात् ।
आसीनं तु हरिं देवं मानुष्ये किञ्चिदाश्रिते ॥ २१ ॥

स्थापयेदासनस्योर्ध्वे रत्नन्यासं समाचरेत् ।
आचार्यस्थापकादीनामृत्विजां दक्षिणां ददेत् ॥ २२ ॥

शिलामयं महद्बेरं करैर्धार्यं न चेत्कृतम् ।
बेरशुद्धिक्रियां सर्वां शक्त्या कृत्वा यथोचिताम् ॥ २३ ॥

तस्मात्प्रतिष्ठाकालात्तु पूर्वमेव स्थिरोदये ।
बलवद्भिः सुवासोभिर्भगवद्भक्तिसंयुतैः ॥ २४ ॥

रज्जुभिः सुदृढैः सम्यग्बध्वा बेरं यथार्हकम् ।
समुद्धृत्य च यन्त्रैश्च विमानं प्रविशेत्क्रमात् ॥ २५ ॥

प्रविश्यान्तर्विमानं तु ध्रुवस्थानं समीक्ष्य च ।
न्यस्तरत्नं समासाद्य तदूर्ध्वस्थं यथा भवेत् ॥ २६ ॥

मौञ्जीपाशैस्तथान्यैश्च यन्त्रैश्च स्वस्तिकेन तु ।
खादिराद्यैस्तु याज्ञीयैर्दारुभिः सारवत्तरैः ॥ २७ ॥

कृत्वा यन्त्रं यथायोग्यं भुवं तामवनिं यथा ।
न स्पृशेत्तु यथा बेरं कुर्यादुपरिबन्धनम् ॥ २८ ॥

दृढमेवं समास्थाप्य बेरं तत्राप्रमादतः ।
पश्चान्मुहूर्ते संप्राप्ते त्वाचार्यः शिल्पिना सह ॥ २९ ॥

तन्महाबेरयन्त्रं च शनैरेव विसृज्य वै ।
स्थापयेदप्रमादेन रत्नोपरि यथा दृढम् ॥ ३० ॥

ऋजुत्वं च दिशां वीक्ष्य सम्यक् सूत्रविलम्बनैः ।
स्थापयेदचलं बेरमष्टबन्धं प्रयोजयेत् ॥ ३१ ॥

अथवा शिल्पिना पूर्वं बेरं संस्थाप्य तद् दृढम् ।
मुहूर्ते मन्त्रसंयुक्तमाचार्यः स्थापयेत्क्रमात् ॥ ३२ ॥

किट्टवालुकयोरष्टौ लाक्षाशर्करयोश्च षट् ।
अश्मनोऽपि च तावन्तौ माषगैरिकयोरुभौ ॥ ३३ ॥

गुग्गुलोरेक एवं स्यादेतान् भागान्प्रचूर्णयेत् ।
तैलाज्यनवनीतानि मधूच्छिष्टं च योजयेत् ॥ ३४ ॥

एतत्सर्वं समालोड्य यथापाकं विपाचयेत् ।
अष्टबन्धस्त्वयं प्रोक्तः प्रतिमानां मनीषिभिः ॥ ३५ ॥

विधिना स्थापयेद्देवं शिल्पिभिः शास्त्रकोविदैः ।
कारयेदक्षिमोक्षान्तं बिम्बं नयनबन्धनम् ॥ ३६ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे शिलाबेरस्थापनविधिर्नाम चतुर्दशोऽध्यायः ॥

---

## पञ्चदशोऽध्यायः

अथातः संप्रवक्ष्यामि बेरार्थं दारुसङ्ग्रहम् ।
खादिरं चासनं वाथ सालं वा तिमिशं तथा ॥ १ ॥

चन्दनं चम्पकं वाथ बन्धूकं शाकमेव वा ।
शुद्धदेशे समुद्भूतमृजुं परिणतं शुभम् ॥ २ ॥

निर्दोषं गुणभूयिष्ठं दृष्ट्वा कर्म समारभेत् ।
शिलाग्रहणवद्वृक्षच्छेदाचार्यस्तक्षकेण तु ॥ ३ ॥

वृक्षमूले बलिं दद्याद्वनराजाय इत्यतः ।
उद्वास्य तत्र वसतो यस्मिन् देशे इति ब्रुवन् ॥ ४ ॥

शान्तिहोमं ततो हुत्वा पुण्याहं तत्र वाचयेत् ।
शिलासङ्ग्रहणोक्तेन विधिना कलशान् न्यसेत् ॥ ५ ॥

आत्मप्रतिसराबन्धः शयनं चात्मरक्षणम् ।
स्वप्नसन्दर्शनं होमं सर्वं पूर्ववदाचरेत् ॥ ६ ॥

ततः प्रभाते शुद्धात्मा स्नात्वा चाहतवाससा ।
वृक्षं प्रदक्षिणं कृत्वा प्रोक्षणैः प्रोक्षणं चरेत् ॥ ७ ॥

सङ्गृह्य परशुं पश्चाद्गायत्रीं वैष्णवीं जपन् ।
सोमं राजानमित्युक्त्वा छिद्याच्चैवोत्तरामुखः ॥ ८ ॥

पश्चात्तक्षकमाहूय वस्त्राभरणभूषितम् ।
परश्वथाद्यैस्तेनैव छेदयित्वा यथार्हकम् ॥ ९ ॥

भूमौ निपतिते वृक्षे चोर्ध्वभागो मुखं भवेत् ।
संव्यपोह्य त्वचं पश्चात्सारं सङ्गृह्य तत्र च ॥ १० ॥

कलशैरभिषिच्याथ पञ्चभिः पूर्ववत्क्रमात् ।
भूतयक्षपिशाचानां नागानां च बलिं ददेत् ॥ ११ ॥

अग्निं विसर्जयेच्चापि यथोक्तां दक्षिणां दिशेत् ।
ततः स भृत्यैस्तद्दारुं शकटोपरि यन्त्रितम् ॥ १२ ॥

यथोचितं समादाय स्वस्तिसूक्तं समुच्चरन् ।
गत्वा जलेन संशोध्य शूलं सम्यक् प्रकल्पयेत् ॥ १३ ॥

दार्वीं प्रतिमां वापि कुर्यादेकेन दारुणा ।

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे दारुसङ्ग्रहणं नाम पञ्चदशोऽध्यायः ॥

---

## षोडशोऽध्यायः

अथातः संप्रवक्ष्यामि बेरशूलस्य लक्षणम् ।
ध्रुवबेरोक्तमानेषु यथा प्रोक्तेषु तेषु च ॥ १ ॥

इष्टमानं विनिश्चित्य दशतालं प्रकल्पयेत् ।
विधिवद्बेरयोग्यानां दारूणां काष्ठकारुभिः ॥ २ ॥

मूलमग्रं च विज्ञाय शूलान् सम्यक् प्रकल्पयेत् ।
स्थानकासनशय्यानां चतुरष्टाश्रवृत्तकान् ॥ ३ ॥

अर्धेन षष्टिरङ्गुल्यः पश्चाद्दण्डस्य चायतिः ।
नाहश्चापि चतुर्विंशच्चतुर्दश षडङ्गुलम् ॥ ४ ॥

ऊरुदण्डस्य चायामः पञ्चविंशतिकाङ्गुलः ।
नाहः षोडश चोद्दिष्टो भागो जान्वोरुदाहृतः ॥ ५ ॥

जङ्घादण्डस्य चायामश्चोरुदण्डसमो भवेत् ।
द्वादशाङ्गुलको नाहस्तस्यापि परिकीर्तितः ॥ ६ ॥

गोलकं चापि गुल्फस्य मानं पाण्योर्द्विगोलकम् ।
पार्श्वस्थदण्डयोर्मानमनुरूपं प्रकल्पयेत् ॥ ७ ॥

नाहं तयोः समुद्दिष्टमादित्याङ्गुलसम्मितम् ।
कटिदण्डस्य चायामं षोडशाङ्गुलमिष्यते ॥ ८ ॥

द्विभागं तस्य विस्तारमुत्सेधस्तु षडङ्गुलः ।
मध्यदण्डस्य चायामं द्वात्रिंशत्समुदाहृतम् ॥ ९ ॥

विस्तारं च घनं चापि कटिदण्डवदिष्यते ।
बाहुदण्डस्य मानं स्यादङ्गुलानां तु विंशतिः ॥ १० ॥

तस्यार्धं नाहमुद्दिष्टं प्रकोष्ठश्चैकविंशतिः ।
अङ्गुलीनां तथा नाभौ नवाङ्गुलमुदाहृतम् ॥ ११ ॥

बाहुप्रकोष्ठजङ्घानामूर्वोरपि तथैव च ।
संबन्धदारुदेशानां प्रमाणं च यथोचितम् ॥ १२ ॥

वक्रमङ्कुशवत्कुर्यादग्रं तेषां यथा दृढम् ।
पाणिपादतलायामश्चादित्याङ्गुल उच्यते ॥ १३ ॥

घनमर्धाङ्गुलं प्रोक्तं तौ तु ताम्रेण योजयेत् ।
यथासनं स्यात्फलकां चतुरङ्गुलमुन्नताम् ॥ १४ ॥

उचितायतविस्तारामासने योजयेद्गुरुः ।
वंशदण्डस्य चाग्रेण सार्धद्वाविंशदङ्गुलम् ॥ १५ ॥

व्यपोह्य वक्षोदण्डं च योजयेत्तद्विधानवित् ।
वक्षोदण्डोपरिष्टात्तु नाहः स्यात् द्वादशाङ्गुलः ॥ १६ ॥

कट्यूर्वोर्दण्डयोश्चापि पार्श्वदण्डौ सुयोजयेत् ।
अनुक्तमत्र यच्चापि युक्त्या तक्ष्णा च कारयेत् ॥ १७ ॥

अथ श्रीभूमिदेव्योस्तु शूलमानं प्रवक्ष्यते ।
नारायणस्य देवस्य बाहुमानेन योजयेत् ॥ १८ ॥

वेदाङ्गुलाधिकं मानं नवतालं तयोर्यथा ।
शूलान् संकल्पयेत्तस्याद्देवीभ्यां च पृथक्क्रमात् ॥ १९ ॥

वंशदण्डस्य चायामं षट्पञ्चाशत्तथाङ्गुलम् ।
बाह्वोर्द्वादश चोद्दिष्टः पार्श्वण्डो यथोचितः ॥ २० ॥

नवाङ्गुलस्तयोर्नाह उभयोः समुदाहृत ।
वक्षोदण्डस्य चायामश्चतुर्विंशाङ्गुलो भवेत् ॥ २१ ॥

ऋत्वङ्गुलश्च विस्तार उत्सेधो भाग उच्यते ।
कटिदण्डस्य चायामो मुखं त्र्यङ्गुलमुन्नतम् ॥ २२ ॥

षडङ्गुलस्तु विस्तारस्तस्यापि परिकीर्त्यते ।
ऊरुदण्डस्य चायामो यवद्वयमुदाहृतम् ॥ २३ ॥

यवो नाहः समुद्दिष्टो जानुभागं प्रकल्पयेत् ।
जङ्घा चोरुसमा नाहे दशाङ्गुलमुदाहृतम् ॥ २४ ॥

चरणं भाग उद्दिष्टो देव्योरेवं क्रमेण च ।
बाहुदण्डस्य चायामः षोडशाङ्गुल उच्यते ॥ २५ ॥

तदर्धमेव नाहः प्रकोष्ठः सप्तदशाङ्गुलः ।
नाहं तस्याङ्गुलं तस्य शिष्टं देववदाचरेत् ॥ २६ ॥

इति सङ्क्षेपतः प्रोक्तं शूलमानं तपोधनाः ।
नारायणस्य देवीभ्यामपि चैवं प्रधानतः ॥ २७ ॥

अन्येषां परिवाराणामुक्ततालप्रमाणतः ।
शूलंश्च कल्पयित्वैव स्थापयेद्गुरुसत्तरः ॥ २८ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे शूललक्षणं नाम षोडशोऽध्यायः ॥

---

## सप्तदशोऽध्यायः

अथातः संप्रवक्ष्यामि शूलसंस्थापनाविधिम् ।
स्थापनादिवसात्पूर्वं नवमे वाथ सप्तमे ॥ १ ॥

पञ्चमेऽहनि वा कुर्याद्विधिना चाङ्कुरार्पणम् ।
प्रमुखे दक्षिणे वापि यज्ञशालां प्रकल्पयेत् ॥ २ ॥

हस्तैकादशविस्तारं चतुरश्रं समन्ततः ।
कूटागारं प्रपां वापि यमोत्सेधस्थलान्विताम् ॥ ३ ॥

तन्मध्ये च चतुर्दिक्षु वितरात्सर्वतः समाम् ।
अरत्निमात्रमुत्सेधां कुर्याच्छयनवेदिकाम् ॥ ४ ॥

शालायाः परितः कुर्यादग्निकुण्डानि पञ्च हि ।
ऐशान्ये यज्ञशालायां श्वभ्रं च परिकल्पयेत् ॥ ५ ॥

पूर्वेद्युरपराह्णे च स्थापनादिवसात्क्रमात् ।
यज्ञशालामलङ्कुर्यात्सपताकां वितानकैः ॥ ६ ॥

मुक्तादामादिकैरन्यैर्यथा स्याच्छुभदर्शनम् ।
तोरणानि च तत्रैव स्थापयेच्च चतुर्दिशम् ॥ ७ ॥

दर्भमालाभिरावेष्ट्य गोमयेनोपलेपयेत् ।
तस्यां रात्रौ प्रदोषे च वास्तुहोमं च कारयेत् ॥ ८ ॥

ततः पुरस्ताच्छ्वभ्रस्य कलशान् सप्त विन्यसेत् ।
धान्यवेद्यां विधानं च श्वभ्रं चापि समर्चयेत् ॥ ९ ॥

श्वभ्रस्य दक्षिणे पार्श्वे चतुस्तालं समन्ततः ।
धान्यवेदीं च सङ्कल्प्य दर्भांस्तत्र समास्तरेत् ॥ १० ॥

आस्तीर्याहतवस्त्राणि शूलानादाय चादरात् ।
बालागारात्ततो देवं स्वस्तिसूक्तं समुच्चरन् ॥ ११ ॥

श्वभ्रे संस्थापयेत्तत्र प्रतद्विष्णुरिति ब्रुवन् ।
शूलांश्चापि तथा नीत्वा सर्वान् लक्षणतः कृतान् ॥ १२ ॥

क्षीरप्रक्षालितान् कृत्वा तैलेनाभ्यज्य वै ततः ।
असङ्कुलान्समादाय देवीशूलैः समं क्रमात् ॥ १३ ॥

गायत्रीं वैष्णवीं जप्त्वा तेषु वस्त्रेषु विन्यसेत् ।
विपर्यासो यथा न स्यात्तथा स्थापनमाचरेत् ॥ १४ ॥

स्नापयेत्कलशैर्देवांश्चतुर्भिर्दशभिर्युतैः ।
स्नापयित्वा क्रमेणैव तच्छिद्रैरेव वारिभिः ॥ १५ ॥

प्रोक्षयेदपि शूलांश्च तत्तद्देव्योरथान्तरे ।
श्वभ्राद्देवं समुत्थाप्य पीठे शुद्धाम्बरेण तु ॥ १६ ॥

परिधाय समभ्यर्च्य विग्रहैः षड्भिरव्ययम् ।
शयनं संप्रकल्प्यैव शय्यावेद्यां विधानतः ॥ १७ ॥

देवस्य दक्षिणे पार्श्वे शूलानां च तथैव च ।
वस्त्रैश्च शयनं कृत्वा देवं शूलैः सहानयेत् ॥ १८ ॥

ततः प्रतिसरां बध्वा शूलानां च प्रकोष्ठके ।
शाययेत्सहशूलांश्च यद्वैष्णवमिति ब्रुवन् ॥ १९ ॥

उत्तरच्छदवस्त्रैश्च शाययित्वा ततो बुधः ।
पञ्चानामप्यथाग्नीनामाघारं जुहुयुः क्रमात् ॥ २० ॥

आघारानन्तरं सभ्ये यजेद् व्याहृतिवैष्णवम् ।
उपजुह्वा च तां हुत्वा जुहुयाच्चरुणा बुधः ॥ २१ ॥

पुरस्तादेव सभ्यस्य तिष्ठन् होत्रं प्रशंसयेत् ।
पश्चादावाहयेद्देवं मूर्तिमन्त्रैर्यथाक्रमम् ॥ २२ ॥

सभ्याग्नौ तत्क्रमेणैव समावाह्य विधानवित् ।
निर्वापं च ततः कृत्वा तत्क्रमेणाहुतीर्यजेत् ॥ २३ ॥

तथैवाहवनीयाग्नौ वैष्णवं चैन्द्रमेव च ।
आग्नेयं पौरुषं सूक्तं क्रमेण जुहुयात्ततः ॥ २४ ॥

अन्वाहार्ये यजेद्याम्यं विष्णुसूक्तं च नैर्ऋतम् ।
वारुणं गार्हपत्ये च वैष्णवं मारुतं तथा ॥ २५ ॥

आवसथ्ये तु कौबेरमैशं सौरं च तत्र वै ।
मिन्द्राहुतिं च जुहुयाज्जुहा च विधिवत्क्रमात् ॥ २६ ॥

जुहुयाच्च पुनः सभ्ये विष्णुसूक्तं च वैष्णवम् ।
ईङ्कारार्दीस्ततो हुत्वा वैष्वक्सेनं च गारुडम् ॥ २७ ॥

सौदर्शनं च हुत्वा तु तमग्निं परिषेचयेत् ।
अन्तहोमं ततो हुत्वा अन्यानग्नीन्विसृज्य च ॥ २८ ॥

नृत्यैर्गेयैश्च वाद्यैश्च रात्रिशेषं नयेत्ततः ।
अथाचार्यः प्रभाते तु स्नात्वा नित्यं समाप्य च ॥ २९ ॥

यजमानसमायुक्तो गर्भगेहं प्रविश्य च ।
स्थापनं यत्र देवानां पदमुक्तं विचार्य च ॥ ३० ॥

पीठं च तमलङ्कुर्यादुक्तेनैव विधानतः ।
प्रतिष्ठोक्तक्रमेणैव रत्नन्यासं समाचरेत् ॥ ३१ ॥

आचार्यस्थापकादीनामृत्विजां दक्षिणां ददेत् ।
शुभे मुहूर्ते संप्राप्ते शयनादुत्थितं हरिम् ॥ ३२ ॥

शूलैः सार्धं समादाय द्वारपीठे च विन्यसेत् ।
मन्दिराभिमुखं पश्चाच्छूलांश्च परितो हरेः ॥ ३३ ॥

देवस्य देव्योः शूलांस्तानस्तत्तद्रूपांश्च कल्पयेत् ।
तल्लिङ्गं मन्त्रमुच्चार्य गायत्रीं वैष्णवीं ब्रुवन् ॥ ३४ ॥

स्थापयेद्देवदेवस्य शूलान् देव्योस्ततः क्रमात् ।
वंशो वक्षस्तथापार्श्वे प्रथमं योजयेत्क्रमात् ॥ ३५ ॥

आधारदण्डयोः पश्चाच्छूलान् शिष्टान् प्रयोजयेत् ।
पुण्याहं वाचयेत्काले सभ्यमग्निं विसर्जयेत् ॥ ३६ ॥

बालागारे च तं देवं संस्थाप्य विधिनार्चयेत् ।
ततः शिल्पिनमाहूय शास्त्रज्ञं प्रियदर्शनम् ॥ ३७ ॥

वस्त्रैराभरणैश्चापि पूजयित्वा सुतोष्य च ।
रज्जुबन्धादिकं कर्म तेनोक्तेनैव कारयेत् ॥ ३८ ॥

अत्रानुक्तं तु यत्सर्वं शिल्पशास्त्रोक्तवच्चरेत् ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे शूलस्थापनविधिर्नाम सप्तदशोऽध्यायः ॥

---

## अष्टादशोऽध्यायः

अथातः संप्रवक्ष्यामि ध्रुवबेरविधिक्रमम् ।
उत्तमं शैलजं बेरं ताम्रजं चोत्तमोत्तमम् ॥ १ ॥

मध्यमं मृण्मयं ज्ञेयमधमं दारवं तथा ।
मोक्षार्थी शैलजं कुर्याद्राज्यकामी तु ताम्रजम् ॥ २ ॥

धनार्थी मृण्मयं कुर्यात्पुत्रकामी तु दारवम् ।
सर्वप्रजासमृद्ध्यर्थं मृण्मयं चेति केचन ॥ ३ ॥

विमानगर्भगेहस्य विस्तारो यावदेव हि ।
ध्रुवबेरस्य मानं तु तावन्मानमुदाहृतम् ॥ ४ ॥

तन्मानात्पादहीनं वाप्यर्धं वाथ तथैव च ।
विमानस्तम्भतुल्यं वा द्वारमानसमं तथा ॥ ५ ॥

यजमानप्रमाणं वा ध्रुवबेरं विधीयते ।
पादादि चोष्णीषान्तं तदूर्ध्वमानमिति स्मृतम् ॥ ६ ॥

विमानगर्भविस्तारमानमानि तदुत्तमम् ।
विमानद्वारतुल्यं च स्तम्भमानं च मध्यमम् ॥ ७ ॥

यजमानप्रमाणं तदधमं परिचक्षते ।
विमाने चोत्तमे कुर्यात् ध्रुवबेरं तथोत्तमम् ॥ ८ ॥

उत्तमे चाधमं बेरं न कुर्याद्द्विजसत्तमः ।
अधमे चोत्तमं बिम्बं यदि कुर्यात्तदुत्तमम् ॥ ९ ॥

बेरं द्वारसमं श्रेष्ठमिति कैश्चिदुदाहृतम् ।
द्वारात्पादाधिकं चाहुः पादहीनं तु केचन ॥ १० ॥

चित्रं चित्रार्धकं चैव चित्राभासमिति त्रिधा ।
मानोन्मानप्रमाणेन व्यक्तं कुर्याद्विधानतः ॥ ११ ॥

सर्वाङ्गमपि संदृश्यं यत्तच्चित्रं प्रकीर्त्यते ।
सर्वाङ्गमर्धदृश्यं यत्तदर्धं चित्रकं मतम् ॥ १२ ॥

पटकुड्यादिलेख्यं तच्चित्राभासमिति त्रिधा ।
उत्तमं चित्रमित्याहुश्चित्रार्धं मध्यमं विदुः ॥ १३ ॥

आभासमधमं प्रोक्तमाभासे तु न चार्चयेत् ।
दानहोमजपेष्वेव भावनार्थमिदं स्मृतम् ॥ १४ ॥

चित्रं चेच्छैलजं बिम्बमुत्तमोत्तममुच्यते ।
चित्रे तु शैलजे बिम्बे ताम्रजे मृण्मयेऽपि च ॥ १५ ॥

सर्वाण्यङ्गानि दृश्यानि भूषणान्यम्बराणि च ।
तत्तत्स्थाने प्रकुर्वीत सर्वाण्यपि विधानतः ॥ १६ ॥

सर्वसौन्दर्यसंयुक्तं शिल्पिभिः कारयेद्बुधः ।
स्थानके चासने वापि शयने वापि कारयेत् ॥ १७ ॥

शैलजं ध्रुवबिम्बं तु ब्राह्मणानां विशिष्यते ।
ताम्रजं क्षत्रियाणां च वैश्यानां मृण्मयं तथा ॥ १८ ॥

शूद्राणां दारवं प्रोक्तं वर्णानामप्यनुक्रमात् ।
सर्वेषां शैलजं श्रेष्ठं मृण्मयं चेति केचन ॥ १९ ॥

शैलजे दारवे चैवमर्धचित्रं विधीयते ।
सर्वाङ्गमर्धसंदृश्यमर्धमेव सदाचरेत् ॥ २० ॥

तद्भूषणानि सर्वाणि चार्धदृश्यानि कारयेत् ।
चित्रं वाप्यर्धचित्रं वा बेरं लक्षणसंयुतम् ॥ २१ ॥

कारयित्वा विधानेन स्थापनारम्भमाचरेत् ।
पदानि गर्भगेहे तु कृत्वा तानि विधानतः ॥ २२ ॥

षट्पञ्चाशद्द्विशतिकं पदं सूत्रेण सूचयेत् ।
पिष्टतोययुतेनैव रेखाः सप्तदशैव हि ॥ २३ ॥

प्रागग्राश्चोत्तराग्राश्च तावत्सूत्रसमा यथः ।
तन्मध्ये षोडशपदं ब्रह्मभागं प्रचक्षते ॥ २४ ॥

तस्यैव परितो दैवं पदत्रयसमावृतम् ।
चतुष्पदाधिकाशीति दैविकं पदमुच्यते ॥ २५ ॥

तस्यापि परितो भागं पदद्वयसमावृतम् ।
मानुष्यं च विजानीयात्पदं षण्णवतिं द्विजाः ॥ २६ ॥

तस्यापि परितश्चैव पदेनैकेन संवृतम् ।
पदं षष्टिस्तु पैशाचं भित्तिपार्श्वे समावृतम् ॥ २७ ॥

एवं पदे कृते तत्र ब्रह्मस्थाने च मध्यमे ।
स्थापयेत्कौतुकं बिम्बं विधिना सर्वयत्नतः ॥ २८ ॥

दैविकं च त्रिधा कृत्वा द्विभागं पुरतस्त्यजेत् ।
अपरे स्थानकं स्थाप्यं मध्यभागेऽथवा पुनः ॥ २९ ॥

दैवमानुषयोर्मध्ये चासनं संप्रकल्पयेत् ।
किन्तु दैविकसंयुक्ते मानुष्ये शयनं स्मृतम् ॥ ३० ॥

दीर्घशालानिमानं चेद्दैविके सर्वसंयुते ।
मानुष्ये शयनं कुर्यादर्हानर्हौ विचिन्त्य च ॥ ३१ ॥

मायां संह्लादिनीं चैव किष्किन्धं सुन्दरं क्रमात् ।
पैशाचे च पदे कुर्याद् व्यजनेन समायुतम् ॥ ३२ ॥

ब्रह्मसूत्रप्रमाणं तु यवमात्रमिति स्मृतम् ।
तद्यवं च द्विधा कृत्वा दक्षिणार्धे यथा भवेत् ॥ ३३ ॥

देवस्य मध्यसूत्रं तत्तथैव स्थापयेद्धरिम् ।
भुवङ्गस्य समं प्रोक्तं स्थानके पीठमुन्नतम् ॥ ३४ ॥

भुवङ्गोपरि तालं वा ध्रुवपीठस्य चोन्नतिः ।
ध्रुवबेरस्य पादस्य प्रतिदिक्चतुरङ्गुलम् ॥ ३५ ॥

विस्तारमूर्ध्ववेद्यास्तु पद्मपत्रदलैर्युतम् ।
मण्डलं चतुरश्रं वा पीठं कुर्यात्तदर्हकम् ॥ ३६ ॥

त्रिवेदीसहितं कुर्याद्विस्तारं तु यथार्हकम् ।
एवं स्थानकपीठं स्यादासीने च प्रवक्ष्यते ॥ ३७ ॥

ध्रुवबेरं त्रिधा कृत्वा चैकं सिंहासनोच्छ्रयम् ।
तदर्धं विस्तृतं प्रोक्तमुपधानेन संयुतम् ॥ ३८ ॥

पादाश्रयणपीठेन पद्माकारेण संयुतम् ।
यथासौन्दर्यकं कुर्याच्छेषं युक्त्या समाचरेत् ॥ ३९ ॥

बेरायामचतुर्भागः शयनोच्छ्राय उच्यते ।
तत्तुरीयांशकोत्सेधः शिरोभागो विशेषतः ॥ ४० ॥

पार्श्वयोरुभयोश्चैव समं तत्र व्यपोह्य च ।
शेषभोगं त्रिधावेष्टञ्च पञ्चवर्णसमायुतम् ॥ ४१ ॥

अधः पुच्छं शिरश्चोर्ध्वं सर्वदेहं तु वेष्टयेत् ।
तदुत्सङ्गतले देवं शयानं संप्रकल्पयेत् ॥ ४२ ॥

फणानां पञ्चकं कुर्याद्विषवेगसमायुतम् ।
एवमेव प्रकुर्वीत स्थानासनशयानकम् ॥ ४३ ॥

पीठं कृत्वा प्रयत्नेन स्थापनारम्भमाचरेत् ।
बिम्बं सलक्षणं कुर्यात्सर्वाभरणसंयुतम् ॥ ४४ ॥

शिलया प्रतिमा (शिलाप्रतिमया ?) देवपादपीठं शिलामयम् ।
योजयित्वा विधानेन युक्तलक्षणसंयुतम् ॥ ४५ ॥

शूलस्थापनमार्गेण स्थापयेत्तद्विचक्षणः ।
स्थानकं वासनं वापि शयानं वा विधानतः ॥ ४६ ॥

तत्तत्स्थानं समालोक्य स्थापयेत् सुदृढं क्रमात् ।
ध्रुवस्य कौतुकस्यापि स्थले रत्नं समर्पयेत् ॥ ४७ ॥

पीठे गर्भे तथा कुर्याद्भागनिम्नेन संयुतम् ।
तालविस्तारसंयुक्तं कृत्वा तत्र पदानि वै ॥ ४८ ॥

पञ्चविंशतिमध्यादि पदानि परिकल्पयेत् ।
तन्मध्ये ब्रह्मभागः स्यात्परितश्च पदानि तु ४९ ॥

दिग्देवतानामष्टानां साध्यादीनां स्मृतानि वै ।
तत्तत्पदे च मन्त्रैस्तैस्तत्रत्यांश्च समर्चयेत् ॥ ५० ॥

धातुबीजांश्च तैर्मन्त्रैः सौवर्णानष्टमङ्गलान् ।
कूर्मं तं गरुडं चापि सौवर्णेन गजेन च ॥ ५१ ॥

पञ्चायुधैश्च सौवर्णैर्वर्णचिह्नैः समन्वितम् ।
ब्राह्मणानां हितार्थाय स्रुक्स्रुवादीनि सर्वशः ॥ ५२ ॥

अन्येषां वर्णभेदानां तत्तच्चिह्नानि योजयेत् ।
रत्नानि स्पर्शयेच्छूलं यथार्हं स्थापयेत्तथा ॥ ५३ ॥

शिल्पिना सुदृढं कृत्वा पश्चात्कर्म समाचरेत् ।
एवं स्थानकमुद्दिष्टमासनं तु प्रवक्ष्यते ॥ ५४ ॥

सिंहासने प्रकुर्वीत रत्नन्यासं पदे क्रमात् ।
रत्नानि स्पर्शयेच्छूलं तथा तत्रापि कल्पयेत् ॥ ५५ ॥

शयनं चासनं चोर्ध्वे रत्नन्यासो विधीयते ।
बेरमध्यं यथा स्पर्शं तथा रत्नं समर्पयेत् ॥ ५६ ॥

अथवा पादयोः पार्श्वे रत्नन्यासं समाचरेत् ।

रत्नानि प्राणवद् ध्यात्वा तथा धातूंश्च धातुवत् ॥ ५७ ॥
बीजानि चेन्द्रियाणीति तथा ध्यायेत् लयं बुधः ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे ध्रुवबेरविधि-
र्नामाष्टादशोऽध्यायः ॥

---

## एकोनविंशोऽध्यायः

पूर्वोक्तेन विधानेन स्थापितं तु शिलामयम् ।
सर्वत्र यवमात्रेण विहीनं तत्प्रमाणतः ॥ १ ॥

घटशर्करयोर्मध्ये पट्टिकापि च वर्णकैः ।
तद्यवं पूरयेत्तत्र तत्प्रमाणं यथोचितम् ॥ २ ॥

शर्करां चापि संसाध्य यथायोगं यथाविधि ।
निर्यासेन कपित्थस्य युक्तेनैवाम्बुना सह ॥ ३ ॥

संपिष्टां शर्करां स्निग्धामालिप्य च यथाक्रमम् ।
अंशुकाद्यैश्च सुश्लक्ष्णं दर्शनीयं च कारयेत् ॥ ४ ॥

शिलोर्ध्वं यवमात्रं तु शर्करालेपनं स्मृतम् ।
कारयित्वा विधानेन चित्रे चित्रार्धके तथा ॥ ५ ॥

नवं च मृदु सूक्ष्मं च तान्तवं वस्त्रमाहरेत् ।
अग्रं पादं विदित्वा तन्मुखं पृष्ठं तथैव च ॥ ६ ॥

अग्रं मूर्ध्नि च मूर्धादि मुखमूर्ध्वं तथैव च ।
पृष्ठमन्तस्तथा पादे पुच्छं पादान्तमेव च ॥ ७ ॥

योजयेत्पटमेवं वै विपरीतं न चाचरेत् ।
शैलस्य मृण्मयस्यापि दारवस्य ध्रुवस्य च ॥ ८ ॥

बेरस्य वर्णसंयोगे त्वक्स्थाने वर्णमुच्यते ।
सर्वाङ्गं च समाच्छाद्य तिलमात्रं घनं पुनः ॥ ९ ॥

शर्करामौक्तिकाख्यं च समालिप्य यथाविधि ।
सुश्लक्ष्णं दर्शनीयं च कृत्वोर्ध्वं च तथैव तत् ॥ १० ॥

भूषणानि च सर्वाणि यथोक्तानि च कारयेत् ।
वर्णान् यथोक्तान् संगृह्य सुवर्णेन च मिश्रितान् ॥ ११ ॥

उक्तेनैव विधानेन तत्तदर्हं विचिन्त्य च ।
तत्तत्प्रदेशं ज्ञात्वैव तत्तद्वर्णं प्रयुज्य च ॥ १२ ॥

शिल्पिना शिल्पशास्त्रोक्तं तत्र वै योजयेत्क्रमात् ।
अथवा शर्करामेव समालिप्य पटं विना ॥ १३ ॥

मौक्तिकाख्यं समालिप्य तत्तद्वर्णांश्च योजयेत् ।
अथवा तिलमात्रेण हीनं बिम्बं च कारयेत् ॥ १४ ॥

ऊर्ध्वे पटं विना तत्र मौक्तिकाख्यं प्रलिप्य च ।
यथोक्तानपि वर्णांश्च योजयेच्च यथाक्रमम् ॥ १५ ॥

दारवं ध्रुवबेरं च यथोक्तेनैव दारुणा ।
कारयित्वा विधानेन स्थापयित्वा च पूर्ववत् ॥ १६ ॥

शर्करालेपनाद्याश्च शिलावत्कारयेत्क्रियाः ।
शैलजे दारवे चापि बिम्बे चैष विधिः स्मृतः ॥ १७ ॥

शिल्पिना कारयित्वैवं प्रतिष्ठामारभेत्पुनः ।
वर्णहीनं ध्रुवं बेरं यदि कुर्याद्विनश्यति ॥ १८ ॥

ध्रुववेरार्चनं चेत्तु वर्णयुक्तं तु कारयेत् ।
ध्रुववेरोक्तमानेन कारयित्वैव मध्यमे ॥ १९ ॥
अर्चास्थानेऽर्चनार्थं यत्स्थापयेत्तद् ध्रुवार्चनम् ।
मानोन्मानप्रमाणेन व्यक्तं कृत्वैव सर्वतः ॥ २० ॥
सर्वाङ्गोपाङ्गसम्पूर्णं कारयेत विधानतः ।
सहजं शङ्खचक्रौ च हस्तपादाश्रयान्वितम् ॥ २१ ॥
शङ्खचक्राश्रयोपेतं कारयित्वा यथाविधि ।
यथोक्तेन विधानेन कृत्वा चैवाक्षिमोचनम् ॥ २२ ॥
जलाधिवासनादीनि कारयेत्तदनुक्रमात् ।
शिलास्थापनमार्गेण स्थापयेदचलं तथा ॥ २३ ॥
प्रतिष्ठोक्तक्रमेणैव प्रतिष्ठां पुनराचरेत् ।
विशेषमत्र वक्ष्यामि शृणुध्वं मुनिसत्तमाः ! ॥ २४ ॥
उत्सवं कर्तुकामश्चेदौत्सवं बिम्बमाहरेत् ।
अक्ष्युन्मेषादिकं तद्वत्कारयेदौत्सवस्य तु ॥ २५ ॥
कुम्भपूजां ततः कृत्वा देवपार्श्वे निधाय च ।
प्रमुखे विन्यसेत्प्राज्ञः कलशांश्च चतुर्दश ॥ २६ ॥
अन्तःस्थं स्नापयेद्देवं कलशैस्तैर्यथाविधि ।
बन्धयित्वा प्रतिसरां पुण्याहं वाचयेत्ततः ॥ २७ ॥
तस्मात्कुम्भं समुद्धृत्य यागशालां विनीय च ।
शयनानि विना तत्र शय्यावेद्याश्च मध्यमे ॥ २८ ॥
धान्यराशिं च कृत्वैव तत्र कुम्भं न्यसेत्पुनः ।
यथोक्ताग्निषु होमांश्च जुहुयात्तु यथाविधि ॥ २९ ॥

यदि स्यादौत्सवं बिम्बं बाह्ये श्वभ्रे तथैव च ।
कलशैः स्थापयित्वैव कुम्भेन सह चोन्नयेत् ॥ ३० ॥

शयनानि तदास्तीर्य शय्यावेद्यां तु शाययेत् ।
प्रभाते कुम्भमानीय पुनरन्तः प्रविश्य च ॥ ३१ ॥

कुम्भाच्छक्तिं समानीय बेरे तत्राचले तथा ।
तां ध्यायेदचलां शक्तिं मन्त्रेणावाहयेत्ततः ॥ ३२ ॥

औत्सवं वामपार्श्वे च स्थापयेन्मुखमण्डपे ।
तस्मादौत्सवबिम्बे तु दीपाद्दीपमिव क्रमात् ॥ ३३ ॥

शक्त्या देवं समावाह्य पुण्याहं वाचयेत्पुनः ।
आसनादिभिरभ्यर्च्य हवींष्यपि निवेदयेत् ॥ ३४ ॥

त्रिकालं स्नानसंयुक्तं प्रातर्मध्याह्नयोस्तु वा ।
स्नानकर्मसमायुक्तमर्चयेत विधानतः ॥ ३५ ॥

आवाहनविसर्गाभ्यां विना तौ नित्यमर्चयेत् ।
स्नपने प्रमुखे तत्र मण्डपे च विशेषतः ॥ ३६ ॥

स्नपनोक्तक्रमेणैव कलशान् विन्यसेत्क्रमात् ।
कलशादीन् समादाय प्रविश्याभ्यन्तरं ततः ॥ ३७ ॥

कलशैः स्नापयेद्देवं मन्त्रैर्युक्तैर्यथाविधि ।
ध्रुवार्चनप्रतिष्ठायामर्चने स्नपनेऽपि च ॥ ३८ ॥

विशेषोऽयमिति प्रोक्तः सर्वमन्यत्समं भवेत् ।
शिलालये ध्रुवं बेरं शिलयैव विधीयते ॥ ३९ ॥

ताम्रेण वा प्रकुर्वीत ध्रुवबेरं शिलालये ।
दारवं मृण्मयं वापि यदि कुर्याद्विनश्यति ॥ ४० ॥

इष्टकाभिर्विमानं चेच्छैलजं ताम्रजं तु वा ।
मृण्मयं दारवं वाथ ध्रुवबेरं च कारयेत् ॥ ४१ ॥

पूर्वोक्तविधिना दारुशूलसंस्थापने कृते ।
यथोक्ताश्च मृदः सर्वाः समाहृत्य विधानतः ॥ ४२ ॥

संपेष्य शोधयित्वैव यथोक्तं सर्वमौषधम् ।
चूर्णानि च यथोक्तानि कषायाणि विधानतः ॥ ४३ ॥

योजयित्वा यथभागं गव्यैरपि सहैव च ।
निर्यासेन कपित्थस्य युक्तं नादेयवारिणा ॥ ४४ ॥

पेषयित्वा मृदः सम्यक् संस्कृत्य च विधानतः ।
साधयित्वाथ मासं वा मासार्धं वा निधाय च ॥ ४५ ॥

नारिकेलस्य सारेण त्रिवृतां रज्जुमाहरेत् ।
रज्जुभिर्बन्धयेच्छूलं यथा तत्सुदृढं तथा ॥ ४६ ॥

बन्धयित्वाष्टबन्धं च शूलमालिप्य सर्वशः ।
मृदं च तां समादाय शूलमालेपयेत्तथा ॥ ४७ ॥

शूलोपरि प्रमाणं यच्चतुर्भागं विभज्य च ।
तत्त्रिभागं मृदा कुर्याद्रज्जुबन्धसमायुतम् ॥ ४८ ॥

घटशर्करया वस्त्रं मौक्तिकावर्णसंयुतम् ।
पूरयेदन्यभागं च तत्प्रमाणविधानतः ॥ ४९ ॥

शर्करां च समालिप्य पटं संयोज्य पूर्ववत् ।
मौक्तिकाख्यं मृदालिप्य भूषणानि प्रकल्प्य च ॥ ५० ॥

यथोक्तेन विधानेन वर्णानपि सुयोजयेत् ।
मृण्मयं ध्रुवबेरं चेत्कारयेदेवमेव तु ॥ ५१ ॥

अर्धचित्रं न कुर्वीत ध्रुवबेरं च मृण्मयम् ।
शूलाधारद्वयं कुर्यात्ताम्रनालसमायुतम् ॥ ५२ ॥

खादिरं ताम्रदण्डं वा भित्तिस्थं सुदृढं चरेत् ।
छिद्रं कृत्वा तदाधारे शूलं यन्त्रेण योजयेत् ॥ ५३ ॥

ध्रुवं तद्योजयित्वैव बेरपृष्ठस्य मध्यगे ।
तत्पृष्ठस्कन्धमध्ये च तदाधारे च योजयेत् ॥ ५४ ॥

शूले छिद्रं न कर्तव्यं कुर्याच्चेत्स विनश्यति ।
साश्रयौ शङ्खचक्रौ च कारयित्वा विचक्षणः ॥ ५५ ॥

हस्तबन्धं च ताम्रेण कृत्वा मूलस्य पादयोः।
ताम्रनालं सुयोज्यैव ताम्रपत्रं तलेऽर्पयेत् ॥ ५६ ॥

एवं स्थानकमुद्दिष्टमासनं तु प्रवक्ष्यते ।
आसने चैकमाधारं पृष्ठस्कन्धे तु कारयेत् ॥ ५७ ॥

शयनं चेदनन्तोर्ध्वे चाधारे शूलमर्पयेत् ।
पृष्ठमध्ये च पादे च स्कन्धे च मकुटेऽप्यथ ॥ ५८ ॥

शेषभोगे यथा शूलं न दृश्येत्कारयेत्तथा ।
शेषोत्सङ्गे यथा बेरं शयानं कारयेत्तथा ॥ ५९ ॥

रज्जुबन्धमृदाद्याश्च क्रियाः पूर्ववदाचरेत् ।
यथा क्रिमीणां नाशः स्यादौषधीभिस्तथाचरेत् ॥ ६० ॥

ताम्रेण ध्रुवबेरं चेन्मधूच्छिष्टविधानतः ।
स्निग्धं कृत्वाथ तेनैव सर्वाङ्गं पूर्णमेव तत् ॥ ६१ ॥

विधिना भूषणैर्युक्तं दर्शनीयं च कारयेत् ।
श्लक्ष्णयैव मृदा बेरमालिप्यैव च तत्पुनः ॥ ६२ ॥

स्रावयित्वा मधूच्छिष्टं ताम्रं सम्यक् प्रताप्य च ।
तत्ताम्रं स्रावयेत्तत्र बेरमेवं प्रकल्पयेत् ॥ ६३ ॥

शोधयित्वैव तद्बेरं स्थापनारम्भमाचरेत् ।
अर्धचित्रं न कर्तव्यं लोहबिम्बं कदाचन ॥ ६४ ॥

स्वर्णमिश्रेण लोहेन यदि कुर्यात्तदुत्तमम् ।
अन्योन्यमिश्रलोहेन देवरूपं न कारयेत् ॥ ६५ ॥

स्थानके चासने चैव शयने च विधिः स्मृतः ।
मृण्मयं द्विविधं प्रोक्तमपक्वं पक्वमित्यपि ॥ ६६ ॥

पूर्वोक्तं मृण्मयं यत्तदपक्वमभिधीयते ।
मृदा कृत्वाऽग्निना दग्धं यत्तत्पक्वमितीरितम् ॥ ६७ ॥

अपक्वं मृण्मयं विष्णोः कारयेत विधानतः ।
यदि पक्वं च कुर्याच्चेत्सर्वनाशकरं भवेत् ॥ ६८ ॥

सर्वेषामपि देवानामपक्वं बेरमुच्यते ।
ज्येष्ठायाश्चापि कुर्याच्चेदपक्वं पक्वमेव वा ॥ ६९ ॥

वक्रतुण्डस्य शास्तुश्च पक्वं वापक्वमेव च ।
पिशाचानां च सर्वेषां पक्वमेवेति कीर्त्यते ॥ ७० ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे घटशर्कराद्यालेपनं नामैकोनविंशोऽध्यायः ॥

---

## त्रिंशोऽध्यायः

ध्रुववेरस्य भेदं च प्रवक्ष्यामि यथाक्रमम् ।
स्थानकं त्रिविधं प्रोक्तं योगं भोगं तथैव च ॥ १ ॥

वीरहस्थानकं चेति तेषां भेद इहोच्यते ।
कारयेत्तु विधानेन देवदेवं चतुर्भुजम् ॥ २ ॥

हस्तं च दक्षिणं पूर्वमभयं वरदं तु वा ।
हस्तं चापि तथा वामं पूर्वं कट्यवलम्बितम् ॥ ३ ॥

दक्षिणापरहस्तेन चक्रं सम्यक् प्रगृह्य च ।
वामेनापरहस्तेन शङ्खमुद्धृत्य सुस्थितम् ॥ ४ ॥

सौम्यदृष्टिसमायुक्तं सर्वदेवनमस्कृतम् ।
श्रिया देव्या च भूदेव्या रहितं योगसंज्ञिकम् ॥ ५ ॥

देवदेवं च कृत्वा तु दक्षिणे भृगुमर्चकम् ।
मार्कण्डेयं तथा वामे पुष्पाञ्जलियुतं मुनिम् ॥ ६ ॥

एकजानुसमासीनं देवं वीक्ष्यार्चनोद्यतम् ।
सौम्यवेषसमायुक्तं कारयेत विधानतः ॥ ७ ॥

कुड्यकौतुकयोर्मध्ये मुन्योः स्थानकमुच्यते ।
भृगुपुण्यार्चितं यत्तद्योगस्थानमुदाहृतम् ॥ ८ ॥

भूमिपुण्यार्चितं कैश्चिद्योगस्थानमुदीरितम् ।
तत्र दक्षिणतो भूमिं वामे पुण्यं च कारयेत् ॥ ९ ॥

पद्मं वामेन हस्तेन गृहीत्वान्यं प्रसार्य च ।
देवं किञ्चित्समीक्ष्यैव विस्मयोत्फुल्ललोचनाम् ॥ १० ॥

देवस्य दक्षिणे पार्श्वे श्रियं देवीं तथैव च ।
दक्षिणेनैव हस्तेन गृहीत्वा फुल्लमुत्पलम् ॥ ११ ॥

हस्तं वामं प्रसार्यैव पश्यन्तीमीषदच्युतम् ।
वामपार्श्वे महीं देवीं विधानेनैव कारयेत् ॥ १२ ॥

बाहुप्रमाणं देवस्य देव्योर्मानमुदाहृतम् ।
भृगुं च दक्षिणे कुर्याद्वामे पुण्यमुनिं तथा ॥ १३ ॥

एकजानुसमासीनौ कारयेदर्चकौ तथा ।
एवं देवीसमायुक्तं भोगस्थानकमुच्यते ॥ १४ ॥

दण्डकं दक्षिणे कुर्याद्वामे पुण्यमुनिं तथा ।
एकजानुसमसीनं देवमुद्वीक्ष्य सुस्थितम् ॥ १५ ॥

गरुडं च तथा वामे देवमुद्वीक्ष्य सुस्थितम् ।
भोगस्थानकमित्येतत्केचिदाहुर्मनीषिणः ॥ १६ ॥

श्रीभूमिभ्यां मुनिभ्यां च रहितं वीरहं विदुः ।
रहितं शङ्खचक्राभ्यां केवलं देवमेव वा ॥ १७ ॥

देवीभ्यां रहितं चापि भूमिपुण्यार्चनायुतम् ।
केश्चिद्वीरहमित्युक्तमासनं तु प्रवक्ष्यते ॥ १८ ॥

योगं भोगं तथा वीरमासनं च त्रिधा विदुः ।
सिंहासने समासीनं देवेशं कारयेत्ततः ॥ १९ ॥

श्रीभूमिभ्यां च रहितं भृगुपुण्यार्चितं तथा ।
योगासनमिति प्रोक्तं भूमिपुण्यार्चितं तु वा ॥ २० ॥

सिंहासने तथासीनं देवं देव्यौ सहासने ।
आसने च तथा कृत्वा कारयेदर्चकौ मुनी ॥ २१ ॥

पृथक् पीठे कृते देव्यौ भोगहानिं प्रयच्छतः ।
भित्तिपार्श्वे परे कुर्यात्सितचामरधारिणीम् ॥ २२ ॥

देवं वीक्ष्य स्थितां मायां दक्षिणे वामतः स्थिताम् ।
संह्लादिनीं प्रकुर्वीत सितचामरधारिणीम् ॥ २३ ॥

किष्किन्धं सुन्दरं चाथ चामरं धारिणौ तथा ।
दक्षिणोत्तरयोर्मूर्ध्नि न्यस्तपाणियुतावपि ॥ २४ ॥

आदित्यचन्द्रौ कुर्वीत भोगासनमिदं स्मृतम् ।
पुष्पाञ्जलियुताभ्यां च भूमिपुण्यार्चितं तथा ॥ २५ ॥

देवीभ्यां रहितं चेत्तद्वीरासनमिदं विदुः ।
सिंहासनोर्ध्वतः पादौ न्यस्यासीनं तथा हरिम् ॥ २६ ॥

ऊरू वस्त्रेण बध्वैव जान्वोरूर्ध्वे प्रसारितौ ।
हस्तौ च विन्यसेदेतत्कैश्चिद्वीरासनं स्मृतम् ॥ २७ ॥

योगं भोगं तथा वीरं शयनं च त्रिधा भवेत् ।
ऊर्ध्वाननं शयानं च पादौ सम्यक् प्रसार्य च ॥ २८ ॥

चतुर्हस्तं द्विहस्तं वा चक्रशङ्खौ विनैव च ।
वामहस्तं प्रसार्यैव किञ्चिदुन्मील्य चक्षुषी ॥ २९ ॥

मकुटे दक्षिणं हस्तमुपधाने तु संन्यसेत् ।
नाभिपद्मसमासीनं ब्रह्माणं पञ्च चायुधान् ॥ ३० ॥

भित्तिपार्श्वाश्रयान् कुर्यात्तत्तद्वर्णसमायुतान् ।
पादपार्श्वे च भित्तौ च कारयेन्मधुकैटभौ ॥ ३१ ॥

जानुमात्रसमुद्रस्थावुग्रवेगसमन्वितौ ।
दह्यमानावनन्तस्य विषज्वालाभिरेव तौ ॥ ३२ ॥

भूमिपुण्यार्चितं चैतच्छयनं योगमुच्यते ।
किञ्चिद् द्वारं समालोक्य किञ्चित्पार्श्वसमाश्रयम् ॥ ३३ ॥
शयानं चोपधाने च सन्न्यस्य मकुटं तथा ।
किञ्चिद्दक्षिणकर्णे च स्पृष्ट्वा तत्रोपधानकं ॥ ३४ ॥
सन्न्यस्य दक्षिणं हस्तं मकुटं तेन संस्पृशेत् ।
किञ्चित्कुञ्चितमार्गेण वामहस्तं प्रसारयेत् ॥ ३५ ॥
पादं दक्षिणमादाय पद्मा स्वोरुद्वये न्यसेत् ।
हस्ताभ्यां मर्दयेत्पादं विस्मयोत्फुल्ललोचना ॥ ३६ ॥
भूमी वामं तथा पादमूरौ विन्यस्य मर्दयेत् ।
ब्रह्मादिदेवान् कुर्वीत पूर्वोक्तेन विधानतः ॥ ३७ ॥
एतद्वै भोगशयनं वीरशय्या प्रवक्ष्यते ।
न स्पृशेन्मकुटं किञ्चिदुपधाने यथा तथा ॥ ३८ ॥
सन्न्यस्य दक्षिणं हस्तं तत्रैव मकुटं न्यसेत् ।
द्वारं सम्यक् समालोक्य शयानं कारयेद्बुधः ॥ ३९ ॥
हस्तद्वयं तथा कुर्याच्चतुर्भुजमथापि वा ।
शङ्खचक्रधरौ द्वौ च भुजौ कुर्याद्विधानतः ॥ ४० ॥
स्थानकादिषु भेदोऽयं ध्रुवबेरे विधीयते ।
सर्वाभ्युदयधर्मार्थी स्थानकं सम्यगाचरेत् ॥ ४१ ॥
सुप्रतिष्ठार्थकामार्थी कारयेदासनं बुधः ।
अविनाशनमोक्षार्थी शयनं परिकल्पयेत् ॥ ४२ ॥
योगार्थी योगमार्गं च भोगार्थी भोगमार्गकम् ।
वीर्यार्थी वीरमार्गं च वीरहं मार्गमाचरेत् ॥ ४३ ॥

ताम्रजे ध्रुवबेरे तु शैलजेऽपि तथैव च ।
शैलजं परिवाराणां मृण्मये मृण्मयं तथा ॥ ४४ ॥

दारवे दारवं चापि विपरीतं न कारयेत् ।
दुर्गागरुडसूर्यास्तु सर्वत्रापि शिलामयाः ॥ ४५ ॥

मृण्मया दारवा वापि विपरीतं न दोषकृत् ।
विघ्नेशविष्वक्सेनौ च तथैवेति च केचन ॥ ४६ ॥

स्थानके ध्रुवबेरे तु स्थानकाः परिवारकाः ।
आसने तु समासीनाः शयने शयनं न च ॥ ४७ ॥

ध्रुवे शयने त्वासीनान् स्थितान् वा कारयेद्बुधः ।
कौतुके च स्थिते कुर्यात्स्थानकान् परिवारकान् ॥ ४८ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे स्थानकासनशयन-
भेदविधिर्नाम विंशोऽध्यायः ॥

## एकविंशोऽध्यायः

अतःपरं प्रवक्ष्यामि देवानां वर्णमुत्तमम् ।
शुद्धः सङ्कीर्णकश्चैव वर्णभेदस्त्वनेकधा ॥ १ ॥

सर्वेषां पञ्चमूर्तीनामादिर्नारायणः स्मृतः ।
वर्णानामपि सर्वेषामादिः श्याम उदाहृतः ॥ २ ॥

श्यामवर्णं हरे रूपं तस्माच्छ्रेष्ठतमं विदुः ।
ब्राह्मणानां हितार्थाय श्वेतवर्णः प्रशस्यते ॥ ३ ॥

क्षत्रियाणां हितार्थाय स्वर्णाभं चैव कथ्यते ।
रक्ताभा प्रतिमा प्रोक्ता वैश्यानां हि हिताय वै ॥ ४ ॥

सस्यश्यामं हरे रूपं शूद्राणामृद्धिदं क्रमात् ।
चतुर्युगान् समुद्दिश्य चतुर्वर्णान् क्रमाद्विदुः ॥ ५ ॥

युगानां चैव सर्वेषां श्यामं योग्यतमं भवेत् ।
सर्वेषामेव वर्णानां श्याम एव प्रशस्यते ॥ ६ ॥

श्यामवर्णं हरे रूपं सर्वकामफलप्रदम् ।
सर्वप्रजानामृद्ध्यर्थं सर्वोपद्रवनाशनम् ॥ ७ ॥

राष्ट्राभिवृद्धिदं चैव राज्ञां च बलवर्धनम् ।
ग्रामशान्तिकरं चैव सस्यानामभिवर्धनम् ॥ ८ ॥

सर्वेषां चैव पुष्ट्यर्थमायुर्वृद्ध्यर्थमेव च ।
पत्नीभृत्यमनुष्याणां पशूनामृद्धिमादिशेत् ॥ ९ ॥

यजमानेप्सितं सर्वं शीघ्रमेव प्रयच्छति ।
तस्मात्सर्वप्रयत्नेन श्यामरूपं च कारयेत् ॥ १० ॥

आलयं विधिवत्कृत्वा ध्रुववेरं तथैव च ।
शैलजं मृण्मयं वापि दारवं वा ध्रुवं तथा ॥ ११ ॥

वर्णयुक्तं प्रधानं स्यात् ध्रुवबिम्बं सलक्षणम् ।
देवदेवस्य पार्श्वे तु दक्षिणे तद्विधानतः ॥ १२ ॥

श्रीदेवीं दक्षिणे कुर्यात्प्रवालाभां सुलोचनाम् ।
महीं वामे तु कुर्वीत श्यामलाङ्गीं शुभाननाम् ॥ १३ ॥

ब्रह्माणं दक्षिणे भित्तौ प्रवालाभं च वामतः ।
श्वेताभं शङ्करं भित्तौ कारयेत्तद्विधानतः ॥ १४ ॥

चित्राभासौ च कर्तव्यौ ब्रह्मेशौ तौ चतुर्भुजौ ।
कुड्यकौतुकयोर्मध्ये दक्षिणोत्तरयोः क्रमात् ॥ १५ ॥

मार्कण्डेयं प्रवालाभं रत्नाभं भृगुमर्चकम् ।
प्रथमं द्वारपालं तु मणिकं जलदप्रभम् ॥ १६ ॥

तत्पर्त्नीं वामतः सन्ध्याममग्निवर्णां च कारयेत् ।
द्वितीयं द्वारपालं च दक्षिणे तापसं सितम् ॥ १७ ॥

वामे तु सिद्धिदं पीतं कुर्यात् द्वौ द्वारपालकौ ।
अथवा शङ्खचक्रौ तौ द्वितीयद्वारपालकौ ॥ १८ ॥

शङ्खं शङ्खनिभं चैव रक्ताभं चक्रमेव च ।
विष्वक्सेनं च रक्ताभं विधिनैव च कारयेत् ॥ १९ ॥

किरीटिनं चतुर्बाहुं शङ्खचक्रगदादिभिः ।
विभूषितं सुखासीनं सर्वमन्यच्च विष्णुवत् ॥ २० ॥

श्रीवत्सं ब्रह्मसूत्रं च कौस्तुभं च विनैव तम् ।
विष्वक्सेनं तथा कृत्वा नवतालेन मानतः ॥ २१ ॥

ध्रुवकौतुकसंयुक्तं विष्वक्सेनं च कारयेत् ।
रुक्माभं गरुडं कुर्यात्प्राञ्जलिं द्विभुजं वरम् ॥ २२ ॥

पक्षद्वयसमायुक्तं शुकपिञ्जरवाससम् ।
शिशुनैव च नागेन समालम्बितबाहुकम् ॥ २३ ॥

इन्द्रं नवार्धतालेन सस्याभं वज्रपाणिनम् ।
इन्द्रादिपरिवाराणां गरुडस्य तथैव च ॥ २४ ॥

हीनेऽपि कौतुके बिम्बे ध्रुववेरं तु कारयेत् ।
अग्निं किंशुकपुष्पाभं कुर्याच्छक्तिधरं तथा ॥ २५ ॥

इन्द्रं विनान्यानग्न्यादीन् नवतालेन मानतः ।
यमराजं पितृपतिं कृष्णाभं दण्डपाणिनम् ॥ २६ ॥

तथैव शूलपाणिं च निर्ऋतिं नीलवर्णकम् ।
वरुणं चापि नीलाभं दण्डपाशभृतं तथा ॥ २७ ॥

तथा सुवर्णवर्णाभं वायुं चाप्यसिधारिणम् ।
विशादमिन्द्रनीलाभं कुबेरं दण्डपाणिनम् ॥ २८ ॥

ईशानं शूलपाणिं च पाटलीकुसुमप्रभम् ।
आदित्यमतिरक्ताभं पद्मपुष्पधरं परम् ॥ २९ ॥

तृतीयद्वारि किष्किन्धं दक्षिणे त्वग्निवर्णकम् ।
तत्रैव वक्रतुण्डं च प्रवालाभं तथैव च ॥ ३० ॥

वामपार्श्वेऽग्निवर्णं च तीर्थं च द्वारपालकम् ।
नागराजं सुवर्णाभं तत्पार्श्वेचैव कारयेत् ॥ ३१ ॥

श्वेताभं नीलवस्त्रं च कारयेदिति केचन ।
अथवा वक्रतुण्डं च नागराजं तथैव च ॥ ३२ ॥

[ईशानोदानयोर्मध्ये शान्तवह्निखनोमुनिम् ।
मरीचिं काश्यपं चैव भृगुमत्रिं तथैव च ॥ ३३ ॥]

तृतीयावरणे द्वारपालकौ तौ च कारयेत् ।
अग्निवर्णं नराकारं चक्रं वै चक्रचूलिनम् ॥ ३४ ॥

आसीनं गरुडोपेतं ध्वजं कुर्याद्विधानतः ।
तथा शङ्खं नराकारं शङ्खाभं शङ्खचूलिनम् ॥ ३५ ॥

महाभूतस्य श्वेतस्य पीठं सम्यक् समाचरेत् ।
विमानानामलङ्कारं परिवारालयं तथा ॥ ३६ ॥

प्रतिमाविधिवर्णं च विस्तराद्भृगुरुक्तवान् ।
सर्वं च शिल्पशास्त्रेण शिल्पिभिः कारयेत् क्रमात् ॥ ३७ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे वर्णभेदविधि-
र्नामैकविंशोऽध्यायः ॥

---

## द्वाविंशोऽध्यायः

अथो विमानबेरादिप्रमाणप्रतिपत्तये ।
अङ्गुलीनां तु संज्ञानां संख्यामानं च वक्ष्यते ॥ १ ॥

मानमात्रशरीरोत्थाः स्मृता अङ्गुलयस्त्रिधा ।
परमाणुरणुश्चैव त्रसरेणुस्तथैव च ॥ २ ॥

पिचुकेशाग्रकनखास्तथा तिलयवा इति ।
क्रमादष्टगुणैरेतैर्मितं मानाङ्गुलं भवेत् ॥ ३ ॥

स्वहस्तेनाष्टतालोच्चो भवेन्मध्यमपूरुषः ।
तस्य दक्षिणहस्तस्य मध्यमाङ्गुलिपर्वणा ॥ ४ ॥

मध्यमेन मितं यत्तन्मात्राङ्गुलमिहोच्यते ।
ऊर्ध्वमानं विनिश्चित्य दशतालादिसंख्यया ॥ ५ ॥

तत्तालद्वादशांशोत्थं देहलब्ध्याङ्गुलं भवेत् ।
भूमिदेवालयादीनां मानं मानाङ्गुलेन वै ॥ ६ ॥

गृहं शय्यासनं यानं पात्रमायुधमेव च ।
इध्मस्रुक्स्रुवजुह्वादीन् कुर्यान्मात्राङ्गुलेन वै ॥ ७ ॥

मेदो मात्राङ्गुलश्चैव शाखाङ्गुलसमाह्वयः ।
मुष्टिमध्यप्रमेयः स्यादग्निकुण्डादिषु स्मृतः ॥ ८ ॥

ध्रुवाद्याः प्रतिमाः सर्वाः देहलब्धाङ्गुलेन वै ।
मात्रतत्त्वोक्तमूर्त्याख्या एकाङ्गुलमिति स्मृतम् ॥ ९ ॥

अश्विगोलकनेत्रद्विकलाद्यैर्द्व्यङ्गुलं स्मृतम् ।
अग्निमध्यमरुद्राक्षसहजाख्याश्च त्र्यङ्गुलम् ॥ १० ॥

वेदाश्रमकवर्णाश्च भागस्तारकबन्धुकौ ।
प्रतिष्ठा चेति सप्तैते चतुरङ्गुलसंज्ञकाः ॥ ११ ॥

सुप्रतिष्ठामहद्भूततीर्थाक्षाख्यास्तु पञ्चकम् ।
समयस्त्वङ्गगायत्रीरसकर्माणि षड्विदुः ॥ १२ ॥

मुन्यब्धिगिरिलोकास्तु रोहिण्युष्णिक्समातृकाः ।
प्राणायामश्च पातालमिति सप्ताह्वया मताः ॥ १३ ॥

वस्त्रुद्धन्यनुष्टुबैश्वर्यलोकपालाः सदिग्गजाः ।
परभावे नवाष्टानामाह्वयाः संप्रकीर्तिताः (?) ॥ १४ ॥

ब्रह्मधर्मग्रहद्वारबृहत्यश्च नवाह्वयाः ।
पङ्क्त्यवस्थावताराश्च सहेज्यश्च दशाह्वयाः ॥ १५ ॥

त्रिष्टुब्रुद्राश्च विज्ञेयास्तथैवैकादशाह्वयाः ।
मुखं तालं यमं चार्कं कृच्छ्रं च द्वादशाङ्गुलम् ॥ १६ ॥

किष्कुहस्त इति प्रोक्तं चतुर्विंशतिकाङ्गुलम् ।
अङ्गुल्यः पञ्चविंशत्यः प्राजापत्याख्यहस्तकः ॥ १७ ॥

षड्विंशत्यङ्गुलो हस्तो धनुर्ग्रह इति स्मृतः ।
धनुर्मुष्टिरिति प्रोक्तः सप्तविंशतिकाङ्गुलः ॥ १८ ॥

जगत्यतिजगत्यौ च शक्करी चातिशक्करी ।
तथैव चाष्टिरत्यष्टिर्धृतिश्चातिधृतिस्तथा ॥ १९ ॥

विकृतिश्च नवैतानि जगत्यादीन्यनुक्रमात् ।
विंशत्यादिशतान्तानां मानसंज्ञा इति स्मृताः ॥ २० ॥

त्रिंशदादि शतान्तानामिति केचिद्वदन्ति वै ।
प्रादेशस्तु प्रदेशिन्या तालो मध्यमया मितः ॥ २१ ॥

गोकर्णोऽनामिकाङ्गुल्या वितस्तिः स्यात्कनिष्ठया ।
रत्निः संवृतमुष्टिः स्यादरत्निः प्रसृताङ्गुलिः ॥ २२ ॥

किष्कुर्मुष्ट्यधिकोऽरत्निर्हस्तो मुष्टिद्वयो भवेत् ।
चतुर्हस्तस्तु दण्डः स्यादिति संज्ञाः प्रकीर्तिताः ॥ २३ ॥

अङ्गुल्यादिषु दण्डान्तास्तासु संख्यासु संज्ञिताः ।
मानैरेतैर्यथायोगं विमानप्रतिमादिकम् ॥ २४ ॥

मानयित्वा यथामानं कारयेद्विधिकोविदः ।

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे अङ्गुलसंज्ञाविधिर्नाम द्वाविंशोऽध्यायः ॥

---

## त्रयोविंशोऽध्यायः

इदानीं संप्रवक्ष्यामि दशतालोन्नतक्रमम् ।
औन्नत्यं पुरुषाकारं पुरुषोत्तममानतः ॥ १ ॥

अजो हरिर्हरश्चैव दशतालेन मानतः ।
पादमारभ्य मूर्धान्तं सविंशतिशताङ्गुलम् ॥ २ ॥

सार्धवेदाङ्गुला मूर्धा ललाटं तु तथा भवेत् ।
ललाटं भागमेवोर्ध्वमुष्णीषं गोलकं भवेत् ॥ ३ ॥

अक्षिसूत्रात्पुटान्तं स्यात्सार्धमात्रचतुष्टयम् ।
पुटाच्चुबुकमूलान्तं भागः सार्धाङ्गुलो भवेत् ॥ ४ ॥

गलश्चार्धाङ्गुलः प्रोक्तो ग्रीवा तु चतुरङ्गुला ।
ग्रीवादिहृदयान्तं च सार्धमात्रं मुखं भवेत् ॥ ५ ॥

हृदयान्नाभिमूलान्तं नाभेरासीवनेस्तथा ।
सीवन्या जानुपर्यन्तं पञ्चविंशतिकाङ्गुलम् ॥ ६ ॥

चतुर्मात्रस्तथा जानुर्जङ्घा चोरुसमा भवेत् ।
गोलको गुल्फदेशस्तु चरणं भाग उच्यते ॥ ७ ॥

ऊर्ध्वमानं भवेदेतद्दशतालमिदं विदुः ।
मेढ्रमूलं त्रिमात्रं स्यान्मेढ्रं पञ्चाङ्गुलं भवेत् ॥ ८ ॥

अण्डायामं चतुर्मात्रं मेढ्रान्तं लम्बितं भवेत् ।
अक्षात्पादतलायामं द्वादशाङ्गुलमिष्यते ॥ ९ ॥

अक्षान्तात्पार्ष्णिकायामं द्व्यंगुलं च यवाधिकम् ।
पादाङ्गुष्ठं चतुर्मात्रं तद्यवाधिकमायतम् ॥ १० ॥

प्रदेशिन्यास्तथायामं त्रिमात्रं मध्यमाङ्गुलम् ।
त्र्यङ्गुलाऽनामिका प्रोक्ता द्विमात्रार्धा कनिष्ठिका ॥ ११ ॥

पादाङ्गुल्यायतं प्रोक्तं तलं पञ्चाङ्गुलोन्नतम् ।
अङ्गुष्ठमूलात्पार्ष्ण्यन्तं तलायामं त्रयोदश ॥ १२ ॥

कनिष्ठाङ्गुलमूलात्तु पार्ष्ण्यन्तं पञ्चगोलकम् ।
हिक्कासूत्रादधो बाहुः सप्तविंशाङ्गुलायतः ॥ १३ ॥

एकविंशाङ्गुलायामः प्रकोष्ठः समुदाहृतः ।
सप्ताङ्गुलतलायामं षडर्धं मध्यमाङ्गुलम् ॥ १४ ॥

षण्मात्रा द्वियवाधिक्या तर्जनी चाप्यनामिका ।
अङ्गुष्ठदैर्घ्यं षण्मात्रं कनिष्ठायास्तथा भवेत् ॥ १५ ॥

सार्धरुद्राङ्गुलं तारं वदनस्य विधीयते ।
कर्णयोरन्तरं यत्तच्छिरोविस्तार उच्यते ॥ १६ ॥

उष्णीषात् त्रिगुणार्धंतु प्रमाणं विस्तृतं भवेत् ।
उष्णीषान्मध्यकेशान्तः सार्धसप्ताङ्गुलायतः ॥ १७ ॥

उष्णीषात्पार्श्वकेशान्तो दशमात्रायतो भवेत् ।
उष्णीषात्पृष्ठकेशान्तः सार्धा मात्रास्त्रयोदश ॥ १८ ॥

कर्णाभ्यां तु पुरोवक्त्रमेकविंशतिकाङ्गुलम् ।
केशान्ताच्च भ्रुवोर्मध्यं द्व्यङ्गुलं द्वियवाधिकम् ॥ १९ ॥

भ्रूदैर्घ्यं पञ्चमात्रार्धं भ्रूवक्रं चैकमात्रकम् ।
यवद्वयं भ्रुवोर्मध्यं यवार्धं तारमग्रयोः ॥ २० ॥

मात्रैकं द्वियवं तारो भ्रूसङ्गम उदीरितः ।
दृशोरन्तरगं तारं यवाध्यर्धं द्विकाङ्गुलम् ॥ २१ ॥

यवाध्यर्धः कलायामो नेत्राभ्यां समुदाहृतः ।
यवः कनीनिकायामस्तावत्येव च विस्तृतिः ॥ २२ ॥

एकादशयवायामः शुक्लभाग इति स्मृतः ।
मध्यनेत्रप्रमाणं स्याद्यवाः सप्त प्रकीर्तिताः ॥ २३ ॥

सार्धपञ्चयवं कृष्णं ज्योतिमण्डलगं यवम् ।
दृष्टिमध्ये यवाष्टांशः सजीवज्योतिरेव तत् ॥ २४ ॥

नीलाञ्जनसमाभासा नवतिः पक्ष्मरोमकाः ।
सङ्गमैस्तु पुटात्पार्श्वे कृत्वा त्विनासिकायतः ॥ २५ ॥

मूलमध्याग्रनासाश्च त्वर्धगैकं द्विमात्रकम् ।
यवाधिकाग्रनासा स्यात्पुट एकाङ्गुलः स्मृतः ॥ २६ ॥

गोजी च नासिकोत्सेधो व्यङ्गुलः समुदाहृतः ।
षड्यवं तं तमा (वान्तरमा ?)ख्यातः पुटयोः सुषिरद्वये ॥ २७ ॥

पुटाभ्यां पुष्करा ज्ञेया सुषिरद्वयमुच्यते ।
गोजी चतुर्यवार्धा स्यादुत्तरोष्ठस्तथा भवेत् ॥ २८ ॥

अधरोष्ठो यवाष्टार्धमास्यं भागार्धमात्रकम् ।
द्विमात्रतारो ह्यधरस्त्रियवोत्तरपालिका ॥ २९ ॥

अधरान्तं यवाध्यर्धं द्व्यङ्गुलं चिबुकं तथा ।
द्वियवार्धं हनोश्चक्रं क्रमाद्युक्त्या तु कारयेत् ॥ ३० ॥

चिबुकग्रीवयोर्मध्यं भागो वक्त्रं तथोन्नतम् ।
आपूर्णचन्द्रवद्वक्त्रं हनुकेशान्तभासुरम् ॥ ३१ ॥

भ्रूसूत्रादास्यसूत्रान्तः कर्णायामः प्रशस्यते ।
नेत्रसूत्रान्तरं कुर्यात्कर्णयोः सुषिरं यथा ॥ ३२ ॥

अपाङ्गात्कर्णसुषिरं सार्धं सप्ताङ्गुलं भवेत् ।
द्व्यङ्गुलः कर्णविस्तारश्चतुर्मात्रार्धमायतिः ॥ ३३ ॥

नालायामस्तथा प्रोक्त आकारः कर्तिकाकृतिः ।
नालमर्धाङ्गुलं मानं कुण्डलाधारमङ्गुलम् ॥ ३४ ॥

कर्णनालोर्ध्वपिप्पल्या यवद्वयनतं भवेत् ।
अधस्तात्पूर्वनालः स्याद्यवपञ्चप्रमाणतः ॥ ३५ ॥

नाल्योस्तु परीणाहो यवाः सप्त प्रकीर्तिताः ।
अष्टपञ्चयवमूलं तु तत्पूर्वापरनाल्योः ॥ ३६ ॥

श्रोत्रनालान्तरं तारं प्रोक्तमध्यर्धमात्रतः ।
श्रोत्रद्वारस्य चायाम अर्धमात्रस्तथायतम् ॥ ३७ ॥

कर्णाकारं च कर्णाभं कुर्याद्युक्तिविशेषतः ।
ग्रीवा नवाङ्गुलतता मूलेऽत्यर्धाङ्गुलाधिका ॥ ३८ ॥

चत्वारिंशच्च मात्रार्धं बाहुपर्यन्तविस्तृतिः ।
दशाङ्गुलं कक्षमानं बाहुतारो नवाङ्गुलः ॥ ३९ ॥

कक्षान्तरप्रमाणं स्यात्त्रयोविंशतिकाङ्गुलम् ।
ग्रीवायाः कक्षसन्धिश्च नवमात्रप्रमाणतः ॥ ४० ॥

हिक्कासूत्रोर्ध्वतो मानं द्व्यङ्गुलं चांसदेशतः ।
कूर्परस्य प्रमाणं तु सप्ताङ्गुलमुदाहृतम् ॥ ४१ ॥

षण्मात्रार्धं प्रकोष्ठाभ्यां प्रमाणं तत्र चोच्यते ।
प्रमाणं मणिबन्धस्य त्रिमात्रं पञ्चयवाधिकम् ॥ ४२ ॥

पाणेस्तलप्रमाणं स्यात्पञ्चमात्रं यवद्वयम् ।
तलमूलं तु बहलं त्रिमात्रं चार्धमात्रकम् ॥ ४३ ॥

द्व्यङ्गुलार्धं मध्यमं स्यात् द्व्यङ्गुलं चाग्रबाहलम् ।
अङ्गुलात् पञ्चयवाधिक्यं कराङ्गुष्ठप्रमाणतः ॥ ४४ ॥

मात्रं चतुर्यवाधिक्यं मध्यमाङ्गुलिविस्तरम् ।
अनामिकातर्जनीभ्यां विस्तारं द्व्यङ्गुलं भवेत् ॥ ४५ ॥

यवैकसहितं मात्रं कनिष्ठामूलविस्तरः ।
तन्मूलादग्रविस्तारः द्वियवं हीनमिष्यते ॥ ४६ ॥

अङ्गुष्ठस्य नखायामश्चाङ्गुलद्वियवाधिकः ।
तारश्चाष्टयवः प्रोक्तो बाहल्यं तु चतुर्यवम् ॥ ४७ ॥

मध्याङ्गुलिनखायामश्चाङ्गुलस्तु विधीयते ।
पञ्चयवस्तस्य विस्तारः पूर्वमात्रं तु बाहलम् ॥ ४८ ॥

अनामिका प्रदेशिन्योर्नखायामस्तु पञ्चयवः ।
चतुर्यवस्तयोस्तारो घनं यूकमुदाहृतम् ॥ ४९ ॥

कनिष्ठिकानखायामं यवपञ्चकमीरितम् ।
त्रियवार्धं च विस्तारो यूकं तद्बाहलं भवेत् ॥ ५० ॥

अङ्गुलाग्रनखायामो यवः सार्ध उदाहृतः ।
अङ्गुष्ठं तु द्विपर्वं स्याच्छेषाङ्गुल्यस्त्रिपर्विकाः ॥ ५१ ॥

त्रिलेखं च तलं प्रोक्तमङ्गुलीनां क्रमात्तथा ।
हिक्कास्तनान्तरं तिर्यक् प्रमाणं त्र्यङ्गुलार्धकम् ॥ ५२ ॥

मध्योदरप्रमाणं तु दशसप्ताङ्गुलं मतम् ।
स्तनात् स्तनान्तरं तारं सार्धत्रयोदशाङ्गुलम् ॥ ५३ ॥

स्तनपिण्डाभ्यन्तरं तत्सप्तकाङ्गुलिभिर्मतम् ।
व्यङ्गुलं स्तनवृत्तं तु यवाध्यर्धं तु चूचुकम् ॥ ५४ ॥

स्तनस्य मण्डलं बाह्यं सार्धव्यङ्गुलमानकम् ।
मध्योदरप्रमाणं तु दशसप्ताङ्गुलं ततः ॥ ५५ ॥

श्रोणिप्रमाणं विज्ञेयं सार्धमष्टादशाङ्गुलम् ।
सुपूर्णं चोदरं कुर्याच्छ्रोणी द्व्यर्धाङ्गुलोन्नता ॥ ५६ ॥

कट्याः श्रोण्युन्नतं मात्रं श्रोणीतारोऽष्टमात्रकः ।
कटिदेशप्रमाणं तु एकविंशतिकाङ्गुलम् ॥ ५७ ॥

मेढ्रमूलप्रदेशस्य प्रमाणं द्वादशाङ्गुलम् ।
ऊरुमूलप्रमाणं स्यादर्धोपेतत्रयोदश ॥ ५८ ॥

ऊरुमध्यमविस्तारश्चाङ्गुलानि त्रयोदश ।
चतुर्यवं नवाङ्गुल्या ऊर्वोरग्रं प्रमाणतः ॥ ५९ ॥

जानुमध्यमविस्तारो नवमात्रं सपञ्चयवम् ।
जङ्घामूलोऽष्टमात्रार्धो जङ्घामध्यं नवाङ्गुलम् ॥ ६० ॥

वेदाङ्गुलाधिकं मानं नलिकायाः प्रमाणतः ।
तयोरक्षान्तरं तिर्यग्द्वयं पञ्चकमात्रकम् ॥ ६१ ॥

चतुरङ्गुलविस्तारः पार्ष्णिकायाः प्रमाणतः ।
अक्षपार्ष्ण्यग्रयोर्मध्ये त्रिमात्रार्धं प्रमाणतः ॥ ६२ ॥

पुरस्तादग्रविस्तारः सप्ताङ्गुलमुदाहृतम् ।
अग्रोन्नतं त्रिमात्रं तु द्विमात्रं पृष्ठमुन्नतम् ॥ ६३ ॥

पादाङ्गुष्ठस्य विस्तारो द्विमात्रं द्वियवाधिकम् ।
सार्धमात्रो नखायामो नखतारो यवाङ्गुलः ॥ ६४ ॥

द्विमात्रो मध्यमाङ्गुष्ठः कार्यः सर्पशिरो यथा ।
प्रदेशिनीप्रमाणं तद्भवेदध्यर्धमङ्गुलम् ॥ ६५ ॥

नखायामो दशयवस्तारः सप्तयवो भवेत् ।
मध्यमाङ्गुलिविस्तारो मात्रकं द्वियवाधिकम् ॥ ६६ ॥

अङ्गुलं तन्नखायामः पञ्चयवस्तस्य विस्तरः ।
अङ्गुलं तर्जनीतारं नखायामस्तु पञ्चयवः ॥ ६७ ॥

तारश्चतुर्यवस्तस्यानामिकायास्तथेरितः ।
कनिष्ठाङ्गुलिविस्तारो यवाः सप्त ह्युदाहृताः ॥ ६८ ॥

चतुर्थवार्धश्च नखो त्रियवो विस्तरस्तथा ।
पादस्य नखबाहल्यं यवाध्यर्धं क्रमाद्भवेत् ॥ ६९ ॥

शेषाङ्गुल्यस्त्रिपर्वाः स्युः पादाङ्गुष्ठं द्विपर्वकम् ।
पाष्ण्युन्नतं त्रिमात्रं च शेषं युक्त्या तु कारयेत् ॥ ७० ॥

स्कन्धादाकटिमूलान्तं मानं षट्त्रिंशदङ्गुलम् ।
पृष्ठस्य पक्षवैशाल्यं द्वाविंशत्यङ्गुलं मतम् ॥ ७१ ॥

वंशस्तत्कक्षसन्धी च कुर्यादुक्तक्रमाद्बुधः ।
कक्षपार्श्वस्य विस्तारं मतमेकादशाङ्गुलम् ॥ ७२ ॥

स्तनपार्श्वस्य विस्तारः सार्धषोडशमात्रकः ।
कुक्षिपार्श्वस्य विस्तारः सार्धं पञ्चदशाङ्गुलम् ॥ ७३ ॥

सार्धं पञ्चाङ्गुलं स्फिक्समुन्नतं चतुरङ्गुलम् ।
द्व्यङ्गुलं द्वियवोपेतं मस्तकस्यैकविस्तरम् ॥ ७४ ॥

द्विमात्रं द्वियवोपेतं मेढ्रतारमुदाहृतम् ।
शिरसः परिणाहः स्यात्सप्तत्रिंशत्तथाङ्गुलम् ॥ ७५ ॥

ग्रीवायाः परिणाहः स्यात्सार्धं वेदोष्णिकाङ्गुलम् ।
द्वाभ्यां कक्षान्तनाहः स्यात् पुष्टिश्चाष्टाङ्गुलं परम् ॥ ७६ ॥

चत्वारिंशाष्टकाङ्गुल्यो मध्यमोदरनाहतः ।
पञ्चयवं विस्तृतं गाढं नतं नाभिप्रदक्षिणम् ॥ ७७ ॥

पञ्चाधिकं तु पञ्चाशच्छ्रोणिनाह उदाहृतः ।
कटिप्रदेशतो नाहः साष्टपञ्चाशदङ्गुलम् ॥ ७८ ॥

मेढ्रमूलप्रदेशे तु नाहं युक्त्या तु कारयेत् ।
चत्वारिंशद्द्विकं मात्रमूरुमूले तु नाहतः ॥ ७९ ॥

[वेदपङ्क्त्यङ्गुलं प्रोक्तमूरुमूले तु नाहतः] ।
ऊरोरग्रे तु नाहः स्यादेकोनत्रिंशदङ्गुलम् ॥ ८० ॥

जानुमध्यमनाहस्तु सार्धैकत्रिंशदङ्गुलम् ।
जङ्घाया मूलनाहः स्यात् सार्धं षड्विंशदङ्गुलम् ॥ ८१ ॥

जङ्घामध्यगतो नाह एकोनत्रिंशदङ्गुलम् ।
चतुर्दशाङ्गुलं सार्धं नालिकादेशमानकम् ॥ ८२ ॥

एकत्रिंशच्च मात्राणां बाहुमूलस्य नाहकः ।
कूर्परस्य परीणाहः सार्धद्वात्रिंशदङ्गुलम् ॥ ८३ ॥

नाहः प्रकोष्ठदेशस्य एकविंशत्समाङ्गुलः ।
मणिबन्धस्य नाहस्तु षोडशाङ्गुल उच्यते ॥ ८४ ॥

देहः स्वाभाविकस्तद्वत्क्रियते चित्रवित्तमैः ।
दशतालमिदं प्रोक्तं मानोन्मानप्रमाणतः ॥ ८५ ॥

नवतालं नवार्धं च देव्यादीनां प्रवक्ष्यते ।

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे प्रतिमालक्षणं नाम
त्रयोविंशोऽध्यायः ॥

---

## चतुर्विंशोऽध्यायः

अथातः कौतुकादीनां लक्षणं संप्रवक्ष्यते ।
अर्चा च कौतुकं प्राणो वर एकार्थवाचकाः ॥ १ ॥

अर्च्यत्वाज्जलपुष्पाद्यैः कीर्तितार्चेति सूरिभिः ।
सर्वमङ्गलकारित्वात्कौतुकं ह्यभिधीयते ॥ २ ॥

सर्वेषां प्राणभूतत्वात् प्राण इत्युच्यते बुधैः ।
श्रीभूदेव्योर्वरत्वाच्च वर इत्यपि कीर्तितः ॥ ३ ॥

कौतुकं स्नापनं बिम्बमौत्सवं त्रीणि कारयेत् ।
दारुः शिला च ताम्रं च रजतं रुक्ममित्यपि ॥ ४ ॥

उक्तानि कौतुकादीनां द्रव्याणीमानि पञ्च च ।
दारवाच्छैलजं श्रेष्ठं शैलजात्ताम्रजं वरम् ॥ ५ ॥

ताम्रजाद्राजतं श्रेष्ठं राजताद्रुक्मजं वरम् ।
दारवाच्छैलजार्चायाः फलं शतगुणं भवेत् ॥ ६ ॥

शैलजात्ताम्रजे बिम्बे सहस्रमधिकं फलम् ।
ताम्रजाद्राजते बिम्बे त्वयुतं फलमुच्यते ॥ ७ ॥

राजताद्रुक्मजार्चायामनन्तं कथ्यते फलम् ।
रुक्माभो रुक्मगर्भश्च देवो रुक्ममयो हरिः ॥ ८ ॥

सर्वस्य साधनं तस्मात्स्थिरं चाप्यविनाशि तत् ।
बहुना किं प्रलापेन रुक्मं विष्णुरिति स्मृतम् ॥ ९ ॥

अयसा त्रपुणा कांस्यरीतिकासीसकैर्बुधः ।
न कुर्याद्देवतारूपं कुर्याच्चेदाभिचारिकम् ॥ १० ॥

चक्रादीनयसा वापि कारयेदायुधान् बुधः ।
ध्रुवबेरस्य मानं यत् त्रिभागं कारयेच्च तत् ॥ ११ ॥

तस्यैकभागमानं तु कौतुकं चोत्तमं भवेत् ।
स्नपनं च तथा बिम्बमुत्सवं च तथैव च ॥ १२ ॥

व्यक्तं सर्वाङ्गसंपूर्णं सर्वाभरणसंयुतम् ।
सौन्दर्येण समायुक्तं लक्षणेन समन्वितम् ॥ १३ ॥

शिल्पशास्त्रोक्तमार्गेण शिल्पिभिः कारयेद्बुधः ।
ध्रुवबेरं नवांशं तत्कृत्वैकांशं व्यपोह्य च ॥ १४ ॥

शेषांशं तं द्विधा कुर्यादेकभागेन संमितम् ।
उत्तमं मध्यमं चैव तत्कौतुकमुदाहृतम् ॥ १५ ॥

एवमेव यथान्यायमेकोनं तत्त्रिधा कृते ।
तत्रैकभागेन मितं कौतुकं स्यात्क्रमेण वै ॥ १६ ॥

उत्तमादधमं चापि मध्यमादुत्तमं तथा ।
मध्यमान्मध्यमं चापि मध्यमादधमं तथा ॥ १७ ॥

अधमादुत्तमं तद्वदधमं मध्यमं तथा ।
ध्रुवबेरं नवांशं तत्कृत्वैकांशेन कौतुकम् ॥ १८ ॥

अधमाधममित्युक्तं यथाशक्त्या तु कारयेत् ।
शिलया दारुणा बिम्बमौत्सवं न विधीयते ॥ १९ ॥

श्रीभूम्यावपि ते देव्यौ कारयेत विधानतः ।
देवस्य बाहुमानं तद्देव्योर्मानमुदाहृतम् ॥ २० ॥

तद्द्रव्येण तथा देव्यौ कौतुकस्य तु कारयेत् ।
स्थानके कौतुके देव्यौ स्थानके कारयेत्तथा ॥ २१ ॥

आसीने चासने देव्यौ सहैव पृथगेव वा ।
ध्रुवबेरानुरूपं तु कौतुकं कारयेत्तथा ॥ २२ ॥

ध्रुवे स्थिते स्थितं कुर्याद्बिम्बं तत्कौतुकं तथा ।
आसीने चासनं वापि स्थानकं वा विधानतः ॥ २३ ॥

ध्रुवबेरे शयानेऽपि शयनं प्रतिषिध्यते ।
शयने चासने वापि स्थानकं वा समाचरेत् ॥ २४ ॥

ध्रुवे स्थिते समासीनं कौतुकं नैव कारयेत् ।
आसीने कौतुकं वापि स्थितं वाप्यौत्सवं भवेत् ॥ २५ ॥

विधिना कौतुकं बिम्बमौत्सवं स्नपनं तथा ।
तानि त्रीण्यपि बिम्बानि कारयेत प्रयत्नतः ॥ २६ ॥

कौतुकेन च तुल्यं तदौत्सवं स्नपनं भवेत् ।
ध्रुववेरानुरूपं तु कौतुकं त्विति शासनम् ॥ २७ ॥

यथोचितानि बिम्बानि तथान्यानीति केचन ।
न्यूनाधिकेषु चान्येषु दोषो नास्ति ततो द्विजाः ॥ २८ ॥

बिम्बमानाङ्गुलेनैव द्वादशाङ्गुलमानकम् ।
सर्वेष्वपि च सर्वत्र सामान्यमिति चापरे ॥ २९ ॥

वाराहं नारसिंहं च रामं कृष्णं तथैव च ।
कारयेत्कौतुकं तद्वच्चतुर्भुजमथापि वा ॥ ३० ॥

मत्स्यं कूर्मं वराहं च नारसिंहं च वामनम् ।
त्रिविक्रमं तथा बिम्बमौत्सवं नैव कारयेत् ॥ ३१ ॥

विष्णुं चतुर्भुजं बिम्बमौत्सवं तत्र कारयेत् ।
ध्रुवं त्रिविक्रमे वापि वामने च तथैव च ॥ ३२ ॥

बिम्बं चतुर्भुजं चैव कौतुकं स्थितमेव वा ।
वेरायामं त्रिधा कुर्यात्तस्यैकांशः समुच्छ्रयः ॥ ३३ ॥

वृत्तं वा चतुरश्रं वा पीठं कुर्याद्विधानतः ।
आयामं तत्समं कुर्याद्विस्तारश्च समस्तथा ॥ ३४ ॥

तलं च पादमानेन स्मृतमध्यर्धमेव च ।
यद्द्रव्येण कृतं बिम्बं तद्द्रव्येणैव पीठकम् ॥ ३५ ॥

तेनैव तत्प्रभां कुर्याद्विपरीतं न कारयेत् ।
प्रभां त्रियष्टिकां कुर्याद्देवदेवस्य शार्ङ्गिणः ॥ ३६ ॥

तद्यष्टीनां च विस्तारश्चैकैकं गोलकं भवेत् ।
द्वादशाङ्गुलमानं तत्प्रभाविस्तारमिष्यते ॥ ३७ ॥

देहलब्धाङ्गुलं चेति तदङ्गुलमुदाहृतम् ।
एकयष्टिप्रभामेव श्रीभूम्यादिषु कारयेत् ॥ ३८ ॥

येन कौतुकमुद्दिष्टं तेन पीठं प्रभामपि ।
अन्यथा चेन्महादोषस्तस्मात्तेनैव कारयेत् ॥ ३९ ॥

उपर्युपरियष्टीनां रश्मयस्त्रिंशतिः स्मृताः ।
तच्छिखायामविस्तारं यथासौन्दर्यमेव च ॥ ४० ॥

न श्लिष्टा नैव विरलाश्चोभयत्र समाः स्मृताः ।
ऊर्ध्वाग्रमेव तान् कुर्यात्पार्श्वयोरुभयोरपि ॥ ४१ ॥

दक्षिणे दक्षिणावर्तौ वामहस्तात्तु वामतः ।
इन्द्रचापनिभा यष्टिश्शिखिवद्रश्मिमालिकाः ॥ ४२ ॥

व्यपोह्य मकुटादूर्ध्वं चतुरङ्गुलमुन्नतम् ।
भागं भागं व्यपोह्यैव पार्श्वयोश्चक्रशङ्खयोः ॥ ४३ ॥

मधूच्छिष्टेन विधिना कारयेद्युक्तिहेतुभिः ।
अथवा कौतुकादीनि कारयेद्देवमेव वै ॥ ४४ ॥

मूलबिम्बस्य चायामं त्रिधाकृत्वैव तस्य च ।
एकभागं व्यपोह्यैव द्विभागं संप्रगृह्य च ॥ ४५ ॥

कारयित्वा प्रभां तत्र सुपीठे योजयेच्छुभाम् ।
अथवा पार्श्वयोः शङ्कू योजयेत्तत्प्रभां तथा ॥ ४६ ॥

पीठस्य पार्श्वयोर्बाह्ये यन्लस्य शुषिरं भृतम् ।
तद्द्विभागं त्रिधा कृत्वा समस्तं चोत्तमं भवेत् ॥ ४७ ॥

द्विभागं मध्यमं प्रोक्तमेकभागं तथाधमम् ।
तथैककं त्रिधाकुर्यान्नवधेति च केचन ॥ ४८ ॥

सामान्यप्रतिमां कुर्वन्नेवमेव विधानतः ।
द्वादशाङ्गुलमानं वा बिम्बानामङ्गुलेन वा ॥ ४९ ॥

अष्टादशाङ्गुलं वापि विंशत्यङ्गुलमेव वा ।
अधमं मध्यमं श्रेष्ठं कैश्चित्सामान्यमुच्यते ॥ ५० ॥

षडङ्गुलविहीनं वै बिम्बं नैव च कारयेत् ।
षडङ्गुलाधिकं बिम्बं सर्वलोकशुभप्रदम् ॥ ५१ ॥

अथ सामान्यबिम्बं तद्यद्बिम्बं लौकिकं तथा ।
द्वे बिम्बे कारयेदेवमिति केचिद्वदन्ति च ॥ ५२ ॥

आहृत्याष्टभिरुन्मानमर्हे भक्तावशेषिते ।
एतदायमिति प्रोक्तं तेन युक्तं तु वृद्धिदम् ॥ ५३ ॥

बृहन्मानं समाहृत्य हृत्वा तु दशभिः पुनः ।
शिष्टमेतद्व्ययं प्रोक्तं व्ययत्वेन धनं भवेत् ॥ ५४ ॥

उन्मानमग्रमाहृत्य भक्त्या तद्वसुभिः पुनः ।
शिष्टं योनिरिति प्रोक्तः शुभं योनौ तु वृद्धये ॥ ५५ ॥

ध्वजो धूमश्च सिंहश्च श्वा वृषो गर्दभो गजः ।
काकश्चेत्यष्ट संप्रोक्ता योनयस्तदनुक्रमात् ॥ ५६ ॥

पूर्वं पूर्वं शुभं प्रोक्तमपरं त्वशुभं तथा ।
वर्धतेऽष्टभिरुन्माने सप्तविंशतिभाजिते ॥ ५७ ॥

भक्तव्ययं च तच्छिष्टे नक्षत्रमिति चोच्यते ।
यजमानानुकूलं च यद्दिनं तत्समाहरेत् ॥ ५८ ॥

वर्धतेऽष्टभिरून्माने त्रिंशता तद्विभाजिते ।
शिष्टं तिथिरिति प्रोक्तं प्रथमादिक्रमेण च ॥ ५९ ॥

हत्वा नवभिरून्मानं सप्तभिस्तद्विभाजिते ।
शिष्टं वारमिति प्रोक्तं शुभवारं समाहरेत् ॥ ६० ॥

हत्वा चतुर्भिरून्मानं भाजिते कर्मभिः पुनः ।
तच्छिष्टमंशकं प्रोक्तं गृह्णीयादंशकं शुभम् ॥ ६१ ॥

सामान्यतो दिने चैव ज्ञेयं तत्र शुभाशुभम् ।
विमानस्यानुरूपं हि ध्रुवबेरं शुभं भवेत् ॥ ६२ ॥

ध्रुवरूपानुरूपं च कौतुकादित्रयं स्मृतम् ।
सर्वैरायादधस्तस्य नेष्यते तत्कथंचन ॥ ६३ ॥

पश्चात्संस्थापयेद्विद्वान् स्थापनोक्तविधानतः ।
ईप्सितान् लभते कामानिहामुत्र न संशयः ॥ ६४ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे कौतुकबेरलक्षणं नाम चतुर्विंशोऽध्यायः ॥

---

## पञ्चविंशोऽध्यायः

अत ऊर्ध्वं प्रवक्ष्यामि मधूच्छिष्टक्रियामिह ।
यथोक्तविधिना कुर्यादङ्कुराणामथार्पणम् ॥ १ ॥

शुभे दिने च पूर्वाह्णे यत्नेनैव च कारयेत् ।
गर्भप्रक्षेपणं चैवमृते सम्यक् सुबुद्धिमान् ॥ २ ॥

सर्वं च वैदिकं कर्म न च कुर्वीत रात्रिषु ।
देवालये विशेषेण यजमानगृहेऽथवा ॥ ३ ॥

औपासनाग्निं कृत्वैव कुण्डे चाग्निं निधाय च ।
आघारं विधिवत्कृत्वा परिस्तीर्य च पावकम् ॥ ४ ॥

हुत्वा पुरुषसूक्तेन दिग्दैवत्यं च वैष्णवम् ।
शान्तकैर्वैष्णवैर्वापि विष्णुसूक्तेन वै क्रमात् ॥ ५ ॥

स्विष्टाकारं च हुत्वान्ते कुर्याद्ब्राह्मणभोजनम् ।
आचार्यं पूजयित्वा तु शिल्पिनं चैव पूजयेत् ॥ ६ ॥

मधूच्छिष्टं च संशोध्य शिल्पशास्त्रविधानतः ।
मधूच्छिष्टेन तेनैव बिम्बं लक्षणसंयुतम् ॥ ७ ॥

कारयेद्दर्शनीयं च प्रभां पीठं पृथक् तथा ।
कारयित्वा विधानेन बहिर्मृत्तिकया पुनः ॥ ८ ॥

आलेपयेच्च संशोष्य तद्गर्भमयसा बहिः ।
रक्षार्थं बन्धयित्वैव मृदमालिप्य शोषयेत् ॥ ९ ॥

हिरण्यं रजतं वाथ ताम्रं वाथ स्वशक्तितः ।
गृहीत्वा चाथ तत्पूर्वं तत्प्रमाणविशेषतः ॥ १० ॥

शुभे दिने तथा कुण्डे हुत्वा होमं च पूर्ववत् ।
मधूच्छिष्टं च संस्राव्य बिम्बगर्भं प्रताप्य च ॥ ११ ॥

लोहं सन्ताप्य यत्नेन शोधयित्वा यथाशुभम् ।
पुनः सन्तप्तलोहेन बिम्बगर्भं प्रपूरयेत् ॥ १२ ॥

लोहपूर्णं तु संरक्षेद्यावत्स्याच्छीतलं दृढम् ।
लोहबिम्बक्रियां वाथ सर्वत्रैवं समाचरेत् ॥ १३ ॥

ततः प्रभात आचार्यो यजमानसमन्वितः ।
मृद्भेदं च शनैः कृत्वा बिम्बशुद्धिं च कारयेत् ॥ १४ ॥

सर्वाङ्गमपि संपूर्णं लक्षणैरपि संयुतम् ।
सहजैर्भूषणैर्युक्तं यदि बिम्बं समाहरेत् ॥ १५ ॥

भिन्ने छिन्नेऽप्यसंपूर्णे खण्डिते स्फुटिते तथा ।
लक्षणैश्च विहीने तु तद्बिम्बं लोहवद्भवेत् ॥ १६ ॥

पूर्वोक्तहोमं हुत्वैव पूर्ववद्विधिना पुनः ।
बिम्बं लक्षणसंयुक्तं कारयित्वा समाहरेत् ॥ १७ ॥

रत्नन्यासं न कुर्याच्चेत्सान्निध्यं न भवेद्धरेः ।
पीठयुक्ते च तत्पद्मे मन्त्रैरुक्तक्रमेण वै ॥ १८ ॥

नवरत्नानि विन्यस्य शिल्पिना सुस्थितं दृढम् ।
अवक्रमचलं चापि पीठपद्मे सुयोजयेत् ॥ १९ ॥

उक्तलक्षणसंपन्नं कौतुकं स्थापयेद्यदि ।
महाबेरे च ये दोषाः सर्वे नश्यन्ति तेन वै ॥ २० ॥

अज्ञानादर्थलोभाद्वा व्यामोहाद्यदि कौतुकम् ।
न गुरु न च दीर्घं च नातिह्रस्वं च कारयेत् ॥ २१ ॥

यत्नेन कौतुकं ग्राह्यं यथालाभेन मानतः ।
रत्नजा प्रतिमा लोके सर्वशान्तिकरा स्मृता ॥ २२ ॥

सौवर्णा पौष्टिकी प्रोक्ता सर्वलोकसुखप्रदा ।
कीर्तिदा राजती ज्ञेया ताम्रजा च समृद्धिदा ॥ २३ ॥

शैलजाऽऽयुष्यदा प्रोक्ता दारवी पुत्रवर्धनी ।
मृण्मयं च न कुर्वीत कौतुकाद्यं च सर्वदा ॥ २४ ॥

मृण्मयाः कौतुकाद्यास्तु सर्वलोकभयावहाः ।
उक्तद्रव्येण विधिना कारयेद्बिम्बमुत्तमम् ॥ २५ ॥

कुर्यादेवाक्षिमोक्षान्तं शिल्पी कर्म यथाक्रमम् ।
अधिवासं पुनः कुर्याद्बिम्बशुद्ध्यर्थमेव तत् ॥ २६ ॥

सान्निध्यकरणायैवं प्रतिमानां तु तद्भवेत् ।
अधिवासं च कृत्वैव मन्त्रैर्हुत्वा विधानतः ॥ २७ ॥

बिम्बे संस्थापिते तत्र सान्निध्यं कुरुते हरिः ।
पश्चात्संस्थापयेद्विद्वान् स्थापनोक्तविधानतः ॥ २८ ॥

तत्स्थापको लभेत् कामानिहामुत्र न संशयः ।

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे मधूच्छिष्टक्रियाविधिर्नाम पञ्चविंशोऽध्यायः ॥

---

## षड्विंशोऽध्यायः

अतः परं प्रवक्ष्यामि विधिना चाङ्कुरार्पणम् ।
भूपरीक्षादिकं कर्म यस्मिन्नहनि कारयेत् ॥ १ ॥

प्रत्यब्दं पूजनं वापि नैमित्तिकमथापि वा ।
तस्मात्तु दिवसात्पूर्वं नवमे वाथ सप्तमे ॥ २ ॥

पञ्चमेऽहनि वा कुर्याद्भक्तियुक्तोऽङ्कुरार्पणम् ।
अङ्कुरार्पणपात्रार्थं पालिकादीन् समाहरेत् ॥ ३ ॥

पालिकाः कुम्भकांश्चैव शरावानथ कारयेत् ।
पृथक् पृथक् च गृह्णीयात् षोडश द्वादशाष्ट वा ॥ ४ ॥
सौवर्णान् राजतान् वापि ताम्रान् कांस्यमयानपि ।
मृण्मयान् वापि कुर्वीत पालिकादीन् स्वशक्तितः ॥ ५ ॥
त्रितालः पालिकोत्सेधो द्वितालश्चाथवा पुनः ।
उत्सेधोऽर्धप्रमाणं स्यात्पालिकामुखविस्तरः ॥ ६ ॥
तदर्धं मूलविस्तारः क्रमेणोर्ध्वं प्रगृह्य तत् ।
तच्चतुर्थांशहीनं तु छिद्रकुम्भं प्रमाणतः ॥ ७ ॥
आयामार्धपरीणाहं पञ्चद्वारसमन्वितम् ।
भागमात्रप्रमाणेन द्वारान् कुर्यात्प्रमाणवित् ॥ ८ ॥
प्रादेशमात्रविस्तारं शरावाणां मुखं भवेत् ।
शरावाणामधः कुर्यात्तदर्धं वा यथोचितम् ॥ ९ ॥
व्रीहिमुद्गयवाश्चापि निष्पावाश्च प्रियङ्गवः ।
गोधूमाश्चणकास्तिल्वाः मसूराः सर्षपास्तथा ॥ १० ॥
सर्वेषामप्यलाभे तु यथालाभं समाहरेत् ।
आतपेन च संशोष्य संव्यपोह्याशुभानि च ॥ ११ ॥
पूर्वाह्णे नवपात्रेषु तोये धान्यानि निक्षिपेत् ।
सायं सन्ध्यामुपास्यैव यजमानयुतो गुरुः ॥ १२ ॥
आलयस्योत्तरे पार्श्वे गोमयेनोपलिप्य च ।
प्रमुखे मण्डपे चैव पञ्चवर्णैरलङ्कृते ॥ १३ ॥
सप्तकिष्कुप्रमाणेन पञ्चभिस्त्रिभिरेव वा ।
तण्डुलैर्व्रीहिभिर्वापि पङ्क्तिं कुर्याद्विधानतः ॥ १४ ॥

हस्तविस्तारसंयुक्तं गोलकोन्नतिसंयुतम् ।
चतुर्दिक्षु तथा हस्तविस्तारद्वारसंयुतम् ॥ १५ ॥

तन्मध्ये ब्रह्मणः पीठं तण्डुलैर्वापि शालिभिः ।
षडङ्गुलसमुत्सेधं षोडशाङ्गुलमायतम् ॥ १६ ॥

त्रिवेदीसहितं कुर्याच्चतुरश्रं समन्ततः ।
शेषादीनां तु षण्णां वै पीठमेवं प्रकल्पयेत् ॥ १७ ॥

पादौ प्रक्षाल्य चाचम्य मध्ये ब्रह्माणमर्चयेत् ।
प्राग्द्वारादुत्तरे शेषं वक्रतुण्डं तु दक्षिणे ॥ १८ ॥

दक्षिणद्वारपार्श्वे तु गरुडं चक्रमेव च ।
पङ्क्तीशं पश्चिमद्वाराद् दक्षिणे च विधानतः ॥ १९ ॥

भूतेशमुत्तमासीनं पीठं चैव यथाविधि ।
पूर्वस्मिन्नुत्तरद्वारात्सोमं शान्तं समर्चयेत् ॥ २० ॥

इन्द्रादीशानपर्यन्तं जयाद्यप्सरसोऽर्चयेत् ।
हविषा च समायुक्तं सर्वेषामुत्तमं पृथक् ॥ २१ ॥

ब्रह्मादीनां तु षण्णां वै मध्यमं तु प्रकीर्तितम् ।
अधमं ब्रह्मणश्चैव शेषाणां बलिरेव तु ॥ २२ ॥

मृद्भिर्वा सिकताभिर्वा शुद्धाभिस्तान् प्रपूरयेत् ।
तेषां मध्ये कुशैर्वापि तन्तुना परिवेष्ट्य च ॥ २३ ॥

प्राङ्मुखः प्रयतो भूत्वा विन्यसेत्तान् क्रमेण तु ।
ब्रह्मणः परितः पङ्क्तिं गायत्रीं वैष्णवीं जपन् ॥ २४ ॥

चिन्तयेन्मेदिनीदेवीं तां सर्वेषु समर्चयेत् ।
सौवर्णे राजते पात्रे ताम्रे कांस्यमयेऽथवा ॥ २५ ॥

उद्धृत्य तोयमग्नानि क्षीरैः प्रक्षाल्य तानि वै ।
बीजानि पूरयित्वा तु सोमं तत्र समर्चयेत् ॥ २६ ॥

तत्काले तूर्यघोषं च घोषयित्वा समाहितः ।
परिधायाहतं वस्त्रं सोत्तरीयाङ्गुलीयकः ॥ २७ ॥

आचार्यो यजमानो वा वापयेदङ्कुरान् क्रमात् ।
सोमं राजानमित्युक्त्वा विष्णुसूक्तं समुच्चरन् ॥ २८ ॥

स्त्रीशूद्रौ कारयेतां चेत्ताभ्यां वापं न कारयेत् ।
वारुणं मन्त्रमुच्चार्य जलसेकं च कारयेत् ॥ २९ ॥

वस्त्रैर्नवैः समाच्छाद्य पुण्याहं वाचयेत्ततः ।
जलेन सेचयेन्नित्यं दीपं च परिरक्षयेत् ॥ ३० ॥

यथाङ्कुरः सुसंपन्नस्तथा यत्नेन रक्षयेत् ।
श्यामलाश्च तथा रक्ता ये च तिर्यग्गता अपि ॥ ३१ ॥

अङ्कुरास्त्वप्ररूढाश्च वर्जनीयाः प्रयत्नतः ।
श्यामेषु द्रव्यनाशः स्याद्रक्तेषु कलहो भवेत् ॥ ३२ ॥

तिर्यग्गतेषु रोगः स्यादप्ररूढे मृतिर्भवेत् ।
शुभं पीतेषु शुक्लेषु ऋजुमूर्ध्वं गतेषु च ॥ ३३ ॥

कर्तुः कारयितुश्चैव भवत्येव न संशयः ।
एवमेतत्क्रमेणैव मङ्गलायाङ्कुरार्पणम् ॥ ३४ ॥

पञ्चमेऽहनि युक्ते तु सद्यः कर्तुं त्वरान्वितः ।
तृतीयेऽहनि वा तद्वदङ्कुरानर्पयेद्बुधः ॥ ३५ ॥

परिधायाहतैर्वस्त्रैः पालिकाश्च समन्ततः ।
परिधायाहतं वस्त्रं सोत्तरीयाङ्गुलीयकः ॥ ३६ ॥

आचार्यः सुप्रसन्नात्मा वापयेदङ्कुरांच्छुभान् ।
अशक्तस्तण्डुलैः शुद्धैः सद्यस्कैर्वा शुभाङ्कुरैः ॥ ३७ ॥

पालिकादीन् प्रपूर्यैव पञ्चभिर्वाथ वर्णकैः ।
अलङ्कृत्य तु पद्माद्यैः पुष्पैर्वाऽपि च विन्यसेत् ॥ ३८ ॥

अङ्कुरोक्तक्रियाः सर्वास्तैस्तैरेव समाचरेत् ।
अङ्कुराणां तु सर्वेषां चन्द्रः प्रोक्तोऽधिदेवता ॥ ३९ ॥

नैव प्रीणाति भगवानङ्कुरार्पणमह्नि चेत् ।
अङ्कुरार्पणहीनं यत्कर्म चासुरमीरितम् ॥ ४० ॥

तस्मात्कुर्यात्प्रयत्नेन रात्रावेवाङ्कुरार्पणम् ।
गुणाधिक्यं यदि भवेत्तमादिष्वह्नि वाचरेत् ॥ ४१ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे अङ्कुरार्पणविधिर्नाम षड्विंशोऽध्यायः ॥

---

## सप्तविंशोऽध्यायः

अतः परं प्रवक्ष्यामि प्रतिष्ठाविधिमुत्तमम् ।
देवार्चनं द्विधा प्रोक्तममूर्तं च समूर्तकम् ॥ १ ॥

अमूर्तं गार्हपत्यादि सर्वाग्निषु हुतं स्मृतम् ।
तस्याधानादिकं सर्वं सूत्रे विखनसोदितम् ॥ २ ॥

तत्सूत्रोक्तविधानेन सर्वमाधारपूर्वकम् ।
अस्मिन् कर्मणि तच्छिष्टं होमकर्म समाचरेत् ॥ ३ ॥

समूर्तमालये त्रिम्ये नित्यं विधिवदर्चनम् ।
अग्न्याधानं प्रतिष्ठा स्यादिष्टिः पर्वार्चनाधिका ॥ ४ ॥

यागश्चावभृथान्तः स्यादुत्सवस्तद्विधानतः ।
विष्णोरेतत्समूर्तं यः पूजनं भक्तितश्चरेत् ॥ ५ ॥

अतीन्द्रियं सगच्छेत्तदक्षयं परमं पदम् ।
ग्रामादिषु च सर्वेषु सामान्येन कृतार्चनम् ॥ ६ ॥

तद्वास्तुवासिनां चैतत्सर्वेषां च समूर्तकम् ।
सामान्यमग्निहोत्रं स्यात्सर्वसिद्धिकरं तथा ॥ ७ ॥

सर्वशान्तिकरं चैव सर्वाशुभविनाशनम् ।
ऐहिकामुष्मिकं सर्वं ददात्यत्र न संशयः ॥ ८ ॥

तस्य प्रतिष्ठाधानस्य विधानं शृणुतर्षयः ।
आरम्भकालात्पूर्वस्मिन् यजमानो मुदान्वितः ॥ ९ ॥

वैखानसेन सूत्रेण निषेकादिक्रियान्वितम् ।
विप्रं स्वाध्यायसंपन्नं गृहस्थं लक्षणान्वितम् ॥ १० ॥

वैखानसाख्यसूत्रोक्तशौचाचारसमायुतम् ।
श्रौताचारसमायुक्तं सन्ध्योपासनतत्परम् ॥ ११ ॥

तत्सूत्रोक्तविधानेन नित्यहोमपरायणम् ।
पत्न्यपत्यपत्यसंयुक्तं दयाद्यात्मगुणैर्युतम् ॥ १२ ॥

सुप्रसन्नेन्द्रियं दान्तं ज्ञानिनं शान्तमानसम् ।
पारंपर्यक्रमायातवैष्णवं भक्तिसंयुतम् ॥ १३ ॥

अनन्यदेवताभक्तं नित्यं विष्णुपरायणम् ।
गृहविष्ण्वर्चनायुक्तं ध्यानकर्मणि निश्चलम् ॥ १४ ॥

आलयार्चाविधानज्ञमनुक्तक्रमवर्जितम् ।
प्रायश्चित्तादिवेत्तारमाचार्यं पूजयेद्बुधः ॥ १५ ॥

विधिनैव च तेनोक्तं सर्वकार्यं समाचरेत् ।
देववत्पूजनीयोऽयं यजमानेन सर्वदा ॥ १६ ॥

द्विजातिर्यजमानश्चेदाचार्यं वरयेत्स्वयम् ।
शूद्रोऽथवानुलोमो वा कर्तुमिच्छेत्तु भक्तिमान् ॥ १७ ॥

राजानं यजमानं च संकल्प्यैव गुरुं वरेत् ।
हौत्रशंसनकाले तु राजवत्प्रवरं वदेत् ॥ १८ ॥

प्रतिलोमस्तथा चेदं वैष्णवं कर्म नाचरेत् ।
अयने चोत्तरे कुर्याद्दक्षिणे वा त्वरान्वितः ॥ १९ ॥

मार्गशीर्षकमाखौ द्वौ निन्दितौ ब्रह्मणा पुरा ।
तयोरपि च कर्तव्यं त्वरितेनेति केचन ॥ २० ॥

मासेषु फाल्गुनः श्रेष्ठश्चैत्रवैशाखयोस्तथा ।
तिष्ये ज्येष्ठेऽश्वयुङ्मासे श्रावणे मासि वा पुनः ॥ २१ ॥

श्रवणे चैव रोहिण्यां स्वात्यां हस्ते पुनर्वसौ ।
त्रिषूत्तरेषु रेवत्यां श्रविष्ठे वारुणे तथा ॥ २२ ॥

सौम्यत्वाष्ट्रानुराधेषु तिष्ये चैव विशेषतः ।
अन्यस्मिन् सुप्रशस्ते वा यथोक्तगुणसंयुते ॥ २३ ॥

नक्षत्रे च तिथौ युग्मे प्रशस्ते विष्टिवर्जिते ।
गुरुशुक्रबुधेन्दूनामेकवारयुते शुभे ॥ २४ ॥

ग्रामस्य यजमानस्याप्यनुकूलेऽपि तत्र च ।
चरराशिं विसृज्यैव स्थिरराशिं प्रगृह्य च ॥ २५ ॥

सुप्रशस्ते मुहूर्ते वै प्रतिष्ठां कारयेद्बुधः ।
तस्मात्तु दिवसात्पूर्वं नवमे वाथ सप्तमे ॥ २६ ॥

पञ्चमे चाऽह्नि वा कुर्याद्विधिनैवाङ्कुरार्पणम् ।
उक्ताङ्कुरार्पणादूर्ध्वं स्नात्वा स्नानविधानतः ॥ २७ ॥

पौरुषं वैष्णवं सूक्तं यजुर्वेदस्य संहिताम् ।
यथाक्रमं जपन्नेव ब्रह्मयज्ञं समाचरेत् ॥ २८ ॥

सूक्तैर्द्वादशभिर्वाथ सावित्र्याऽथ सहस्रशः ।
त्रिरात्रमुपवासं वा पादकृच्छ्रमथापि वा ॥ २९ ॥

एकाहमुपवासं वा किल्बिषस्यानुरूपतः ।
आचार्यो नियतात्मा वै चरेत्कृच्छ्रं मुदान्वितः ॥ ३० ॥

अथवा पावनार्थं तु त्रिरात्रं व्रतमाचरेत् ।
यद्देवाद्यैस्तु कूश्माण्डैर्जुहुयात्तदनुक्रमात् ॥ ३१ ॥

तथैव यजमानोऽपि चरेत्कृच्छ्रं विशुद्धये ।
अनन्यतत्परो भूत्वा हविष्याशी जितेन्द्रियः ॥ ३२ ॥

आचार्येणोक्तसंभारान् यजमानः समाहरेत् ।
संभारानपि वक्ष्यामि विष्णोः स्थापनकर्मणि ॥ ३३ ॥

शमीजातमथाश्वत्थमरण्यर्थं तु यत्नतः ।
अलाभेऽश्वत्थमन्यं वा निर्दोषं च समाहरेत् ॥ ३४ ॥

समाहृत्य त्वचं सम्यग्व्यपोह्य च विशोष्य च ।
विच्छेदयित्वा द्विविधमूर्ध्वभागेन दारुणा ॥ ३५ ॥

द्वितालायामविस्तारां भागोत्सेधां शुभां तथा ।
तां षडङ्गुलविस्तारां गृह्णीयादरणीकृते ॥ ३६ ॥

तत्समां चोर्ध्वफलकां गर्तायामं यवद्वयम् ।
तालनाहं तदग्रे च मूले चापि शिखायुतम् ॥ ३७ ॥

एकाङ्गुलं शिखामानमीदृशं दण्डमाहरेत् ।
उत्तरां चारणिं सम्यगूर्ध्वभागेन तत्समाम् ॥ ३८ ॥

तदूर्ध्वफलकां चैवमधरारणिमायतः ।
कारयेन्मन्थदण्डं तु तालनाहयुतं क्रमात् ॥ ३९ ॥

अष्टाङ्गुलं भित्तिनाहः प्रमाणं चोत्तरारणेः ।
....तथा मूलं मथनार्थं तु योजयेत् ॥ ४० ॥

त्यजेदष्टाङ्गुलं मूलं तदग्रे द्वादशाङ्गुलम् ।
त्रीणि त्रीण्यङ्गुलान्येव पार्श्वतश्चाधरारणिम् ॥ ४१ ॥

एतदङ्गुलमध्यं तु श्रोणिदेश इति स्मृतः ।
एवं मथित्वात्र मध्ये कुर्यादग्निसमृद्धये ॥ ४२ ॥

अन्यत्र मथितं तच्चेदशुभावहमुच्यते ।
मौञ्जीं वा त्रिवृतां रज्जुं मन्थनार्थं च सम्भरेत् ॥ ४३ ॥

खदिराश्वत्थबिल्वाद्यैर्यज्ञोक्तैर्दारुभिस्तथा ।
द्विप्रादेशस्रुवं कुर्यान्मूलनाहं तदर्धकम् ॥ ४४ ॥

आनुपूर्व्यक्रमेणैव मूलात्संक्षिप्तमग्रतः ।
प्रादेशार्धं बिलादर्वागग्रनाहं च कारयेत् ॥ ४५ ॥

तस्याग्रे चापि कर्तव्यं प्रादेशोद्वृत्तमण्डलम् ।
गोलकं बिलविस्तारं बिलमध्ये तदूर्ध्वकम् ॥ ४६ ॥

शिखावत्तत्र कर्तव्यं व्रीहिमात्रोन्नतं क्रमात् ।
भित्तिस्तस्मात्तु गर्ते द्वे ते घृताधारके स्मृते ॥ ४७ ॥

तद्वर्ते निम्नमेकैकं माषमात्रं च मध्यगे ।
स्रुवमेवं प्रकुर्वीत होता मानं पृथक् पृथक् ॥ ४८ ॥
प्रादेशत्रयमायामं स्रुवस्यैवेति केचन ।
स्रुवायामं स्रुचं कुर्यादग्रं स्यात्तु षडङ्गुलम् ॥ ४९ ॥
पद्मस्य मुकुलार्धेन तुल्यमग्रं यथा भवेत् ।
द्व्यङ्गुलं तस्य मध्ये च बिलमङ्गुलनिम्नकम् ॥ ५० ॥
तस्मा दामुकुलाग्राद्वै घृतधाराबिलान्वितम् ।
कुर्याज्जुहूं द्वितालां च मूलनाहस्तदर्धकः ॥ ५१ ॥
पद्मस्य मुकुलाकारं मूलदण्डस्य चोच्यते ।
तद्दण्डाग्रपरीणाहो मूलादर्धं विधीयते ॥ ५२ ॥
दण्डाग्रेऽष्टाङ्गुलायामः पार्श्वत्रयसमायुतः ।
पार्श्वेष्वेकाङ्गुलोत्सेधो विस्तारो भित्तिरुच्यते ॥ ५३ ॥
मध्ये षडङ्गुलं निम्नं शिष्टं कुर्वीत बुद्धिमान् ।
जुहूमेवं विधां कृत्वा कुर्यादुपभृतं तथा ॥ ५४ ॥
जुहूसमस्तदायामो नाहस्तद्वदुदीरितः ।
ग्रीवा मूलार्धनाहा स्यान्मूलादूर्ध्वं कृशं शनैः ॥ ५५ ॥
एवं दण्डं विजानीयात्प्रादेशायतमेव च ।
ऊर्ध्वे प्रादेशमात्रं च चतुरश्रं षडङ्गुलम् ॥ ५६ ॥
तत्रैकाङ्गुलविस्तारां भित्तिमर्धाङ्गुलोच्छ्रयाम् ।
कृत्वा च कल्पयेन्मध्ये निम्नं तच्चतुरङ्गुलम् ॥ ५७ ॥
वृत्तं तन्मध्यमे चापि निम्नं प्रादेशमात्रकम् ।
अर्धाङ्गुलायतां कुल्यां कुर्वीत विधिवित्तमः ॥ ५८ ॥

ऊर्ध्वे षडङ्गुलायामं त्रिकोणं मुकुलोपमम् ।
वृतधारां प्रकुर्वीत निम्नादामुकुलान्तकाम् ॥ ५९ ॥

तां यवद्वयविस्तीर्णां यवनिम्नां च कारयेत् ।
दर्वी तालद्वयायामा घनमेकाङ्गुलं भवेत् ॥ ६० ॥

अग्रं षडङ्गुलायामं विस्तारो भाग उच्यते ।
मूलं पञ्चाङ्गुलायाममर्धविस्तारमेव च ॥ ६१ ॥

अग्राच्च मूलादारभ्य कृशं मध्यं द्विगोलकम् ।
अश्वत्थोदुम्बरप्लक्षवटैरेव विधानतः ॥ ६२ ॥

यज्ञालयचतुर्द्वारस्थापनाय यथाक्रमम् ।
कारयेत्तोरणान्येवमश्वत्थादिभिरेव च ॥ ६३ ॥

पञ्चहस्तसमुत्सेधः पादयोश्च विधीयते ।
तदन्तरं द्विहस्तं स्यात्पादपट्टीं च योजयेत् ॥ ६४ ॥

पट्टिकायामूर्ध्वमधो दारुशूलानि कारयेत् ।
तच्छूलानां समुत्सेधो विंशत्यङ्गुल उच्यते ॥ ६५ ॥

विमानपादमानं च तोरणोत्सेध उच्यते ।
चत्वारि तोरणान्येवं कारयेल्लक्ष्मकोविदः ॥ ६६ ॥

अगर्भान् साग्रदर्भांश्च कुशानपि समाहरेत् ।
दर्भमाला च कर्तव्या दर्भैश्छिन्नसमायुतैः ॥ ६७ ॥

अधो द्वितालमात्रं वै लम्बनार्थं विहाय च ।
प्रक्षिप्य दर्भौ द्वौ द्वौ च मध्ये पर्वणि पर्वणि ॥ ६८ ॥

तद्दर्भशेषभागैश्च रज्जुं कुर्यात्प्रदक्षिणम् ।
एनस्यां दर्भमालायां परीतायां च तत्र वै ॥ ६९ ॥

पिशाचान् दत्यरक्षांसि विधूय परितः सदा ।
ग्रहनक्षत्रताराद्यैः सर्वैस्सर्वत्र सर्वदा ॥ ७० ॥
परिरक्षति देवान् वै दर्भमाला गुणान्विता ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे आचार्यादिलक्षणविधानं नाम सप्तविंशोऽध्यायः ॥

---

## अष्टाविंशोऽध्यायः

पालाशखादिराश्वत्थन्यग्रोधोदुम्बरास्तथा ।
शमीबिल्वौ च निर्दोषाः समिधः सुप्रदेशजाः ॥ १ ॥

सर्वालाभे तु पालाशमश्वत्थं वा समाहरेत् ।
याज्ञिकाः समिधो ग्राह्याः द्वादशाङ्गुलमात्रकाः ॥ २ ॥

इध्मास्तद् द्विगुणाश्चेति कैश्चिदुक्ता मनीषिभिः ।
दशभिः पञ्चभिर्युक्तैः कुशैस्साग्रैरगर्भकैः ॥ ३ ॥

दर्भैर्वा ग्रथितान् सम्यगग्निकुण्डं प्रति प्रति ।
षट्त्रिंशदङ्गुलान् कुर्यात्परिस्तरणकूर्चकान् ॥ ४ ॥

प्रोक्षणाय कृतं कूर्चं हस्तमात्रं विधीयते ।
द्वादशाङ्गुलमात्राणि पवित्राणि तथैव च ॥ ५ ॥

परिस्तरणकूर्चैश्च तुलापरिधयः स्मृताः ।
होमार्थानां च सर्वेषां मानं मात्राङ्गुलेन वै ॥ ६ ॥

प्रस्थपूर्णा घृतस्थाली तदर्धे प्रणिधी स्मृते ।
तथैव प्रोक्षणीपात्रं द्विप्रस्थं चरुरुच्यते ॥ ७ ॥

स्थाली द्विप्रस्थपात्री च द्रोणार्धं करकः स्मृतः ।
केचित्कुडुबसम्पूर्णं प्रणिधी कारयेदिति ॥ ८ ॥

शरावाः प्रस्थपूर्णाश्च कुम्भा वै द्रोणपूरकाः ।
प्रधानकुम्भो ध्यानार्थं द्रोणद्वयसुपूरितः ॥ ९ ॥

कलशाश्चाढकैः पूर्णास्तद्विधाना यथोचिताः ।
जन्तुकण्टकलेपादिहीनं शुष्कं तदिन्धनम् ॥ १० ॥

आर्द्रं सधूमं दुर्गन्धं वर्ज्यं निम्बादिदूषितम् ।
वस्त्रं द्वादशहस्तं वै दशहस्तमथापि वा ॥ ११ ॥

अष्टहस्तादहीनं च त्रिविधं वस्त्रमुच्यते ।
पञ्चतालं चतुस्तालं त्रितालं विस्तृतं क्रमात् ॥ १२ ॥

अहतश्वेतवस्त्राणि नवान्येव समाहरेत् ।
उपयुक्तं च जीर्णं च छिन्नं च परिवर्जयेत् ॥ १३ ॥

अक्षिमोचनमुद्दिश्य वर्णपात्रं च तूलिकाम् ।
सूचीं दृढकरां चापि सुवर्णेनैव कारयेत् ॥ १४ ॥

कर्षमात्रसुवर्णेन तदर्धार्धेन वा कृताम् ।
स्वशक्त्या वा प्रयत्नेन शलाकां कारयेत्सुधीः ॥ १५ ॥

रत्नान्यपि यथोक्तानि धातून् बीजानि सर्वशः ।
रत्नानामप्यलाभे तु रुक्मं प्रतिनिधिं हरेत् ॥ १६ ॥

धातूनां पारदं चैव बीजानां यवमेव च ।
श्रीवत्सं पूर्णकुम्भं च भेरीमादर्शनं तथा ॥ १७ ॥

मत्स्ययुग्माङ्कुशौ शङ्खमावर्तं चाष्टमङ्गलम् ।
सुवर्णेन कृतान्यष्टौ मङ्गलद्व्यङ्गुलान्यपि ॥ १८ ॥

चक्रं शङ्खं गदां शार्ङ्गमसिं पञ्चायुधान्यपि ।
ब्राह्मणानां विवृद्ध्यर्थं स्रुक्स्रुवौ च कमण्डलुम् ॥ १९ ॥

जुहूमुपभृतं चान्यद्यज्ञपात्राणि यत्नतः ।
क्षत्रियाणां ध्वजं छत्रमङ्कुशं चामरद्वयम् ॥ २० ॥

हयनागरथांश्चैव खड्गं चैव धनुश्शरम् ।
पूर्णकुम्भं तदस्त्रं च शस्त्रेणापि समन्वितम् ॥ २१ ॥

वैश्यानां तु तुलातोदौ शूद्राणां युगलाङ्गलौ ।
श्रीरूपं कूर्मरूपं च गरुडं गजमेव च ॥ २२ ॥

कुम्भप्रक्षेपणार्थं च पीठन्यासार्थमेव च ।
सुवर्णेनैव सर्वाणि द्व्यङ्गुलोच्चानि कारयेत् ॥ २३ ॥

राजा तु यजमानश्चेत्प्रत्येकं पञ्चनिष्ककैः ।
सकलान्येव कार्याणि द्विजश्चेन्निष्कशः पृथक् ॥ २४ ॥

तथैव वैश्यशूद्रौ द्वौ कारयेतां विधानतः ।
अशक्तानां च सर्वेषां पृथक्च द्विजसत्तमाः ॥ २५ ॥

निष्कपादेन चैकैकं द्व्यङ्गुलान्येव कारयेत् ।
प्रत्येकं पादहीनं तु न कुर्यादिति शासनम् ॥ २६ ॥

आचार्यस्य विशेषेण स्थापकानां तु शक्तितः ।
कुण्डलान्यङ्गुलीयानि पुष्पाद्याभरणानि च ॥ २७ ॥

कण्ठस्याभरणं चैव कटकान्यपि शोभितम् ।
उत्तरीयोपवीतानि यथाशक्ति प्रकल्पयेत् ॥ २८ ॥

यथालाभं प्रमाणानि पीठन्यासार्थकानि च ।
अशक्तः पञ्चनिष्कैश्च कुर्यात्पञ्चाङ्गभूषणम् ॥ २९ ॥

घृतादीनि च गव्यानि सद्यः पक्कं घृतं शुभम् ।
मासातीतं तु गव्यं च वर्ज्यमाजं च माहिषम् ॥ ३० ॥

सद्योदुग्धं पयः श्रेष्ठं न शुक्तमभिधीयते ।
गन्धद्रव्यं च दीपार्थं घृतं वा तैलमेव वा ॥ ३१ ॥

धूपद्रव्यं तथार्घ्यं च धान्यान्यपि च तण्डुलान् ।
स्नानार्थं हविरर्थं च द्रव्याण्यपि समाहरेत् ॥ ३२ ॥

उक्तद्रव्यस्य हीने तु तद्ग्रामयजमानयोः ।
तद्द्रव्यस्यापि हानिः स्यात्क्रियाहीने तथैव च ॥ ३३ ॥

शुभकार्यस्य हानिः स्यान्मन्त्रस्याध्ययनस्य च ।
श्रद्धाभक्त्योर्विहीने च हानिः सर्वस्य वै भवेत् ॥ ३४ ॥

मरीचिर्मन्त्रहीने च सर्वहानिमथाब्रवीत् ।
तस्मात्सर्वप्रयत्नेन सर्वं पूर्णं समाचरेत् ॥ ३५ ॥

द्रव्यं विप्रस्य संग्राह्यं क्षत्रियस्य विशस्तथा ।
शूद्रस्य चानुलोमस्य ग्राह्यं भक्तिमतः पुनः ॥ ३६ ॥

प्रतिलोमस्य न ग्राह्यं द्रव्यं किञ्चिच्च जात्वपि ।
आलयात्पुरतो वापि दक्षिणे वा मनोरमे ॥ ३७ ॥

ईशान्ये वाथ वायव्ये उत्तरे यागमन्दिरम् ।
कल्पयेद्यागशालां च लक्षणेन समायुतम् ॥ ३८ ॥

मण्डपं कूटमथवा चतुर्द्वारसमायुतम् ।
विस्ताराद्द्विगुणोत्सेधान् स्तम्भान् कुर्याद्यथाविधि ॥ ३९ ॥

प्रपा वा तत्र कर्तव्या षोडशस्तम्भसंयुता ।
स्तम्भान्तरं चतुर्हस्तमुच्छ्रायश्च यथार्हतः ॥ ४० ॥

तस्य तालस्तलोत्सेधो यथालाभमथापि वा ।
शय्यावेदीं च तन्मध्ये चतुर्हस्तप्रमाणतः ॥ ४१ ॥

एकहस्ततलोत्सेधां चतुरश्रां प्रकल्पयेत् ।
बिम्बादर्धाधिकं मानं शय्यावेदीं चतुर्दिशम् ॥ ४२ ॥

शय्यावेद्यूर्ध्वतः कुर्यात्कूटं वर्षादिवारणम् ।
तोरणादिवितानैश्च ध्वजस्तम्भविवेष्टनैः ॥ ४३ ॥

मुक्तादामादिलम्बैश्च दीपैश्च बहुभिस्तथा ।
यागशालामलंकृत्य दर्भमालासमन्विताम् ॥ ४४ ॥

अश्वत्थाद्यैः कृतानीह तोरणानि यथाक्रमम् ।
चतुर्वेदादिमन्त्रैस्तु वेदरूपाणि संस्मरन् ॥ ४५ ॥

प्रागादि स्थापयेद्विद्वांश्चतुर्द्वारेषु वै तथा ।
तद्द्वारपार्श्वयोश्चैव कदलीक्रमुकैरपि ॥ ४६ ॥

अङ्कुरैः पूर्णकुम्भैश्चाप्यलंकुर्यात् स्वशक्तितः ।
यथैकस्मिन् गृहे ह्यग्नीनादधाति तथैव च ॥ ४७ ॥

एकस्मिन्नालये चापि त्रीणि बेराणि कल्पयेत् ।
नित्यं प्रधानं पूजार्थं बिम्बं चेति कदाचन ॥ ४८ ॥

आलये बहुबेरैस्तु युक्ते शोभासमन्विते ।
अत्यन्तप्रीतिसंयुक्तो वसत्येव जनार्दनः ॥ ४९ ॥

अशक्तो द्वौ तथैकं वा बिम्बं सम्यक् समाचरेत् ।
कौतुकं चोत्सवं द्वे चेदेकं कौतुकमेव वा ॥ ५० ॥

ते बिम्बे द्वे तु कुर्याच्चेत्कौतुके नित्यपूजनम् ।
औत्सवे चोत्सवं सम्यक् स्नपनं च समाचरेत् ॥ ५१ ॥

एकं कौतुकमेव स्यात्तत्र सर्वं समाचरेत् ।
पुनः शक्तिप्रपन्नो य औत्सवं स्नपनं तथा ॥ ५२ ॥

आहृत्य स्थापयेत् द्वौ च सहैव पृथगेव वा ।
आचार्यः कौतुकाद्यं च नवं चेच्छिल्पिनैव तत् ॥ ५३ ॥

रत्नन्यासं च कृत्वैव पीठे सम्यक् सुयोजयेत् ।
प्रतिष्ठोक्तदिनात्पूर्वं पञ्चमे ह्यक्षिमोचनम् ॥ ५४ ॥

कारयित्वा विधानेन मन्त्रवच्चाक्षि मोचयेत् ।
सूची दर्वीकराभ्यां च सौवर्णाभ्यां विशेषवित् ॥ ५५ ॥

[घ]वस्योक्तविधानेन मन्त्रवच्चाक्षिमोचनम् ।
नद्यां वाथ तटाके वा वाप्यां वाथ मनोरमे ॥ ५६ ॥

वितानेन समाच्छाद्य रक्षां तत्र विधाय च ।
नववस्त्राणि विस्तीर्य पुष्पदर्भकुशांस्तथा ॥ ५७ ॥

वस्त्रादिभिरलङ्कृत्य देवमभ्यर्च्य चात्वरः ।
वैष्णवं मन्त्रमुच्चार्य देवीभ्यां च समायुतम् ॥ ५८ ॥

प्राक्शीर्षं शयने देवं शाययीत विचक्षणः ।
द्रोण्यां वाभिमुखे गर्ते पञ्चगव्यैः प्रपूर्य च ॥ ५९ ॥

तदन्यनववस्त्राणि समास्तीर्य तथैव च ।
अभ्यर्च्य वैष्णवेनैव पञ्चगव्येऽथ शाययेत् ॥ ६० ॥

तस्माद्देवं समादाय कुशोदे शाययेत्तथा ।
जलाधिवासमेकाहमेकाहं पञ्चगव्यके ॥ ६१ ॥

अहोरात्रं दिवा चैकं कुशोदे चाधिवासितम् ।
एवं कर्तुमशक्तश्चेज्जले चाथ दिनत्रयम् ॥ ६२ ॥

अधिवासं तु कर्तव्यमिति केचिद्वदन्ति वै ।
पञ्चगव्याधिवासं च कृत्वा क्षीराधिवासनम् ॥ ६३ ॥

जलाधिवासनं पश्चात्कुर्यादित्याह काश्यपः ।
प्रतिष्ठादिवसात्पूर्वं तृतीयेह्न्यमन्त्रकम् ॥ ६४ ॥

कारयेत् ध्रुवबेरस्य शिल्पिनैवाक्षिमोचनम् ।
पीठानुरूपमर्चाया ब्रह्मस्थानं यथाविधि ॥ ६५ ॥

शिलाभिरिष्टकाभिर्वा तालमात्रसमुच्छ्रयम् ।
प्रतिष्ठाङ्गुलमुत्सेधं विस्तारोऽपि त्रिभिस्तथा ॥ ६६ ॥

वेदीभिश्च समायुक्तं पीठं तु चतुरश्रकम् ।
कारयेदथवा तत्र भुवङ्गसममेव वा ॥ ६७ ॥

पद्माकारं च तद्वृत्तं पीठं सम्यक् च कारयेत् ।
तस्य पीठस्य मध्ये तु भागाङ्गुल्यावगाढकम् ॥ ६८ ॥

श्वभ्रं षडङ्गुलायामविस्तारं चतुरश्रकम् ।
अच्छिद्रं सुदृढं सम्यगर्चापीठं प्रकल्पयेत् ॥ ६९ ॥

द्वितीयेऽहनि कुर्वीत मन्त्रवच्चाक्षिमोचनम् ।
प्रमुखे मण्डपे वाथ प्रपायां वा यथाविधि ॥ ७० ॥

कुण्डमौपासनाग्नेश्च कृत्वा तस्य विधानतः ।
सूत्रोक्तेनैव मार्गेण वास्तुहोमः सुहूयताम् ॥ ७१ ॥

तमग्निं विसृजेत्पश्चात्पश्चात्कर्म समाचरेत् ।
औपासनविधानेन कुण्डं कृत्वैव तत्र वै ॥ ७२ ॥

आघारं विधिवध्दुत्वा चाङ्गहोमः सुहूयताम् ।
दद्भ्यः स्वाहेति हुत्वा च मौलिमालादिभिस्तथा ॥ ७३ ॥

भूम्यादिपञ्चभूतानां मन्त्रैरपि च वैष्णवैः ।
हुत्वा पुरुषसूक्तेन जयाद्यैश्च तथैव च ॥ ७४ ॥

श्रिये जात इति प्रोच्य पावका नस्तथैव च ।
महीं देवीमितीत्युक्त्वा श्रीसूक्तं जुहुयात्ततः ॥ ७५ ॥

गृहदैवत्यं ततो हुत्वा ब्रह्मजज्ञानमुच्यते ।
विमानं च नवं स्याच्चेदङ्गं प्रत्यङ्गमुच्चरन् ॥ ७६ ॥

स्थूप्याद्युपानपर्यन्तं जुहुयान्नामभिः क्रमात् ।
पतिष्यति हरेर्दृष्टिः प्रथमं गवि शोभना ॥ ७७ ॥

स्वर्णशृङ्गां रौप्यखुरां सवस्त्रां कांस्यदोहनाम् ।
सुपुष्टाङ्गां सवत्सां गां स्थापयेदग्रतस्तथा ॥ ७८ ॥

तिलराशिं च कृत्वैव धान्यराशिं च कारयेत् ।
अष्टद्रोणादहीना तु राशिरित्यभिधीयते ॥ ७९ ॥

आज्यं कांस्ये सुपात्रे तु घृतप्रस्थं प्रगृह्य च ।
तथा दधि मधु क्षीरं देवस्याभिमुखं न्यसेत् ॥ ८० ॥

नवेनाथ पटेनाथ प्रच्छाद्याभिमुखं हरेः ।
सुवर्णेनैव कृत्वा तु पात्रं तूलीसमन्वितम् ॥ ८१ ॥

अक्षिप्रसाधकं वर्णं तस्मिन् प्रक्षिप्य तेन वै ।
देवस्य दक्षिणे स्थेयादाचार्यश्चोत्तरामुखः ॥ ८२ ॥

हिरण्यगर्भमित्युक्त्वा रुद्रमन्यं त्रयम्बकम् ।
एवमेव क्रमेणैव अङ्गहोमं समाचरेत् ॥ ८३ ॥

पद्मं वर्म च रक्तं च श्वेतं कृष्णं च तैजसम् ।
षण्मण्डलानि चैतेषां महाभूतानि पञ्च च ॥ ८४ ॥

परमात्मा च तान् देवान् स्मृत्वा पद्ममण्डलानि च ।
रुक्मपात्रस्थवर्णेन हेमतूलिकया तथा ॥ ८४ ॥

पौरुषं सूक्तमुच्चार्य दक्षिणे नयने तथा ।
अतो देवादिनान्ये च कारयेदक्षिमोचनम् ॥ ८५ ॥

कौतुके चोत्सवे बिम्बे स्नपने चाक्षि मोचयेत् ।
श्रियै जातेति मन्त्रेण श्रीदेव्याश्चाक्षिमोचनम् ॥ ८६ ॥

मेदिनी देवीति चोच्चार्य महीदेव्याश्च कारयेत् ।
तत्तन्मन्त्रं समुच्चार्य परिवाराक्षिमोचनम् ॥ ८७ ॥

पटमुत्सार्य गां चाज्यधान्यराश्यादि दर्शयेत् ।
अन्यबिम्बेषु चैवं स्याद्धोमार्थं चाक्षिमोचनम् ॥ ८८ ॥

तत्रोपयुक्तं सर्वं च तां गां च गुरवे ददेत् ।
तद्द्रव्यमन्यथा दत्तं यदि तत्कर्म निष्फलम् ॥ ८९ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे द्रव्यसंग्रहणाक्षि-
मोचनं नामाष्टाविंशोऽध्यायः ॥

---

## एकोनत्रिंशोऽध्यायः

दारुसंग्रहमारभ्य यावन्नेत्रनिमीलनम् ।
यथोक्तं बेरसंस्कारं कारयेच्छिल्पिना बुधः ॥ १ ॥

शिल्पिस्पर्शविशुद्ध्यर्थमक्ष्युन्मेषादनन्तरम् ।
कुम्भं सूत्रेण वस्त्राभ्यां वेष्टितं पूतवारिणा ॥ २ ॥

पूरयित्वाथ देवाग्रे शालिराश्युपरि न्यसेत् ।
ब्राह्ममासनमास्थाय कुम्भदक्षिणपार्श्वतः ॥ ३ ॥

शमीपलाशपत्राणि दूर्वाग्राणि शुभानि च ।
अक्षतांश्च कुशाग्रं च पुण्यपुष्पाणि काञ्चनम् ॥ ४ ॥

वदन्वै विष्णुगायत्रीं सर्वमेतत्पृथक् क्षिपेत् ।
इषेत्वोर्जेत्यादि जपन्नाप उन्दन्तु चैव हि ॥ ५ ॥

तत्तु तन्तुभिरावेष्ट्य मन्त्रानपि च वैष्णवान् ।
कूर्चेनैव तु तत्तोयमभिमृश्य समाहितः ॥ ६ ॥

तदम्बुना कुशाग्रेण तत्तच्चामीकरेण च ।
आपो हिरण्यवर्णादिपवमानादिभिस्त्रिभिः ॥ ७ ॥

शं नो देवीरभीत्युक्त्वा पुरुषसूक्तैश्च वैष्णवैः ।
शुद्धचर्थं प्रोक्षयेद्बेरं पुण्याहमपि वाचयेत् ॥ ८ ॥

एवं चित्रप्रतिष्ठायां चित्राभासे च कारयेत् ।
रात्रिहोमं समाप्यैव दिवा वै स्थापयेत्क्रमात् ॥ ९ ॥

वास्तुहोमं समुद्दिश्य मन्दिरस्योत्तरे तथा ।
औपासनाग्निकुण्डं च कल्पयेत विधानतः ॥ १० ॥

यद्वा श्रामणकाग्निं च कुर्यादिति च केचन ।
वक्ष्येऽहं यागशालायामग्निकुण्डप्रकल्पनम् ॥ ११ ॥

प्राच्यामाहवनीयं स्यादन्वाहार्यं तु दक्षिणे ।
पश्चिमे गार्हपत्यं स्यादावसथ्यं तथोत्तरे ॥ १२ ॥

मध्ये सभ्यं च कर्तव्यं शय्यावेद्यास्तु पूर्वतः ।
उत्तरे शयनाद्वाथ कारयेदिति केचन ॥ १३ ॥

पञ्चाग्निलक्षणं चापि तेषां कुण्डं च वक्ष्यते ।
ब्रह्माऽग्निं पञ्चधा सृष्ट्वा पञ्च लोकेष्वकल्पयत् ॥ १४ ॥

स्वर्गे चाहवनीयं तु प्रतिष्ठाप्य ततः परम् ।
तथान्तरिक्षेऽन्वाहार्यं द्वितीयं परिकल्प्य च ॥ १५ ॥

भूम्यां च गार्हपत्याग्निं महर्लोके तथैव च ।
आवसथ्यं जनर्लोके सभ्यं चाग्निमकल्पयत् ॥ १६ ॥

चतुरश्रो यतः स्वर्गः कुण्डं चाहवनीयकम् ।
चतुरश्रं समाख्यातं चापवच्चान्तरिक्षकम् ॥ १७ ॥

कृत्वान्वाहार्यस्य रूपं धनुषो रूपवत्ततः ।
आकृतिर्मण्डलाकारा भुवस्तस्मात्तदाकृतिः ॥ १८ ॥

कुण्डं च गार्हपत्यस्य महर्लोकस्त्रिकाश्रकः ।
आवसथ्यस्य तु प्रोक्तं तथा कुण्डं त्रिकाश्रकम् ॥ १९ ॥

चतुरश्रो जनर्लोकः कुण्डं सभ्यं च तादृशम् ।
पौण्डरीकं तपोलोकं पद्माग्निं तु दलैर्युतम् ॥ २० ॥

सभ्यस्य दक्षिणे कार्यं पौण्डरीकं क्रमाद्बुधैः ।
आकारं चाप्यथैतेषां तत्तल्लोकसमं विदुः ॥ २१

द्वात्रिंशदङ्गुलायामामूर्ध्ववेदिं चतुर्दिशम् ।
चतुरङ्गुलविस्तारां कोलकोत्सेधसंयुताम् ॥ २२ ॥

कृत्वा परिगतामेवमधोवेदिं च कारयेत् ।
अधोवेद्याः समुत्सेधविस्तारौ भागकौ मतौ ॥ २३ ॥

कुण्डमध्ये चतुर्विंशत्यङ्गुलायतविस्तृतम् ।
भागनाहं च कुर्वीत चतुरश्रं समन्ततः ॥ २४ ॥

निम्नं पञ्चाङ्गुलं वापि षडङ्गुलमथापि वा ।
कुण्डमाहवनीयाग्नेरेवमेव विधानतः ॥ २५ ॥

कुण्डमौपासनस्याग्नेर्ज्ञेयमाहवनीयवत् ।
अङ्गुल्या पञ्चविंशत्या चतुर्भिश्च यवैः सह ॥ २६ ॥

वृत्तं आम्यात्तदर्धं तु व्यपोह्योत्तरतः क्रमात् ।
तद्दक्षिणेऽन्वाहार्यस्य कुण्डं कुर्याद्विधानतः ॥ २७ ॥

अष्टादशाङ्गुलं भ्रान्त्वा वृत्तं संपूर्णचन्द्रवत् ।
पश्चिमे गार्हपत्यस्य कुण्डं विद्याद्यथोदितम् ॥ २८ ॥

अष्टाङ्गुलं रसांशं तु यवैः षड्भिः समन्वितम् ।
भुजात्त्वेकात् त्रिकोणं स्यादावसथ्यस्य कुण्डकम् ॥ २९ ॥

भुजास्तिस्रस्तु कुर्वीत दक्षिणोत्तरपश्चिमाः ।
सङ्गताग्रासु सर्वासु तत्त्रिकोणं भविष्यति ॥ ३० ॥

भागं तु परितो हित्वा शेषं निम्नं षडङ्गुलम् ।
अधोवेदिं च परितश्चतुरङ्गुलविस्तृताम् ॥ ३१ ॥

एवं त्रिवेदिसहितं कुण्डान्येतानि कल्पयेत् ।
वेद्योर्भागस्तु विस्तारश्चैकैको भाग उन्नतः ॥ ३२ ॥

त्रिंशदङ्गुलायामामूर्ध्ववेदिं चतुर्दिशम् ।
वेदिस्तु मध्यमा प्रोक्ता द्विचत्वारिंशदङ्गुला ॥ ३३ ॥

पञ्चाशदङ्गुलायामा ह्यधोवेदिः समन्ततः ।
तिसृणामपि वेदीनां विस्तारश्चोच्छ्रयस्तथा ॥ ३४ ॥

प्रतिष्ठाङ्गुलमुद्दिष्टं प्रत्येकं च तथैव च ।
मध्यवेद्यास्तु विस्तारः पञ्चाङ्गुलमिति स्मृतम् ॥ ३५ ॥

कुण्डमध्ये चतुर्विंशदङ्गुलायतविस्तृतम् ।
निम्नमष्टाङ्गुलं वापि दशाङ्गुलमथापि वा ॥ ३६ ॥

अग्नेः सभ्यस्य कुण्डं च कुर्यादेवं विधानतः ।
कुण्डं श्रामणकाग्नेश्च कुर्यात्सभ्याग्निकुण्डवत् ॥ ३७ ॥

सभ्याग्निकुण्डवत्सर्वं निम्नमर्काङ्गुलं स्मृतम् ।
सभ्याग्निकुण्डादाग्नेय्यां पौण्डरीकं प्रकल्पयेत् ॥ ३८ ॥

द्वादशाङ्गुलमुत्सेधं समवृत्तं प्रकल्पयेत् ।
अष्टादशभिरध्यर्धैरङ्गुलीभिर्श्रमीकृतम् ॥ ३९ ॥

वृत्तं तदूर्ध्ववेदि स्यात्पौण्डरीके विशेषतः ।
भित्तिरुत्सेधविस्तारमूर्ध्ववेद्यास्त्रिकोलकम् ॥ ४० ॥

शेषं निम्नं च कर्तव्यं निम्नमष्टाङ्गुलं भवेत् ।
मध्यवेदिसमुत्सेधं विस्तारो भाग उच्यते ॥ ४१ ॥

अधोवेद्याः समुत्सेधश्चतुरङ्गुलमेव वै ।
षडङ्गुलं तु विस्तारो दलैः षोडशभिर्युतः ॥ ४२ ॥

शल्यलोष्टतुषाङ्गारतृणभस्मादिहीनया ।
मृदा वा वालुकाभिर्वा कुण्डान्येतानि कल्पयेत् ॥ ४३ ॥

ऐशान्यां यागशालायामौपासनविधानतः ।
श्वभ्रं च स्नपनार्थं तु कर्तव्यं तद् द्विवेदिकम् ॥ ४४ ॥

अथवा बिम्बपीठं तु यावदायतविस्तृतम् ।
पीठस्य परितस्तस्य चतुर्दिक्षु तथैव च ॥ ४५ ॥

श्वभ्रं भागाधिकं कुर्यादुत्तरे जलमार्गकम् ।
दक्षिणोत्तरयोर्देव्योः श्वभ्रं कुर्यात्तथैव च ॥ ४६ ॥

एतेषामेव वह्नीनां वक्ष्यते नामनिर्णयः ।
अग्निहोत्रादिकं हव्यं सर्वमाहुतिसंज्ञकम् ॥ ४७ ॥

आदाय तेन हव्येन होतव्योऽयं द्विजातिभिः ।
तस्मादाहवनीयाख्यां गतो वह्निर्महाद्युतिः ॥ ४८ ॥

हो इत्येव विषादोऽपि विषादो दुःखमुच्यते ।
दुःखं तापत्रयं प्रोक्तं तापो हि नरकः स्मृतः ॥ ४९ ॥

तस्मात्तु नरकान्नित्यं यस्मिन्नग्नौ हुतं सदा ।
त्रायते यजमानं तदग्निहोत्रमिति स्मृतम् ॥ ५० ॥

अग्नेश्चाहवनीयस्य यस्मादाह्रियते तथा ।
ततोऽन्वाहार्य इत्युक्तो दक्षिणाग्निः पुरातनैः ॥ ५१ ॥

दक्षिणे कल्प्यमानत्वात् दक्षिणाग्निश्च स स्मृतः ।
धार्यो गृहपतेर्यस्माद्गार्हपत्य इति स्मृतः ॥ ५२ ॥

वसत्यावसथे यस्मादावसथ्यस्ततो भवेत् ।
ऋषिष्वग्निषु वेदेषु देवेष्वपि पितृष्वपि ॥ ५३ ॥

सभ्यंगतेषु मुख्योऽभूत्तस्मात्सभ्य उदाहृतः ।
त्रीनग्नीन् वाथ पञ्चाग्नीनाहिताग्निर्जुहोत्यमून् ॥ ५४ ॥

आवसथ्याख्यया केचिदाहुरौपासनं च वै ।
विवाहादि गृहस्थेन निधायाजस्रमेव च ॥ ५५ ॥

होमैरुपासनादग्निरौपासन इतीरितः ।
भेदो ह्याहवनीयस्य चाग्निरौपासनो यतः ॥ ५६ ॥

कुण्डमौपासनस्यापि ज्ञेयमाहवनीयवत् ।
साकल्यमग्निहोत्रस्य तपसां चापि चाक्षनम् ॥ ५७ ॥

विचिन्त्य श्रमणे चाग्निं ब्रह्मा यमसृजत्पुरा ।
तस्माच्छ्रामणकं प्राहुरग्निमेतं पुरातनाः ॥ ५८॥

सभ्याग्नेरेव भिन्नोऽभूदग्निः श्रामणको यतः ।
तस्माद्द्वयोरग्निकुण्डं तुल्यमेवेति संस्मृतम् ॥ ५९ ॥

एष श्रामणकाग्निस्तु वनस्थस्य विधीयते ।
गृहस्थोऽग्निं यथा नित्यं जुहोत्यौपासनं बुधः ॥ ६० ॥

श्रामणकं वनस्थोऽपि तथा नित्यं जुहोति च ।
हृत्पुण्डरीकादन्योऽग्निः संजातो ब्रह्मणस्तु यः ॥ ६१ ॥

हृत्पुण्डरीकजातत्वात्पौण्डरीकं हि तद्विदुः ।
तस्याकारश्च कुण्डस्य पुण्डरीकवदुच्यते ॥ ६२ ॥

तपोलोकश्च सत्यं च विष्णोर्लोको जनस्तथा ।
पौण्डरीकाधिदेवस्तु नारायण इति स्मृतः ॥ ६३ ॥

सर्वनिष्कृतिहोमार्थं क्रतूनामुत्तरः क्रतुः ।
तदग्नौ सर्वकाम्यं च यजेदित्याह पूर्वजः ॥ ६४ ॥

यथैव वायोरेकस्य पञ्चधा भेद उच्यते ।
तथैव मूर्तिर्विष्णोश्च सर्वप्राणिहिताय वै ॥ ६५ ॥

नामरूपादिभेदेन पञ्चधा भेद उच्यते ।
एष पुरुषः पञ्चधा पञ्चात्मेत्याह श्रुतिः ॥ ६६ ॥

तथा तद्धर्ममार्गेश्च नाममन्त्रक्रियादिषु ।
पञ्चधा भेदमिच्छन्ति प्रतिष्ठायां हरेः प्रभोः ॥ ६७ ॥

पञ्चमूर्त्यधिदेवांस्तान् पञ्चाग्नीन् परिकल्पयेत् ।
विष्णुमूर्तिस्तु सभ्याग्नेरधिदेवः प्रकीर्तितः ॥ ६८ ॥

तथैवाहवनीयाग्नेः पुरुषो देवता स्मृतः ।
सत्योऽन्वाहार्यदेवश्च गार्हपत्येऽच्युतस्तथा ॥ ६९ ॥

आवसथ्येऽनिरुद्धश्च पञ्चानां पञ्च देवताः ।
मध्ये विष्णुस्तु पुरुषः प्राच्यां सत्यस्तु दक्षिणे ॥ ७० ॥

प्रतीच्यामच्युतस्तद्वदनिरुद्धस्तथोत्तरे ।
तत्तद्दैवत्यवद्धोमं तत्तद्देशे प्रकल्पयेत् ॥ ७१ ॥

आद्येष्टकानां विन्यासो गर्भप्रक्षेपणं तथा ।
मूर्धेष्टकानां न्यासश्च ध्रुवसंस्थापनं तथा ॥ ७२ ॥

महाप्रतिष्ठा श्रेष्ठा च प्रतिष्ठा पञ्चधा स्मृता ।
पञ्चप्रतिष्ठास्वेतासु पञ्चाग्नीन् जुहुयात्तथा ॥ ७३ ॥

पञ्चधाऽग्नीन् न्यक्रामद्विराडित्याह वै श्रुतिः ।
देव्योश्च कौतुकस्यापि स्नपनस्योत्सवस्य च ॥ ७४ ॥

सह प्रतिष्ठा चेत्तत्र पृथग्घोमं न कारयेत् ।
परितो यागशालायां तस्य तस्य दिशि क्रमात् ॥ ७५ ॥

दिग्देवतानामष्टानामन्येषां च यथाविधि ।
औपासनाग्निकुण्डं च कारयेत पृथक् पृथक् ॥ ७६ ॥

अथवाप्यालये तेषां कुण्डं कुर्याद्विधानतः ।
दिग्देवानां च होमस्तु दिशाहोम इतीर्यते ॥ ७७ ॥

सर्वेषां परिवाराणां प्रत्येकं होममुत्तमम् ।
दिग्देवतानामष्टानां होमं वै मध्यमं विदुः ॥ ७८ ॥

देवस्य पौण्डरीकाग्निं पञ्चाग्नीनपि कल्पयेत् ।
अधमक्रमयेनं वै वदन्ति मुनयोऽपरे ॥ ७९ ॥

विष्वक्सेनस्य वीशस्य होमं सर्वत्र कारयेत् ।
एतद्रहस्यमस्मभ्यमुदितं विखनसा पुरा ॥ ८० ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे पञ्चाग्निकुण्डलक्षणं नामैकोनत्रिंशोऽध्यायः ॥

---

## त्रिंशोऽध्यायः

एवं कृत्वाग्निकुण्डानि पश्चादग्नींश्च साधयेत् ।
अरणिं चैव संन्यस्य पूजयित्वा विधानवित् ॥ १ ॥

पट्टिकामुत्तरां चैव हरिणीमिति चार्चयेत् ।
दण्डे विष्णुं समभ्यर्च्य तत्रैवाग्निं च पूजयेत् ॥ २ ॥

आचार्यः प्राङ्मुखो भूत्वा योजयित्वा तु मन्त्रवित् ।
मौञ्जीं च त्रिवृतां रज्जुं मथनार्थं समाहरेत् ॥ ३ ॥

जातवेदेति च जपन्नरण्यां मथनं चरेत् ।
यावदग्निः समुत्पद्येत्तावद्यत्नेन मन्त्रवित् ॥ ४ ॥

परितस्तु करीषाद्यैर्योजयित्वा ततः परम् ।
अग्निमादाय चोत्पन्नमयं त इति चोच्चरन् ॥ ५ ॥

तुषेन्धनादि निक्षिप्य सम्यगग्निं सुरक्षयेत् ।
अनेनैवाग्निना सर्वं होमकर्म समाचरेत् ॥ ६ ॥

आचार्यो यजमानश्च स्थापका ऋत्विजोऽपि च ।
प्रतिष्ठादिवसात्पूर्वं पञ्चमेऽह्नि त्र्यहेऽथवा ॥ ७ ॥

पूर्वेद्युर्वाथ पूर्वाह्ने वरयेदुक्तलक्षणान् ।
मन्त्रसूत्रविदः शिष्टान् पत्नीयुक्ताननिन्दितान् ॥ ८ ॥

वैखानसेन सूत्रेण निषेकादिक्रियान्वितान् ।
औपासनं जपं होमं वैश्वदेवं च कुर्वतः ॥ ९ ॥

प्रपन्नान् भक्तिसंयुक्तान् सर्वकर्मसु निश्चलान् ।
ईदृग्गुणसमायुक्ताश्चत्वारः स्थापकाः स्मृताः ॥ १० ॥

अलाभे च त्रयो वापि द्वौ वा ग्राह्यौ तु तद्गुणौ ।
बिम्बानां कौतुकादीनां सर्वेषां तु पृथक् पृथक् ॥ ११ ॥

यावन्तस्तत्र होमाः स्युस्तावन्तोऽध्वर्यवः स्मृताः ।
ऋत्विजौ ब्रह्मसोमौ द्वौ होता चैकस्तथैव च ॥ १२ ॥

अक्ष्युन्मेषणहोमार्थं वास्तुहोमार्थमेव च ।
स्नपनार्थं त्रयः प्रोक्ताः सर्वदेवार्चनाय वै ॥ १३ ॥

पञ्चाहीनान् सदस्यांश्च उपद्रष्टारमेव च ।
संन्यासिनो वनस्थान् वा न गृह्णीयात्सदार्थिनः ॥ १४ ॥

पदार्थिनो गृहस्थाश्च ग्राह्या वा ब्रह्मचारिणः ।
सुवृत्ताः परिपूर्णाङ्गा मन्त्रकल्पविचक्षणाः ॥ १५ ॥

न दुष्टाङ्गा न दीर्घाङ्गा न ह्रस्वाङ्गा न मत्सराः ।
योग्यानेवात्र संयोज्य गुरुर्वै याजयेत्क्रमात् ॥ १६ ॥

आलयस्योत्तरे पार्श्वे वास्तुहोमः सुहूयताम् ।
वास्तुहोमश्च यत्रोक्तस्तत्र वै वास्तुपूरुषम् ॥ १७ ॥

कल्पयित्वा विधानेन दशतालेन मानतः ।
वास्तुहोमश्च यत्रोक्तस्तावत्तस्याङ्गमुच्यते ॥ १८ ॥

प्राक्शिरोऽधोमुखः शेते भूमिस्थः स तु सर्वदा ।
एवं संकल्प्य मनसा वास्तुहोमं समाचरेत् ॥ १९ ॥

कुक्षिप्रदेशे कुर्याच्चेद्धनधान्यविवर्धनम् ।
ऊरुबाहुप्रदेशे तु सदावीर्यविवर्धनम् ॥ २० ॥

मुखप्रदेशे कुर्याच्चेत्पुत्रपौत्रविवर्धनम् ।
नाभेरधस्तात्सर्वत्र कुण्डमग्नेर्न कारयेत् ॥ २१ ॥

वास्तुहोमं च जहुयात्सूत्रोक्तेन विधानतः ।
पर्यग्निपञ्चगव्याभ्यां शोधयेदालयं तथा ॥ २२ ॥

अधिवासगतं देवमादायाभ्यर्च्य वै ततः ।
आलयाभिमुखे देशे विष्टरे विन्यसेत्पुनः ॥ २३ ॥

स्नात्वा पदार्थिनः सर्वे श्वेतवस्त्रानुलेपनाः ।
परिधायाहतं वस्त्रं सोत्तरीयाङ्गुलीयकाः ॥ २४ ॥

यजमानोऽथ तत्काले श्रद्धया देवसंनिधौ ।
मधुपर्कं च संदद्यादृत्विग्भ्यस्ततः परम् ॥ २५ ॥

पूजिताश्च तथा कुर्युः स्वं स्वं कर्म यथाविधि ।
आघारं सर्वकुण्डेषु कुर्वन्वैखानसेरितम् ॥ २६ ॥

मथिताग्निं समुज्ज्वाल्य शुष्कैरेवेन्धनैर्भृशम् ।
वर्धयित्वा शरावे तं पृथगेव प्रगृह्य च ॥ २७ ॥

अलाभे मथितस्याग्नेराचार्यागारतो हरेत् ।
यजमानगृहाद्वाथ श्रोत्रियागारतोऽथवा । ॥ २८ ॥

अद्भिः करकमापूर्य दक्षिणे ऽग्नेर्निधाय च ।
दर्भेष्वन्यांश्च संभारान् संभृत्योत्तरपार्श्वतः ॥ २९ ॥

एतोन्विन्द्रादिमन्त्रैश्च प्रोक्षणोल्लेखनादिकम् ।
कुर्यात्कुण्डे निधायाग्निं प्रज्वाल्यैव च मन्त्रतः ॥ ३० ॥

पश्चिमाभिमुखासीनं ध्यात्वैवाग्निं प्रणम्य च ।
वैखानसेन सूत्रेण सर्वमाघारमाचरेत् ॥ ३१ ॥

विशेषं संप्रवक्ष्यामि पञ्चाग्नीनां पृथक् पृथक् ।
षट्त्रिंशदङ्गुलैः कूर्चैर्द्वितीयस्यां तथैव च ॥ ३२ ॥

वेद्यामग्निं परिस्तीर्य परिधींश्च निधाय च ।
ऊर्ध्वाग्नौ समिधौ न्यस्य चोर्ध्ववेद्यां यथाविधि ॥ ३३ ॥

पुण्याद्यैर्विग्रहैरेवं तथार्घ्याचमनान्तकैः ।
इन्द्रादीनपि दिग्देवानभ्यर्च्याग्नौ च दक्षिणे ॥ ३४ ॥

पार्श्वे ब्रह्माणमभ्यर्च्य सोमं चोत्तरतोऽर्चयेत् ।
प्रणिधी द्वे निधायैव चोत्तरप्रणिधौ जले ॥ ३५ ॥

अग्न्यादिसर्वदेवांश्च आवाह्यैव ततः परम् ।
गार्हपत्याग्निमित्युक्त्वा गार्हपत्ये विशेषतः ॥ ३६ ॥

यज्ञदैवतविश्वेति चों भूः पुरुषमित्यपि ।
तथैवाच्युतमित्युक्त्वा देवतावाहनं चरेत् ॥ ३७ ॥

अन्वाहार्याग्निमित्युक्त्वा चान्वाहार्ये तथैव च ।
यज्ञदैवतविश्वेति चों भुवः पुरुषं तथा ॥ ३८ ॥

सत्यमूर्तिमिति प्रोच्य देवतावाहनं स्मृतम् ।
आहवनीयाग्निमित्युक्त्वा यज्ञदैवतमित्यपि ॥ ३९ ॥

ओं सुवः पुरुषं चेति पुरुषं चाधिदैवतम् ।
एवमाहवनीयाग्नावावाहनमथाचरेत् ॥ ४० ॥

आवसथ्याग्निमित्युक्त्वा यज्ञदैवतमित्यपि ।
ओं महः पुरुषं चेति देवमप्यनिरुद्धकम् ॥ ४१ ॥

इत्येवमावसथ्याग्नावावाहनमुदीरितम् ।
सभ्याग्निं यज्ञदेवेति चों जनः पुरुषं तथा ॥ ४२ ॥

विष्णुदेवं तथा सभ्ये ह्यावाहनमथाचरेत् ।
आवाहनक्रमेणाज्यनिर्वापं कारयेद्बुधः ॥ ४३ ॥

तत्क्रमेण स्रुवेणाज्यं गृहीत्वाज्याहुतीर्यजेत् ।
जुहुयात्पञ्चधा तेषु पञ्चाग्निषु विशेषतः ॥ ४४ ॥

चतुरङ्गुलिसंस्रावा अविच्छिन्ना घृताहुतीः ।
अङ्गुष्ठपर्वमात्रं तु गृहीत्वान्नाहुतिः स्मृता ॥ ४५ ॥

आघारे पौण्डरीकाग्नेर्विशेषः संप्रवक्ष्यते ।
पौण्डरीकाग्निमित्युक्त्वा यज्ञदैवतमित्यपि ॥ ४६ ॥

ओं तपः पुरुषं चेति वासुदेवमतः परम् ।
ओं सत्यं पुरुषं चेति नारायणमिति ब्रुवन् ॥ ४७ ॥

एवमावाहनं कृत्वा निरूप्याज्यं जुहोति वै ।
औपासनाग्निमित्युक्त्वा यज्ञदैवतमित्यपि ॥ ४८ ॥

औपासनाग्निमित्येवमावाह्याज्यं निरूप्य च ।
अग्निं श्रामणकं चेति श्रामणाग्निमुदीर्य च ॥ ४९ ॥

तथाज्यं जुहुयादेवमित्याघारक्रमं विदुः ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे पञ्चाग्न्याघारविधिर्नाम त्रिंशोऽध्यायः ॥

# एकत्रिंशोऽध्यायः

धारासु सप्त इत्युक्त्वा प्राङ्मुखो वाप्युदङ्मुखः ।
नद्यां तोयं दिवा शुद्धं शुद्धपात्रे समाहरेत् ॥ १ ॥

यजमानस्तथाचार्यं वस्त्राद्यैरभिपूजयेत् ।
स्नात्वाऽऽचार्यः प्रसन्नात्मा श्वेतगन्धानुलेपनैः ॥ २ ॥

ऊर्ध्वपुण्ड्रैर्द्वादशभिः कश्यपाद्युक्तमार्गतः ।
नववस्त्रोत्तरीयाभ्यां हेमपुष्पविभूषणैः ॥ ३ ॥

उपवीताङ्गुलीयाद्यैर्विभूष्याचम्य सत्कृतः ।
तत्काले कुम्भमादाय कुम्भपूजां समाचरेत् ॥ ४ ॥

सौवर्णं राजतं वापि ताम्रं मृण्मयमेव वा ।
द्वात्रिंशत्प्रस्थसंपूर्णं नवकुम्भं समाहरेत् ॥ ५ ॥

पक्वबिम्बफलाकारं सम्यग् दग्धं मृदा कृतम् ।
कुम्भं संगृह्य तस्मिंश्च व्यपोह्य च यवान्तरम् ॥ ६ ॥

इषेत्वोर्जेत्यादि जपन् तन्तुना परिवेष्टयेत् ।
अद्भिः प्रक्षाल्य तत्कुम्भमिदमापः शिवा इति ॥ ७ ॥

नवेनाहतवस्त्रेण सर्वगन्धसमायुतम् ।
नादेयं तोयमुत्पूतं कुशेनोत्पूय मन्त्रतः ॥ ८ ॥

आप उन्दन्त्विति जपन् कुम्भं तोयेन पूरयेत् ।
आपो वेत्यभिमृश्यैव तोये गन्धसमायुते ॥ ९ ॥

रत्नानि गजताक्ष्यौं च मङ्गलान्यायुधानि च ।
कूर्मरूपं च सौवर्णं गायत्रीं वैष्णवीं जपन् ॥ १० ॥

अक्षतं पुष्पसंयुक्तं कुशं कूर्चं च निक्षिपेत् ।
ब्रह्मक्षत्रियविट्छूद्रवृद्ध्यर्थं स्रुक्स्रुवादिकम् ॥ ११ ॥

छत्रध्वजादीन् सर्वांश्च तुलाद्यं युगलाङ्गलम् ।
सुवर्णेन कृतान् चिह्वान् द्व्यङ्गुलान् संन्यसेद्बुधः ॥ १२ ॥

कौशेयक्षौमवस्त्राभ्यां कुम्भमावेष्टयेद्गुरुः ।
सूक्ष्मकार्पासवस्त्राभ्यामुत्तमाभ्यां तु वा पुनः ॥ १३ ॥

पुष्पदामभिरश्वत्थपल्लवैरभिभूषयेत् ।
अस्थि रत्नं सिरास्तन्तुर्मांसं मृत्स्ना प्रकीर्तिता ॥ १४ ॥

शोणितं रक्तमृद्यत्र जलं मेदस्तथैव च ।
नारिकेलं शिरः स्मृत्वा चर्म स्याद्वेष्टनाम्बरम् ॥ १५ ॥

सप्तधातव इत्येते कुम्भेषु कलशेषु च ।
एतेष्वेको विहीनश्चेन्नास्ति देवस्य संनिधिः ॥ १६ ॥

देवस्य पुरतः कुम्भं धान्यराशौ च संन्यसेत् ।
शं नो मित्रेति शान्तिं च गायत्रीं वैष्णवीं जपन् ॥ १७ ॥

हृदये प्रणवैर्युक्ते चादिबीजं च संन्यसेत् ।
आत्मसूक्तं जपेच्चाथ पौरुषं सूक्तमेव च ॥ १८ ॥

अर्धचन्द्राकृति श्वेतं शुद्धस्फटिकसन्निभम् ।
वारुणं मण्डलं ध्यायेत्पूर्णकुम्भस्थवारिणि ॥ १९ ॥

अतो देवादिनाधावं प्रणवैरभिमन्त्रयेत् ।
आदिबीजं सुवर्णाभं सर्वकारणकारणम् ॥ २० ॥

तदाधावे तु संन्यस्य प्रणवैरपि वेष्टयेत् ।
सहस्रशीर्षं देवमिति जप्त्वा समाहितः ॥ २१ ॥

गुरूपदेशसंसिद्धो नित्यध्यानपरायणः ।
आचार्यः सुप्रसन्नात्मा ध्यानकर्म समारभेत् ॥ २२ ॥

भूमावुदङ्मुखो भूत्वा कुर्यात्स्वस्तिकमासनम् ।
दक्षिणं पादमूर्ध्वं च वामपादमधस्तथा ॥ २३ ॥

जान्वन्तरे तदङ्गुष्ठौ द्वौ च सम्यङ् निगृह्य च ।
तथा दृढात्मा शिश्नं च वृषणावप्यपीडयन् ॥ २४ ॥

अङ्के वामे न्यसेत्पाणिमन्यं चोत्तानमूर्ध्वतः ।
ऋजुकायो निवातस्थप्रदीप इव निश्चलः ॥ २५ ॥

किञ्चिदुन्नामितमुखो दन्तैर्दन्तानसंस्पृशन् ।
अव्यग्रो व्यग्रमक्षिभ्यामनिमील्य निमील्य च ॥ २६ ॥

एवं स्वस्तिकमासीनो नासाग्रस्थापितेक्षणः ।
प्राणायामं प्रयुञ्जीत यथाबलमचञ्चलः ॥ २७ ॥

प्राणायामस्त्रिधा प्रोक्तो रेचपूरककुम्भकैः ।
यश्चैवाधः प्रणिश्वासः स रेचक इति स्मृतः ॥ २८ ॥

ऊर्ध्वनिश्श्वसनः प्रोक्तः पूरकः पुण्यकर्मभिः ।
निश्वासस्य निरोधो यः स कुम्भक इति स्मृतः ॥ २९ ॥

प्राणायामं च कृत्वैव वशं कृत्वा मनस्ततः ।
बलवन्ति निगृह्यैव चेन्द्रियाण्यपि सर्वशः ॥ ३० ॥

विषयेभ्यश्च सर्वेभ्यः प्रत्याहृत्येन्द्रियाणि च ।
यत्र यत्र मनो याति निवर्त्य च मनस्ततः ॥ ३१ ॥

एकाग्रं च मनः कृत्वा ततः पश्येत्समाधिना ।
पद्मकोशप्रतीकाशं विश्वस्यायतनं महत् ॥ ३२ ॥

हृदयेऽग्निशिखामध्ये परमात्मा व्यवस्थितः ।
नारायणः परं ब्रह्म परमात्मेति वै श्रुतिः ॥ ३३ ॥

ध्यानात्संदृश्यते यस्तु तत्सूक्ष्मं परमव्ययम् ।
निवात इव दीपार्चिर्विद्युल्लेखेव चाम्बरे ॥ ३४ ॥

ईश्वरस्यात्मनो ज्योतिर्यदेव पुरुषः परः ।
अक्षरं तत्परं ब्रह्म शुद्धज्ञानस्वरूपकम् ॥ ३५ ॥

यदोंकारमयं ब्रह्म सम्यग्हृदि निधाय च ।
तच्चिन्तनपरं ध्यानं तद्ब्रह्मार्पणमुच्यते ॥ ३६ ॥

ब्रह्मभूते च देवेऽस्मिन् दृढं स्यादात्मनोऽर्पणम् ।
तत्राचलं मनः कृत्वा धारणां संप्रपद्य च ॥ ३७ ॥

अशरीरः शरीरेषु व्याप्य तिष्ठति शाश्वतः ।
बहुधा सर्वभूतेषु देवदेवो व्यवस्थितः ॥ ३८ ॥

शुद्धेन ज्ञानदीपेन परमात्मा च दृश्यते ।
अणोरणीयान् महतो महीयांश्च गुहास्थितः ॥ ३९ ॥

एवं तं श्रुतिरप्याह परमात्मानमव्ययम् ।
सुसूक्ष्मत्वादनिर्देश्यः सदसदित्यभिधीयते ॥ ४० ॥

अग्राह्य इन्द्रियैः सर्वैरव्यक्तो व्यक्त उच्यते ।
अव्यक्तः प्रकृतेर्मूलः प्रधानः परमोऽव्ययः ॥ ४१ ॥

अनादिनिधनः स्रष्टा पाता हर्ताऽखिलस्य च ।
नित्योऽचिन्त्योऽप्रमेयश्च निर्गुणोऽतीन्द्रियः परः ॥ ४२ ॥

परंज्योतिः परंधाम सर्वकारणकारणः ।
सर्वदेवमयो देवः सर्ववेदमयो विभुः ॥ ४३ ॥

सर्वयज्ञमयो विष्णुः सर्वधर्ममयो हरिः ।
सर्वेशः सर्वभूतात्मा सर्वाधारः सनातनः ॥ ४४ ॥

तेन सृष्टमिदं सर्वं तेन व्याप्तमिदं जगत् ।
तेनेदं पूर्णमित्याह श्रुतिस्तद्रहितं न च ॥ ४५ ॥

एवं सम्यग्विदित्वैव जित्वा सर्वेन्द्रियाणि च ।
निर्गुणं निर्मलं नित्यमक्षरं सर्वकारणम् ॥ ४६ ॥

निष्कलं सकलं देवं तेजोभासुरभाविनम् ।
विष्णुं तं मनसा ध्यायेद् भक्त्यैव परया मुदा ॥ ४७ ॥

तं रुक्मवर्णं रक्तास्यं रक्तनेत्रं सुखोद्वहम् ।
किरीटहारकेयूरलम्बयज्ञोपवीतिनम् ॥ ४८ ॥

कौस्तुभोद्भासितोरस्कं श्रीवत्साङ्कं चतुर्भुजम् ।
दक्षिणेनैकहस्तेन भक्तानामभयप्रदम् ॥ ४९ ॥

वामेनाप्यन्यहस्तेन स्वकट्यामवलम्बितम् ।
कराभ्यामितराभ्यां च शङ्खचक्रधरं परम् ॥ ५० ॥

शुकपिञ्छाम्बरधरं सर्वाभरणभूषितम् ।
एवं तं परमात्मानं प्रणवात्मकमव्ययम् ॥ ५१ ॥

एकाग्रमनसा भक्त्या ध्यायेद्देवं परात्परम् ।
कुम्भेऽम्भसि ततो भक्त्या देवमावाहयेद्गुरुः ॥ ५२ ॥

आवाह्यैव तथा तत्र ध्यायेत्सम्यक् समाधिना ।
रुक्माभं स्वप्नधीगम्यं विद्यादित्याह वै मनुः ॥ ५३ ॥

नाराख्यास्वयनादप्सु नारायण इति स्मृतः ।
तस्मादप्सु हरेर्ध्यानमद्भिरावाहनं स्मृतम् ॥ ५४ ॥

विश्वव्यापनशीलत्वाद्विष्णुरित्येव कीर्त्यते ।
सर्ववस्तुनिवासत्वाद्वासुदेव इति स्मृतः ॥ ५५ ॥

सूच्यग्रतोऽर्धमात्रं तु नास्ति तद्रहितं क्वचित् ।
[सूक्ष्मरूपः समाख्यातः सर्वभूतेषु संस्थित ॥ ५६ ॥

स्थूलरूपः परस्मिश्च लोके लक्ष्म्यादिभिः स्थितः ।
तयोरभेदभावेन ब्रह्मणोरर्चनं हितम् ॥ ५७ ॥

विखनोमुनये पूर्वं विष्णुना समुदीरितम् ।
वैखानसेन मुनिना लोकानुग्रहकारिणा ॥ ५८ ॥

अस्मभ्यमेतदुक्तं हि विशिष्टाद्वैतपूजनम् । ]
क्षीरे सर्पिस्तिले तैलं पुष्पे गन्धः फले रसः ॥ ५९ ॥

यथायसि महासारः काष्ठेऽग्निरिव संस्थितः ।
कुत आवाह्यते देवः कुत्र चोद्वास्यते पुनः ॥ ६० ॥

तस्मादावाहनं विष्णोरयुक्तमिति मन्यते ।
तथापि पूजनामार्गे मन्त्रैरावाहनं स्मृतम् ॥ ६१ ॥

अन्यथाऽभ्यर्चितुं देवं देवानां च न शक्यते ।
सर्वत्र व्यापिनस्तस्य श्रीविष्णोः परमात्मनः ॥ ६२ ॥

एकत्र स्मरणं यत्तदावाहनमितीरितम् ।
भक्तानुकम्पया सोऽपि विभूतिं स्वां सुविस्तृताम् ॥ ६३ ॥

संक्षिप्यैकत्र भवति कलापीव कलापकम् ।
अरण्यां व्यापितो वह्निरेकत्र ज्वलितो यथा ॥ ६४ ॥

तथा ध्यानेन भक्तस्य हृदि विष्णुः प्रकाशते ।
मार्कण्डेयो महातेजाः प्राह चैवं महामुनिः ॥ ६५ ॥

अस्माभिश्च हरेस्तस्य माहात्म्यं नावबुध्यते ।
मन्त्रैरावाहिते देवे स्थले कूर्चे जलेऽथवा ॥ ६६ ॥

भक्तानुकम्पया स्थित्वा पूजां गृह्णाति पूजितः ।
अथवा हरिमर्कस्य मण्डलान्तर्गतं परम् ॥ ६७ ॥

पीताम्बरधरं दीप्तं चतुरङ्गुलमात्रकम् ।
ध्यानगम्यं किरीटादिभूषणैः परिभूषितम् ॥ ६८ ॥

रुक्माभं स्वप्नगम्यं च तस्मादावाहयेत्तथा ।
देवेन सह तत्कुम्भे देव्यौ ध्यायेद्यथाविधि ॥ ६९ ॥

बालालयो यदि स्यात्तु तत्र देवं प्रणम्य च ।
अर्चयित्वा नमेत्सम्यगथ देवं विभूष्य च ॥ ७० ॥

तद्बिम्बसंस्थितां शक्तिं मन्त्रेणावाहयेत्ततः ।
कूर्चेनावाह्य तत्कुम्भे जले ध्यानं समाचरेत् ॥ ७१ ॥

तद्बिम्बं स्फुटिताद्यैश्च दोषैरुक्तैर्विवर्जितम् ।
लक्षणैरपि सर्वैश्च तथा युक्तं यथोदितैः ॥ ७२ ॥

विमानं ध्रुवबेरस्य चानुरूपं भवेद्यदि ।
मूलालयप्रतिष्ठार्थे बिम्बं कौतुकमाहरेत् ॥ ७३ ॥

लक्षणैरपि हीनं च दोषैरुक्तैश्च संयुतम् ।
विमानस्य ध्रुवस्यापि नानुरूपं च यद्भवेत् ॥ ७४ ॥

अब्धौ समुद्रगायां तु नद्यां वा विधिना त्यजेत् ।
लक्षणैश्च समायुक्तं बिम्बमन्यत्समाहरेत् ॥ ७५ ॥

द्वयोश्च नानुरूपं च लक्षणैश्च युतं यदि ।
न त्याज्यं कौतुकस्यापि स्नपनस्योत्सवस्य वा ॥ ७६ ॥

स्थानादन्यत्र देशे तु तद्बिम्बं च यथोचितम् ।
स्थापयेदर्चनं चास्य यथालाभं यथोचितम् ॥ ७७ ॥

तथा सकलरूपं तं कुम्भे विष्णुं विचिन्त्य च ।
वदन् शकुनसूक्तं वै बिम्बं कुम्भं समानयेत् ॥ ७८ ॥

कौतुकं च तथा देव्याश्चोत्सवं स्नपनं क्रमात् ।
सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतम् ॥ ७९ ॥

नृत्तगीतसमायुक्तं स्तोत्रध्वनिसमन्वितम् ।
आचार्यः शिरसा कुम्भं धारयन्नग्रतो व्रजेत् ॥ ८० ॥

स्थापका बिम्बमादाय गच्छेयुरनु तस्य वै ।
श्वभ्रमध्ये तु तं देवं विष्णुसूक्तेन संन्यसेत् ॥ ८१ ॥

श्वभ्रस्य दक्षिणे पार्श्वे न्यसेत्कुम्भं समीपतः ।
देव्योरप्यौत्सवं बिम्बं स्नपनं च तथा न्यसेत् ॥ ८२ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे कुम्भध्यानविधिर्नामैक-
त्रिंशोऽध्यायः ॥

---

## द्वात्रिंशोऽध्यायः

धान्यैस्तु प्रमुखे पङ्क्तिं दक्षिणाद्युत्तरान्तकाम् ।
कल्पयित्वा तु कलशानुत्तरादि च संन्यसेत् ॥ १ ॥

क्षीरेणैकं घृतेनैकं मधुनैकं प्रपूर्य च ।
सिद्धार्थकोदकेनैकमक्षतोदेन च क्रमात् ॥ २ ॥

गन्धोदेन कुशोदेन कलशौ संप्रपूर्य च ।
अष्टाढकादहीनानि सिद्धार्थादीनि निक्षिपेत् ॥ ३ ॥

प्रधानान् सप्त विन्यस्य शुद्धोदैः सप्त पूरितान् ।
उपस्नानांश्च कलशान् तत्पार्श्वे सुसंन्यसेत् ॥ ४ ॥

अथर्वं सामवेदं च यजुर्वेदमनन्तरम् ।
आदित्यं काश्यपं चैव मुनिं चैव ऋतून् पुनः ॥ ५ ॥

अयनान् वत्सरांश्चैव वायुमप्सरसस्तथा ।
मरुतस्तक्षकं चैव बृहस्पतिमिति क्रमात् ॥ ६ ॥

एतान् देवान् समाराध्य पुष्पाद्यैरष्टविग्रहैः ।
पश्चादाचमनं दद्याद्देवेशं संप्रणम्य च ॥ ७ ॥

शं नो देवीति मन्त्रेण क्षीरेण स्नापयेद्धरिम् ।
अग्न आयाहि मन्त्रेण घृतेन स्नापयेद्विभुम् ॥ ८ ॥

अग्निमीळेति मन्त्रेण मधुना स्नापयेत्तथा ।
पूतस्तस्येति मन्त्रेण स्नापयेत्सर्षपोदकैः ॥ ९ ॥

इमा ओषधयेत्युक्त्वा स्नापयेदक्षतोदकैः ।
अभित्वा शूर इत्युक्त्वा स्नापयेद्गन्धवारिणा ॥ १० ॥

चत्वारि वागिति जपन् कुशोदेनाभिषेचयेत् ।
वारीश्चतस्र इत्युक्त्वा सर्वोपस्नानमाचरेत् ॥ ११ ॥

द्रव्यं प्रति च देवेशं पाद्यार्घ्याचमनैस्तथा ।
इषेत्वोर्जेत्यादि जपन्नाप उन्दन्त्विति ब्रुवन् ॥ १२ ॥

उष्णोदकेन संस्नाप्य द्रव्येणाम्लादिना क्रमात् ।
शोधयित्वा सुगन्धेन तोयेन स्नापयेत्तथा ॥ १३ ॥

श्वभ्रादादाय देवेशं पीठे संस्थाप्य नैर्ऋते ।
धौतवस्त्रेण संमृज्य नवेनोत्तमवाससा ॥ १४ ॥

नवेनैवोत्तरीयेण भूषणैरपि शक्तितः ।
माल्यैर्गन्धैश्च देवेशमलङ्कुर्यात्प्रयत्नतः ॥ १५ ॥

शय्यावेद्यास्तु मध्ये च बिम्बात्तालाधिकायताम् ।
अर्धविस्तारसंयुक्तां यमयुक्तोच्छ्रयान्विताम् ॥ १६ ॥

एवं बिल्वद्रुमकृतां तत्रैव फलकां न्यसेत् ।
तदूर्ध्वे चर्मजादीनि वेदाहमिति मन्त्रतः ॥ १७ ॥

धान्यानां तण्डुलादीनां राशिमास्तीर्य च क्रमात् ।
षड्द्रोणसंमितं धान्यं तदर्धं तण्डुलानि च ॥ १८ ॥

मुद्गानि च तदर्धं तु तिलानि च तदर्धकम् ।
तदर्धं यवमित्युक्तमुपर्युपरि चास्तरेत् ॥ १९ ॥

उत्तमं चैव षड्द्रोणं मध्यमं तु तदर्धकम् ।
तदर्धमधमं ज्ञेयं राशीनां च यथाक्रमम् ॥ २० ॥

यथालाभं प्रगृह्यैव यजमानस्य शक्तितः ।
शयनानि पृथक् पञ्च प्रवक्ष्यन्ते क्रमेण वै ॥ २१ ॥

चर्मजै रोमजैश्चैव मुण्डजैरण्डजैस्तथा ।
वामजैश्च सुसंपन्नं शयनं यत्तदुच्यते ॥ २२ ॥

व्याघ्रादिचर्मणा कृत्यं चर्मजं समुदाहृतम् ।
आविकाद्यैश्च रोमैस्तु कृतं तद्रोमजं स्मृतम् ॥ २३ ॥

कार्पासेन कृतं यत्तन्मुण्डजं तद्विदुर्बुधाः ।
अण्डजं चेति जानीयात्पक्षिपिञ्छैः प्रकल्पितम् ॥ २४ ॥

कौशेयं क्षौमसंयुक्तं वामजं च विधीयते ।
एवं पञ्च समास्तीर्य शयनानि तदूर्ध्वतः ॥ २५ ॥

अलाभे चर्मजादीनां पञ्च वस्त्राणि वाहरेत् ।
तत्तत्प्रतिनिधिं ध्यात्वा समास्तीर्य पृथक् पृथक् ॥ २६ ॥

उपधानद्वयोपेतं शयनं कल्पयेद्गुरुः ।
अङ्कुरान् पूर्णकुम्भांश्च दीपांश्च परितो न्यसेत् ॥ २७ ॥

पश्चाद्देवं समादाय कुम्भेन सहितं क्रमात् ।
जपन् शकुनसूक्तं च तोयधारापुरःसरम् ॥ २८ ॥

शय्यावेदिं सुसंप्राप्य देवेशमुपवेशयेत् ।
देव्यौ तत्र भवेतां चेत्क्रमाद्दक्षिणवामयोः ॥ २९ ॥

स्नपनं चोत्सवं चापि न्यसेद्दक्षिणवामयोः ।
देववच्च स्मरन् कुम्भं भक्त्या देवाग्रतो न्यसेत् ॥ ३० ॥

आचार्यः स्थापकैर्युक्तः पुण्याहं वाचयेत्क्रमात् ।
सौवर्णं राजतं ताम्रं कांस्यं पात्रमथापि वा ॥ ३१ ॥

तण्डुलैराढकाहीनैः पूरयित्वाऽग्रतो न्यसेत् ।
सौवर्णं तान्तवं वापि दुकूलस्य विधानवित् ॥ ३२ ॥

समादाय प्रतिसरां तण्डुलोपरि विन्यसेत् ।
कृणुष्व पाज इत्युक्त्वाभिमृश्य स्वस्तिदेति च ॥ ३३ ॥

प्रतिसरां बन्धयेद्धस्ते देवदेवस्य दक्षिणे ।
वामहस्ते तु बध्नीयाद्देव्योः प्रतिसरां क्रमात् ॥ ३४ ॥
यद्वैष्णवोऽहमुच्चार्य शयने शाययेद्धरिम् ।
तत्तन्मन्त्रेण देव्यौ च शाययेत्पार्श्वयोः क्रमात् ॥ ३५ ॥

स्नपनं चोत्सवं बिम्बं शाययेत्पार्श्वयोस्तथा ।
प्राग्द्वारे देवतागारे देवोऽपि प्राक्छिरा भवेत् ॥ ३६ ॥

दक्षिणादिग्दिशि द्वारे यतो द्वारं ततः शिरः ।
उत्तराच्छादनं कुर्यादहतेनैव वाससा ॥ ३७ ॥

गलादधस्तात्सर्वत्र समास्तीर्य प्रयत्नतः ।
शिरसः पादपर्यन्तं समास्तीर्याथवा पुनः ॥ ३८ ॥

प्रतिसरं बन्धयेद्देवं ध्रुववेरेऽपि यत्नतः ।
बिम्बस्य कौतुकस्यापि स्नपनस्योत्सवस्य च ॥ ३९ ॥

श्रीभूम्योश्च तथा देव्योः सहैव स्थापना भवेत् ।
एककुम्भे तु देवस्य देव्योर्ध्यानं समाचरेत् ॥ ४० ॥

स्नपनं च पृथक्कुर्याद्बिम्बशुद्ध्यर्थमेव च ।
शय्यावेद्यां तथैकस्यामास्तीर्य शयनं पृथक् ॥ ४१ ॥

बध्वा प्रतिसरं तत्र शाययीत विधानतः ।
कौतुकस्य तु देव्योश्च शयनं चैकमुच्यते ॥ ४२ ॥

भिन्ने गर्भालये चैव तलभेदे तथैव च ।
पृथक् सर्वं च कर्तव्यमिति प्रोवाच पूर्वजः ॥ ४३ ॥

स्थापिते कौतुके पश्चात्स्नपनस्योत्सवस्य च ।
तयोः सह प्रतिष्ठायां पञ्चाग्नींश्च सहैव वा ॥ ४४ ॥

तयोरपि पृथक् चेत्तु पृथगग्नीन् प्रकल्पयेत् ।
यथोक्तं जुहुयुस्तेषु पञ्चाग्निषु तथैव च ॥ ४५ ॥

कुम्भं संपूज्य विधिना देवस्याभिमुखं न्यसेत् ।
ध्रुववेरात्तथा शक्तिं दीपाद्दीपमिवैव च ॥ ४६ ॥

ध्यात्वा देवं समावाह्य कुम्भं बिम्बं समानयेत् ।
शेषं सर्वं च कृत्वैव पुनरन्तः प्रविश्य च ॥ ४७ ॥

ध्रुववेरे समावाह्य तस्मादावाहयेद्बुधः ।
बालालये तयोः पश्चात्प्रतिष्ठा चेत्तु तत्र च ॥ ४८ ॥

कौतुकादर्च्यमानाद्वै बिम्बादावाहयेत्तथा ।
एष एव विशेषः स्यादन्यत्सर्वं समं भवेत् ॥ ४९ ॥

अतः परं प्रवक्ष्यामि हौत्रकल्पं बुधोत्तमाः ।
परिधायाहतं वस्त्रं सोत्तरीयाङ्गुलीयकः ॥ ५० ॥

तिष्ठेत्पुरस्तात्तस्यास्य होता प्रत्यङ्मुखः पुनः ।
अध्वर्युर्होतरेहीति होतारं प्रति संवदेत् ॥ ५१ ॥

अध्वर्यो देवतेत्याह स होता चाध्वर्युं प्रति ।
पश्चादाचम्य कूर्चं च गृहीत्वा पश्चिमामुखः ॥ ५२ ॥

स ओं नमः प्रवक्तेति तिष्ठन्नुच्चैः समुच्चरन् ।
एवं मामिति मन्त्रान्ते होतृशर्मान्तमेव च ॥ ५३ ॥

स्वकं नाम द्वितीयान्तममुमित्येव योजयेत् ।
भूते भविष्यतीत्युक्त्वा भूर्भुवःसुवरोमिति ॥ ५४ ॥

अध्वर्युः प्राङ्मुखो भूत्वा प्रवोवाजेत्यृचो वदेत् ।
प्रवोवाजेत्यृचं चाद्यावाजुहोतेति चान्ततः ॥ ५५ ॥

त्रिराहुः सन्तताः सर्वाः प्रणवेन समन्विताः ।
होत्रा तेनोक्तमोङ्कारं तं श्रुत्वाऽध्वर्युरेव सः ॥ ५६ ॥

ओं स्वाहेति वदन्निध्मं घृताक्तं जुहुयाद्बुधः ।
सामिधेनीस्तथा होता शंसेत्सप्तदश क्रमात् ॥ ५७ ॥

ब्राह्मण भारतेत्यन्तमुक्त्वा ज्ञात्वैव बोधयेत् ।
यजमानस्य होतुश्च प्रवदेत्प्रवरं क्रमात् ॥ ५८ ॥

देवेद्धोमन् विद्ध इति पुनराहुस्तथैव च ।
ग्रामश्च यजमानश्चैत्काश्यपप्रवरं वदेत् ॥ ५९ ॥

हौत्रक्रमेण होता च हौत्रमेवं प्रशंस्य च ।
आयात्विति समुच्चार्य मूर्तिमन्त्रैरनुक्रमात् ॥ ६० ॥

तं देवमावहेत्यग्निमध्वर्युं च प्रयोजयेत् ।
आदौ विष्णुं समावाह्य देवानावाहयेत्ततः ॥ ६१ ॥

अध्वर्युरपि तत्काले दक्षिणप्रणिधौ जले ।
आदिमूर्त्यादि शर्वान्तं मूर्तिमन्त्रैर्यथाक्रमम् ॥ ६२ ॥

आवाहयामीत्यावाह्य चोत्तरप्रणिधौ पुनः ।
धात्रादिविष्णुभूतान्तान् देवानावाहयेत्तथा ॥ ६३ ॥

आवाहनक्रमेणैव स्रुवेणाज्यं च निर्वपेत् ।
मूर्तिमन्त्रक्रमेणाज्यं देवेभ्यो जुहुयात्पुनः ॥ ६४ ॥

यज्ञशालाचतुर्दिक्षु वेदानध्यापयेत्क्रमात् ।
प्राग्द्वारे चैव ऋग्वेदं यजुर्वेदं तु दक्षिणे ॥ ६५ ॥

पश्चिमे सामवेदं च उत्तरेऽथर्वणं तथा ।
एवमेव क्रमेणैव वेदानध्यापयेत्क्रमात् ॥ ६६ ॥

आवाहितेषु सर्वेषु देवांस्तान् स्थापकास्तथा ।
परितो यागशालायामर्चयेयुश्चतुर्दिशम् ॥ ६७ ॥

एकादशोपचारैश्च ब्रह्माणं मध्यगेऽर्चयेत् ।
कल्पिते द्वारदेशे तु धात्रादीन् षट् समर्चयेत् ॥ ६८ ॥

द्वारे तु द्वारपालांश्च तत्तन्नामभिरर्चयेत् ।
रुद्रं पवित्रं वाग्देवीं रविं शक्रं श्रियं तथा ॥ ६९ ॥

हवीरक्षकमग्निं च प्राच्यामैशान्यपूर्वकम् ।
अग्निकोणान्तमभ्यर्च्य पश्चिमाभिमुखान् क्रमात् ॥ ७० ॥

भौमं जगद्भुवं दुर्गां यमं मन्दं च रोहिणीम् ।
मातृश्चैवार्चयेत्तत्र पार्श्वे वै दक्षिणे तथा ॥ ७१ ॥

प्रागादि पश्चिमान्तं च पूजयेदुत्तरामुखान् ।
निर्ऋतिं च महाकालं पुरुषं वरुणं तथा ॥ ७२ ॥

बुधं ज्येष्ठां च पुष्पेशं वायुं वै प्राङ्मुखान् क्रमात् ।
पूजयेत्पश्चिमे पार्श्वे दक्षिणाद्युत्तरान्तकम् ॥ ७३ ॥

शुक्रं मुनींश्च भृग्वादीन् गङ्गां धनदं निशाकरम् ।
पञ्चभूतानि शान्तं च प्रागन्तं पश्चिमादिकम् ॥ ७४ ॥

उदक्पार्श्वेऽर्चयेद्देवान् क्रमाद्वै दक्षिणामुखान् ।
प्राच्यां बहिस्तथा त्र्यक्षं विवस्वन्तं च दक्षिणे ॥ ७५ ॥

मित्रं च पश्चिमे पार्श्वे उदक्पार्श्वे महीधरम् ।
द्वारस्य दक्षिणे पार्श्वे बहिर्विकटमर्चयेत् ॥ ७६ ॥

उत्तरे च तथा पार्श्वे नागराजं समर्चयेत् ।
द्वारस्याभिमुखे स्थाने श्रीभूतं सम्यगर्चयेत ॥ ७७ ॥

वीशं चक्रध्वजाम्भोजभूतांश्च प्रमुखे क्रमात् ।
प्रागन्तमर्चयेदेतान् यथाप्रोक्तक्रमान्वितम् ॥ ७८ ॥

यस्यां दिशि विमानं स्यात् द्वारं तत्र प्रकल्पितम् ।
दक्षिणान्तं प्रतीच्यन्तमुत्तरान्तं च पूर्ववत् ॥ ७९ ॥

श्रीभूतवीशपूर्वांश्च क्रमादेवं समर्चयेत् ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे स्नपनहोत्रप्रशंसनं नाम द्वात्रिंशोऽध्यायः ॥

---

## त्रयस्त्रिंशोऽध्यायः

सभ्यमग्निं तथाध्वर्युः परिषिच्य विधानतः ।
पालशेध्मांश्च संगृह्य घृताक्तानग्रमूलयोः ॥ १ ॥

नारायणाय विद्महेति निर्धूमेऽग्नौ जुहोति वै ।
षड्भिश्च वैष्णवैराज्यं यजेत्स्रुवभृता बुधः ॥ २ ॥

पक्वं साज्यं ततो जुह्वा वैष्णवैर्जुहुयात्पुनः ।
स्रुवेणाज्यं समादाय देवदेवमनुस्मरन् ॥ ३ ॥

विष्णोर्नुकाद्यैर्मन्त्रैश्च सप्तभिश्चापि बुद्धिमान् ।
मन्त्रैः सहस्रशीर्षाद्यैरष्टभिर्दशभिस्तथा ॥ ४ ॥

अतो देवादिभिः षड्भिर्जुहुयाद्भक्तिसंयुतः ।
हिरण्यवर्णामित्युक्त्वा भूमिर्भूम्नेति च क्रमात् ॥ ५ ॥

यजेत् षोडशकृत्वश्च मन्त्रैरेतैरनुक्रमात् ।
तथा द्वादशकृत्वस्तु दशकृत्वोऽथवा यजेत् ॥ ६ ॥

शयानं देवमासाद्य प्रणम्यैवानुमान्य च ।
भुवर्भुवर्भूरित्युक्त्वा मूर्ध्नि नाभौ हृदि स्पृशन् ॥ ७ ॥

स यजेत्स्वस्ति चैवेति प्रजापतय इत्यपि ।
अग्निर्धामतये स्वाहा चादित्येभ्य इति ब्रुवन् ॥ ८ ॥

विश्वेभ्यो देवेभ्यश्चेति मरुद्गणेभ्य इति ब्रुवन् ।
भूरग्नये च इत्यादि महाव्याहृतिभिः सह ॥ ९ ॥

शतकृत्वो यजेदेषः सहस्राहुतिरिष्यते ।
पञ्चवारुणमप्येवं जयाद्यपि तथैव च ॥ १० ॥

अभ्यातानांश्च जुहुयाद्राष्ट्रभृद्भिस्ततः परम् ।
यद्देवाद्यैश्च कुश्माण्डैर्जुहुयात्तदनुक्रमात् ॥ ११ ॥

चिरायुषं यमित्युक्त्वा पुण्योंघेति समुच्चरन् ।
पञ्चापित्व इतीत्युक्त्वा भृगवे मुनये इति ॥ १२ ॥

ब्रह्मजिज्ञानं हिरण्यगर्भ इति द्वौ ब्रह्मणः स्मृतौ ।
रुद्रमन्यं त्रियम्बकमिति रौद्रं प्रकीर्तितम् ॥ १३ ॥

द्यावापृथिव्यो यस्याः श्री तस्थुषोधृत्य इत्यपि ।
य एष वितत्य विश्वं योनोभिद्वारदेवताः ॥ १४ ॥

मुनीन्द्र ब्रह्मनित्याय सन्ध्यायै इति वै ब्रुवन् ।
तथा च तापसायेति वैखानसायाच्युतेति च ॥ १५ ॥

किष्किन्धाय च इत्युक्त्वा तथा तीर्थाय वै पृथक् ।
एतान्वै द्वारपालांश्च जुहुयात्तदनुक्रमात् ॥ १६ ॥

त्रातारमिन्द्रमित्याद्या ऐन्द्रमन्त्रास्त्रयोदश ।
अग्निर्मूर्धायमग्निश्च मन्त्रावग्नेरिति स्मृतौ ॥ १७ ॥

यमोदाधार नमस्तेति मन्त्रौ याम्यौ प्रकीर्तितौ ।
वसवः सहस्राक्षेति मन्त्रौ द्वौ नैर्ऋतौ मतौ ॥ १८ ॥

ये ते शतमुदुत्तममयाश्चाग्नेति च क्रमात् ।
आपः सृजन्तु चत्वारो वारुणाः संप्रकीर्तिताः ॥ १९ ॥

मरुतः परमात्मेति मारुतौ मिश्रवाससः ।
एतांश्च मन्त्रौ कौबेरौ तौ च सौम्यौ प्रकीर्तितौ ॥ २० ॥

ईशानेति च ईशेति द्वावेतावीशदैवतौ ।
उदुत्यं जातवेदेति चित्रं देवेति भास्करौ ॥ २१ ॥

गमाग्नेत्यहमग्नेति अग्न आयाहि वीतये ।
इति त्रयः क्रमादुक्ताः मन्त्रा अङ्गारकस्य वै ॥ २२ ॥

प्रभुर्देवो ग्रहाधिप इति शनैश्चरावुभौ ।
बृहस्पतिर्देवानां बृहस्पतिः सोममित्यपि ॥ २३ ॥

बृहस्पते अतियदुपयाम गृहीतेति च ।
बार्हस्पत्यास्तु चत्वारो मन्त्रा एते समीरिताः ॥ २४ ॥

अविष्ठजो य तद्विष्णोस्तद्विप्रास इति त्रयः ।
बुधस्य मन्त्राः संप्रोक्ताः क्रमान्मन्त्रविशारदैः ॥ २५ ॥

प्रजापते सुभूःस्वयंभूरिति शौक्रौ मतावुभौ ।
भूगामिनीष्टगामिनीति गाङ्गेयौ संप्रकीर्तितौ ॥ २६ ॥

सोमयास्तेम यातेति सौम्यौ मन्त्रावुभौ मतौ ।
रुद्रमन्यं त्रियम्बकमिति रौद्रौ प्रकीर्तितौ ॥ २७ ॥

जगद्भुवं जगद्भुवो सुब्रह्मण्य इति क्रमात् ।
सुब्रह्मण्यो रुद्रभुवो, जगद्भुव इति क्रमात् ॥ २८ ॥

जगद्भुवोयोयजद्भुवः कौमाराः षडिमे मताः ।
अतो देवा इदं विष्णुरिति ज्ञेयौ तु पौरुषौ ॥ २९ ॥

या ब्रह्मचारिणी सा चारु महाकाल्याः प्रकीर्तितौ ।
एषामराणां याम्येति ज्येष्ठामन्त्रौ मतावुभौ ॥ ३० ॥

जातवेदस इत्याद्या दुर्गामन्त्राः षडीरिताः ।
नन्दिन्यापो विवेशेति नन्दिन्यौ संप्रकीर्तितौ ॥ ३१ ॥

शाखाभृतेति च ततो देवी प्रवाहिनीति च ।
मन्त्राविमौ तु ग्रान्थिन्यौ मन्त्रविद्भिरुदाहृतौ ॥ ३२ ॥

बिसिनीभृता प्रविद्युता शाखिन्यास्तु मतावुभौ ।
गङ्गा वाणी च विद्यां नो प्रवाहिण्याः प्रकीर्तितौ ॥ ३३ ॥

माताह्वयामहं चेति विकारिण्याः प्रकीर्तितौ ।
ययासतः प्रसविण्येति दद्रुण्याः संप्रकीर्तितौ ॥ ३४ ॥

याभ्यो या मानसेत्येतौ गङ्गावाण्योः प्रकीर्तितौ ।
यतस्त्वमासीदस्मेति भार्गवौ संप्रकीर्तितौ ॥ ३५ ॥

कश्याङ्गिरा विस्मापयती मारीचमन्त्रकौ ।
व्यावर्तते यो सस्मार इति द्वौ पौलहौ स्मृतौ ॥ ३६ ॥

य एषोऽदान आनन्दरो पौलस्त्यौ संप्रकीर्तितौ ।
प्रप्रायशो ये निष्यन्ता क्रतोरित्यनुभाषितौ ॥ ३७ ॥

यो नो वसिष्ठः ससेति वासिष्ठौ संप्रकीर्तितौ ।
य आनसूये य एष इत्यात्रेयौ सम्प्रकीर्तितौ ॥ ३८ ॥

स एको भूर्यस्त्रेष्टुभश्चेत्याकाशस्य प्रकीर्तितौ ।
प्रक्रम्या यो मातरिश्वा मन्त्रौ तौ वायवौ मतौ ॥ ३९ ॥

वृषाकपेरोजोभीति वैतिहोत्रौ मतावुभौ ।
आपो विश्वं चातुर्यं च तोयमन्त्रौ प्रकीर्तितौ ॥ ४० ॥

तथा आदित्या सर्वाणि गहीमन्तौ प्रकीर्तितौ ।
पावका नः, महोऽर्णेति मन्त्रौ सारस्वतावुभौ ॥ ४० ॥

शंसानि यच्छङ्कूय आतमेति लक्ष्म्याः प्रकीर्तितौ ।
य उत्तमोऽग्नेः पथा यं न्यक्षमन्त्राविवीरितौ ॥ ४१ ॥

यमग्निरिति यः संहरेति वैवस्वताविमौ ।
अद्याभगीशो नीलं घृतमिति भैलाविति स्मृतौ ॥ ४२ ॥

येनेध्येर समृध्येति मन्त्रौ क्षत्तुश्च संस्मृतौ ।
नरं पर्वन्कुल्यां न शैलस्य स्मृतावुभौ ॥ ४३ ॥

मातुर्गुणी या लोकेति ब्राह्मण्या देव्याः प्रकीर्तितौ ।
त्रिणेत्रधारी चिह्नेति गणेश्वर्याः प्रकीर्तितौ ॥ ४४ ॥

ज्वालामाला च बालेति कौमार्याः संप्रकीर्तितौ ।
युगे युगे सर्वरगा वैष्णव्याः संमतावुभौ ॥ ४५ ॥

कल्पान्तेष्विति तथा वाराह्यास्तौ प्रभाषितौ ।
या सर्वैव मालेति तथैन्द्राण्याः प्रकीर्तितौ ॥ ४६ ॥

चण्डाकरीति मोहीति द्वौ तु काल्याः प्रकीर्तितौ ।
धानान्य विश्व पुरेति पुष्परक्षकदैवतौ ॥ ४७ ॥

निश्वान् बले सोर्थ इति बलिरक्षकदैवतौ ।
आग्नेय अपाग इति वैश्वकर्मेणौ तु कीर्तितौ ॥ ४८ ॥

शतनारं कृत्वाणीति गारुडौ च प्रकीर्तितौ ।
धर्माधिगादौ योगन्धर इति वैनायकौ मतौ ॥ ४९ ॥

यमग्निरिति शंसो नि शेषस्य परिकीर्तितौ ।
मृगाननोऽग्ने वक्षोन इति सौदर्शनौ स्मृतौ ॥ ५० ॥

आसाग्न ओजो बलेति ध्वाजौ तौ परिभाषितौ ।
तन्मा यशोऽग्न अस्मादु१ इति शाङ्कौ स्मृताविमौ ॥ ५१ ॥

भूतानां भूतोभूतेति मन्त्रौ यूथाधिपस्य तु ।
अक्षहन्तेनि ये भूता विष्णुभूताधिदैवतौ ॥ ५२ ॥

सर्वेषां जुहुयादेतैर्मन्त्रैः परिषदां क्रमात् ।
हूयतां मूर्तिमन्त्रैश्च मन्त्रो यस्य न विद्यते ॥ ५३ ॥

वैष्णवैर्विष्णुसूक्तेन मिन्दाहुत्या तथैव च ।
विच्छिन्नाहुतयश्चापि महाव्याहृतिभिस्तथा । ॥ ५४ ॥

नारायणाय विद्मेति हुत्वा षड्वैष्णवैरपि ।
एतैर्मन्त्रैश्च जुहुयात्प्रत्येकं तु यथाक्रमम् ॥ ५५ ॥

तथैवाहवनीयादीन् जुहुयात्परिषिच्य च ।
सहस्रशीर्षिकाद्यैश्च तथाष्टादशभिः क्रमात् ॥ ५६ ॥

जुहुयादाहवनीयेऽग्नौ भक्त्या देवमनुस्मरन् ।
ध्यायन् विष्णोर्नुकाद्यैश्च सप्तभिस्तदनुक्रमात् ॥ ५७ ॥

जयादींश्च ततो हुत्वा ब्राह्ममन्त्रं जुहोति च ।
ब्राह्मं पुनश्च होतव्यमन्वाहार्ये विशेषतः ॥ ५८ ॥

अतो देवादिभिः षड्भिः श्रियै जात श्रियेति च ।
मेदिनी देवीत्युक्ता च गार्हपत्ये सुहूयताम् ॥ ५९ ॥

एकाक्षरादिमन्त्रैश्च चतुर्भिर्दशभिः क्रमात् ।
रौद्रमन्त्रद्वयेनापि कौबेरं चावसथ्यके ॥ ६० ॥

तथैव षोडशावृत्त्या जहुयाद्वै विशेषतः ।
चतुरग्निषु चैतेषु मन्त्रैरेतैर्यथोदितैः ॥ ६१ ॥

आज्यं षोडशकृत्वश्च जुहुयुस्ते पृथक् पृथक् ।
तथा द्वादशकृत्वोऽथ दशकृत्वोऽथवा पुनः ॥ ६२ ॥

पयोदधिघृतैर्युक्तैरुपजुह्वा यथाक्रमम् ।
जुहुयाद्विष्णुसूक्तेन पञ्चाग्निषु सलाजकम् ॥ ६३ ॥

आज्यं स्रुचा गृहीत्वैव यजेयुर्वैष्णवैरपि ।
जुहुयात्पौण्डरीकाग्नावतो देवादिवैष्णवम् ॥ ६४ ॥

श्वेताब्जाष्टोत्तरशतं घृतगव्यसमायुतम् ।
आप्लुत्याप्लुत्य जुहुयाद्गायत्रीं वैष्णवीं ब्रुवन् ॥ ६५ ॥

रक्ताब्जं बिल्वपत्रं वा श्वेताब्जानामलाभके ।
आज्यं तु विष्णुसूक्तेन पुरुषसूक्तेन हूयताम् ॥ ६६ ॥

पारमात्मिकमन्त्रैश्च देवं ध्यायन् जुहोति वै ।
इन्द्रादीनां च होमेषु तत्तन्मन्त्रैः पृथक् पृथक् ॥ ६७ ॥

आज्यं विंशतिकृत्वश्च स्रुवेण जुहुयात्क्रमात् ।
तेषां सर्वेषु होमेषु यजेयुर्वैष्णवैः पुनः ॥ ६८ ॥

सभ्याग्निं पौण्डरीकाग्निं विना सर्वाग्निषु क्रमात् ।
अन्तहोमश्च कर्तव्यः सूत्रोक्तविधिना पुनः ॥ ६९ ॥

मन्त्रान्तर्वर्तिनं विष्णुं भगवन्तमनुस्मरन् ।
स्वाहान्तं सर्वमन्त्रांश्च जुहुयात्तदनुक्रमात् ॥ ७० ॥

[इदं तु विष्णवे हव्यं न ममेति वदन् पुनः ।
मन्त्रोक्तदेवतायाश्च चतुर्थ्यन्तं च केचन] ॥ ७१ ॥

नृत्तगीतैश्च वाद्यैश्च रात्रिशेषं नयेद्बुधः ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे पञ्चाग्निहोमविधिर्नाम त्रयस्त्रिंशोऽध्यायः ॥



## चतुस्त्रिंशोऽध्यायः

---

ततः प्रभाते त्वाचार्यः स्थापकाद्या यथाविधि ।
स्नात्वा सन्ध्यामुपास्यैव तर्पयित्वा यथाक्रमम् ॥ १ ॥

ब्रह्मयज्ञं च कृत्वैव यज्ञशालां प्रविश्य च ।
शयानं देवमासाद्य प्रणम्यैवानुमान्य च ॥ २ ॥

ततः सुप्तं हरिं किञ्चिदोङ्कारेण प्रबोधयेत् ।
भूः प्रपद्य इति प्रोच्य देवदेवं प्रणम्य च ॥ ३ ॥

विष्णुसूक्तं समुच्चार्य देवमुत्थापयेत्पुनः ।
विमोच्य वस्त्रमाल्यादीन् पुनरन्यैर्विभूषयेत् ॥ ४ ॥

अथ रत्नानि चादाय धातुबीजादिभिः सह ।
पुष्पाञ्जनानि चादाय गर्भगेहं प्रविश्य च ॥ ५ ॥

... पीठस्य तन्मध्ये ब्रह्मस्थाने यथाक्रमम् ।
पञ्चविंशतिसंख्यानि पदानि परिकल्प्य च ॥ ६ ॥

स्नपनादिकं सर्वं तत्राप्यभिमन्त्रयेत् ।
ब्रह्ममध्ये तेनैव स्थापयेद्दैवमहस्तिनम् ॥ ७ ॥

शतधारेति मन्त्रेण सौवर्णं गरुडं तथा ।
ब्रह्मस्थाने ब्रह्ममणिं ब्रह्मदेवादिमुच्चरन् ॥ ८ ॥

इन्द्रं प्रणवमित्युक्त्वा देवेन्द्रं वज्रमुत्तमम् ।
अग्नावग्नेति चाग्नेय्यां मौक्तिकं प्रक्षिपेत्ततः ॥ ९ ॥

यमोदाधादिना याम्ये वैडूर्यं प्रक्षिपेद्गुरुः ।
वसवः प्रथमेत्युक्त्वा नैर्ऋत्यां शंखजं क्षिपेत् ॥ १० ॥

एते शतेति वारुण्यां कासीसमपि निक्षिपेत् ।
मरुतः परमात्मेति वायव्ये पुष्परागकम् ॥ ११ ॥

सोमं राजानमित्युक्त्वा चन्द्रकान्तं तु सौम्यके ।
ईशानेति च मन्त्रेण चैशान्ये नीलमुक्षिपेत् ॥ १२ ॥

श्रीरूपं च श्रियः स्थाने श्रिये जात इति ब्रुवन् ।
हरिणीं हरिणीस्थाने मेदिन्यादि समुच्चरन् ॥ १३ ॥

शं नो निधत्तामिति च वासुकेरमृताश्मकम् ।
धाता धातॄणामिति च साध्येभ्यो लोहिताश्मकम् ॥ १४ ॥

विश्वेदेवस्य नेत्युक्त्वा विश्वेभ्यश्चोत्पलं मणिम् ।
अधिब्रह्मायततेति सिद्धानां तु प्रवालकम् ॥ १५ ॥

इमां मूर्धन्यामित्युक्त्वा गन्धर्वेभ्यो मनःशिलाम् ।
अप्सरस्सु ब्रुवन्विद्वानप्सरेभ्योऽथ शुक्तिजम् ॥ १६ ॥

यं काद्रवेय इत्युक्त्वा नागेभ्यो विमलं ददेत् ।
अर्यमण इति मन्त्रेण अर्यम्णे कुरुविन्दकम् ॥ १७ ॥

तत्राण्येवेति च ददेद् भूतेभ्यो नीलमुत्पलम् ।
अमृताश्मानि रत्नानि मध्ये चान्तरदिक्षु वै ॥ १८ ॥

शं नो निधतामित्याद्यैर्मन्त्रैर्न्यसेत यथाक्रमम् ।
सौवर्णं गैरिकं चैव हरितालं मनःशिलाम् ॥ १९ ॥

अञ्जनं चैव श्यामाकं कासीसं पारदं तथा ।
सौराष्ट्रकं च संगृह्य शुद्धं गोरोचनं तथा ॥ २० ॥

पूर्वोक्तैरेव मन्त्रैस्तु वहिर्ब्रह्मादिषु न्यसेत् ।
सर्वगन्धयुतं बीजं पदे ब्राह्मे तु निक्षिपेत् ॥ २१ ॥

ऐन्द्रे तु षष्टिकान् व्रीहिमाषमुद्गकुलुत्थकान् ।
ततो गोधूममुद्गश्च तिलतिल्वैस्ततः परम् ॥ २२ ॥

यवद्वयं ततः पश्चान्नीवारैः सप्रियङ्गुभिः ।
सौम्ये तु मुद्गगोधूमानैशान्ये सर्वबीजकम् ॥ २३ ॥

पूर्वोक्तैरेव मन्त्रैश्च क्रमेणैतान् वहिर्न्यसेत् ।
श्रीवत्साद्यान् सुवर्णेन यथाशक्ति प्रकल्पितान् ॥ २४ ॥

ब्रह्मस्थानस्य परितो विन्यसेत्तान् क्रमेण तु ।
प्रयाग इति चोक्त्वा तु श्रीवत्सं चैन्द्रके न्यसेत् ॥ २५ ॥

आग्नेय्यां पूर्णकुम्भं तु नमः सुलोमीतिमन्त्रतः ।
याम्ये भेरीं न्यसेत्तत्र स एकोऽभूदिति क्रमात् ॥ २६ ॥

देवस्य त्वेति नैर्ऋत्यां न्यसेदादर्शनं बुधः ।
मत्स्ययुग्मं तु वारुण्यामतो देवादिमुच्चरन् ॥ २७ ॥

वायव्यामङ्कुशं न्यस्य क्ष्मामेकामिति मन्त्रतः ।
तन्मायशोऽग्र इत्युक्त्वा शङ्खं सौम्ये विनिक्षिपेत् ॥ २८ ॥

ब्रह्मा देवेति चैशान्ये चावर्तं विन्यसेद्बुधः ।
गदाचक्रासिशक्तीश्च शरं मध्ये च दक्षिणे ॥ २९ ॥

भूमाननोऽग्र इत्युक्त्वा प्रत्येकं च सुनिक्षिपेत् ।
वामभागे तथा शङ्खं शार्ङ्गखेटकमेव च ॥ ३० ॥

तन्मायशोऽग्र इत्युक्त्वा प्रत्येकं विन्यसेद्बुधः ।
ब्राह्मणानां हितार्थाय स्रुक्स्रुवादीनि निक्षिपेत् ॥ ३१ ॥

अन्येषामपि वर्णानां तत्तच्चिह्नानि निक्षिपेत् ।
श्रीरूपं च श्रियः स्थाने श्रिये जाते इति ब्रुवन् ॥ ३२ ॥

हरिणीं हरिणीस्थाने मेदिन्यादि समुच्चरन् ।
प्रजापतिमिति प्रोक्त्वा कूर्मरूपं हरिं क्षिपेत् ॥ ३३ ॥

यथाशक्ति सुवर्णेन सर्वाण्येतानि कल्पयेत् ।
अलाभे सर्वरत्नानां सुवर्णं तत्र दापयेत् ॥ ३४ ॥

अलाभे सर्वधातूनां पारदं तत्र निक्षिपेत् ।
अलाभे सर्वबीजानां यवं प्रतिनिधिं हरेत् ॥ ३५ ॥

क्षौमेणाच्छाद्य तच्छ्वभ्रं सुधया परिपूरयेत् ।
पीठे पुरातने पूर्वं रत्नादौ सुप्रतिष्ठिते ॥ ३६ ॥

तत्तद्रत्नादिकं बुध्वा मन्त्रांस्तान् समुदीर्य च ।
आपोहिष्ठेति तन्मन्त्रैः प्रोक्षयेच्च कुशोदकैः ॥ ३७ ॥

यावद्रत्नादिकं सर्वं तस्मिन् स्थाने न जीर्यते ।
कर्तुर्वंशस्य तत्स्थानं तावद्वृद्धिसमृद्धिदम् ॥ ३८ ॥

तस्मादाहृत्य रत्नादीन् विन्यसेदुक्तमार्गतः ।
ततस्तु पौण्डरीकाग्निं विसृजेद्विधिवद्बुधः ॥ ३९ ॥

सभ्यमग्निं सुसंरक्ष्य नित्यहोमाय विन्यसेत् ।
आलयाद्दक्षिणे पार्श्वे कुण्डमौपासनाग्निवत् ॥ ४० ॥

कुर्यान्महानसे वाथ नैमित्त्यं निर्ऋते तथा ।
कृत्वा तत्र निधायाग्निं नित्यहोमं समाचरेत् ॥ ४१ ॥

तमग्निं संप्रणीयैव देवस्योत्सवमाचरेत् ।
गृहीयात्सकलं वह्नेः प्रायश्चित्तादिकर्मसु ॥ ४२ ॥

आनीयाग्निं चोत्सवार्थं कुण्डे संस्थापयेत्पुनः ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे रत्नन्यासविधिर्नाम
चतुस्त्रिंशोऽध्यायः

## पञ्चत्रिंशोऽध्यायः

तत्काले यजमानश्च श्रद्धया देवसन्निधौ ।
यथोक्तमाचार्यादिभ्यो दक्षिणां सोदकां ददेत् ॥ १ ॥

त्रिविधा दक्षिणा प्रोक्ता चोत्तमा मध्यमाधमा ।
दातव्या पशुभूमिभ्यामाचार्यायोक्तदक्षिणा ॥ २ ॥

सुवर्णस्य चतुःषष्टिनिष्कं दद्याच्च सोदकम् ।
आचार्यदक्षिणा प्रोक्ता सोत्तमेति मनीषिभिः ॥ ३ ॥

द्विचत्वारिंशनिष्कं तु रुक्मं मध्यमदक्षिणा ।
एकविंशतिनिष्कं तु रुक्मं चाधमदक्षिणा ॥ ४ ॥

दक्षिणां दापयेत्तत्र ग्रामं च नगराणि च ।
वदन्ति केचिदप्येऽप्यन्यमार्गेण दक्षिणाम् ॥ ५ ॥

त्रिंशन्निष्कं चोत्तमं स्यान्मध्यमं विंशकं भवेत् ।
अधमं दशनिष्कं स्यादाचार्याय समर्पयेत् ॥ ६ ॥

तत्र यान्युपयुक्तानि रत्नं वा वस्त्रमेव वा ।
आचार्याय च दातव्यं तत्कर्मफलकांक्षिणा ॥ ७ ॥

नताननुमान्यैव शेषं कर्म समाचरेत् ।
आचार्यदक्षिणायास्तु चतुर्भागा तु या मता ॥ ८ ॥

स्थापकेभ्यश्च सा देया दक्षिणा तु पृथक् पृथक् ।
एकस्थापकलब्धा या सा सभ्याध्वर्युदक्षिणा ॥ ८ ॥

होतुश्च पौण्डरीकाग्नेरध्वर्योरपि तत्समा ।
तदर्धमाहवनीयादेरध्वर्यूणां पृथक् पृथक् ॥ ९ ॥

तदर्धं संमिता ज्ञेया दक्षिणान्यपदार्थिनाम् ।
गुरोरप्यधिकं वापि समं वा न्यूनमेव वा ॥ १० ॥

उपद्रष्ट्रे सदस्येभ्यो निश्चितां दक्षिणां ददेत् ।
निष्काधिकं सुवर्णं वा यज्ञकर्मणि दक्षिणा ॥ ११ ॥

यज्ञस्य दक्षिणा जीवः फलवन्तं विदुर्बुधाः ।
विष्णुयागो द्विजातीनां विशिष्ट इति कथ्यते ॥ १२ ॥

तस्मात्तु विष्णुयागस्य यजमानो भवेद्बुधः ।
तत्काले दक्षिणां दत्त्वा भूषणैरपि भूषयेत् ॥ १३ ॥

कटकाङ्गुलिकाद्यैश्च वस्त्रैर्वा स्वस्वशक्तितः ।
आचार्यं पूजयित्वैव यजमानश्च दैववत् ॥ १४ ॥

नत्वा तमनुमान्यैव शेषं कर्म समाचरेत् ।
समर्थश्चोत्तमं कर्तुं न कुर्यान्मध्यमाधमौ ॥ १५ ॥

यदि कुर्यात्फलं तस्य न लभेत न संशयः ।
अधमश्चोत्तमो यः स्यादशक्तश्चाधमेऽपि नत् ॥ १६ ॥

फलं भवत्यसन्देहस्तस्माच्छक्तिं न वञ्चयेत् ।
यज्ञकर्मणि मूढात्मा दक्षिणां न ददेद्यदि ॥ १७ ॥

तेषां पदार्थिनामेव तत्फलं स्यान्न संशयः ।
हन्त्यल्पदक्षिणो यज्ञो यजमानं विशेषतः ॥ १८ ॥

यज्ञेऽस्मिन् विधिवद्दत्तं भूषणादिपरिच्छदम् ।
उपयोगार्हवस्त्राणि रुक्ममुख्यानि मुख्यतः ॥ १९ ॥

आचार्यायैव दातव्यं तत्सर्वं फलकांक्षिणा ।
ततो मुहूर्ते संप्राप्ते यजमानसमन्वितः ॥ २० ॥

आचार्यश्च प्रसन्नात्मा ऋत्विग्भिः स्थापकैः सह ।
भूः प्रपद्य इति प्रोक्त्वा कुसुमाञ्जलिमुत्सृजेत् ॥ २१ ॥

क्षमस्व देवदेवेति प्रणम्यैवानुमान्य च ।
सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतम् ॥ २२ ॥

नृत्तगेयसमायुक्तं छत्रचामरसंयुतम् ।
ब्रह्मघोषसमायुक्तं शाकुनं सूक्तमुच्चरन् ॥ २३ ॥

तोयधारासमायुक्तं पुष्पवृष्टिसमन्वितम् ।
कुम्भं संगृह्य शिरसा धारयन्नग्रतो व्रजेत् ॥ २४ ॥

स्थापका देवमादाय गच्छेयुस्तदनन्तरम् ।
प्रदक्षिणं ततः कृत्वा देवागारं प्रविश्य वै ॥ २५ ॥

पूर्णकुम्भं न्यसेदत्र देवदक्षिणपार्श्वतः ।
आत्मसूक्तं जपित्वैव देवं ध्यायन् तथैव च ॥ २६ ॥

भक्तियुक्ताः प्रसन्नाश्च पूर्वोक्ताः स्थापकाः क्रमात् ।
प्रतद्विष्णुस्तवत इति ब्रह्मस्थाने च कौतुकम् ॥ २७ ॥

पार्श्वयोरुभयोर्देव्यौ दक्षिणे स्नापनं ततः ।
औत्सवं चोत्तरे पार्श्वे स्थापयेयुश्च भक्तितः ॥ २८ ॥

ध्यायन्तो देवदेवेशं तथा पुरुषसूक्तकम् ।
एकाक्षरादिसूक्तं च विष्णुसूक्तं च वैष्णवम् ॥ २९ ॥

देवपादस्पृशो भूत्वा जपेयुर्ध्यानसंयुताः ।
ध्रुवस्य दक्षिणे पार्श्वे स्थित्वा चोदङ्मुखो गुरुः ॥ ३० ॥

आत्मसूक्तं च शान्तिं च जपेत्सम्यक् समाहितः ।
देवदेवं तथा ध्यायन् प्रसन्नो भक्तिसंयुतः ॥ ३१ ॥

ध्रुवस्य पादौ स्पृष्ट्वा च ध्रुवसूक्तं तथैव च ।
एकाक्षरादिसूक्तं च पुरुषसूक्तं च वैष्णवम् ॥ ३२ ॥

विष्णुसूक्तं जपेत् ध्यायन् परमात्मानमव्ययम् ।
भूर्भुवः सुवरित्युक्त्वा मूर्ध्नि नाभौ च पादयोः ॥ ३३ ॥

करेणैव तु संस्पृश्य संन्यसेदक्षरान् क्रमात् ।
तत्पीठे पादयोर्मध्ये यकारं संन्यसेत्पुनः ॥ ३४ ॥

सुवर्णवर्णमाद्यन्तं सर्वकारणमव्ययम् ।
हृदये परमं बीजं संन्यसेत् ध्यानसंयुतः ॥ ३५ ॥

प्रणवैर्वेष्टयित्वा च जपेदेकाक्षरादिकम् ।
इदं विष्णुरिति प्रोच्य कुम्भस्थं शक्तिसंयुतम् ॥ ३६ ॥

कूर्चेनादाय तत्तोयमायातु भगवानिति ।
विष्णुमावाहयामीति स्रावयेद्बिम्बमूर्धनि ॥ ३७ ॥

आवाहयेच्चतुर्भिश्च नामभिः पुरुषादिकैः ।
एवमावाहनं कुर्याद् ध्रुवबेरे तु पूर्वतः ॥ ३८ ॥

बेरं मन्त्रैर्विधानेन भक्त्या चावाहने कृते ।
भक्तानुकम्पया देवो बिम्बं व्याप्यैव तिष्ठति ॥ ३९ ॥

अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ।
इत्येवं श्रुतिराहेति वदन्ति मुनिसत्तमाः ॥ ४० ॥

श्रीकारं तु श्रियो मह्या लकारं हृदये न्यसेत् ।
दक्षिणे तु श्रियं देवीं महीं वामे समाह्वयेत् ॥ ४१ ॥

संयुक्तमेतदित्युक्त्वा न्यसेत्सम्बन्धकूर्चकम् ।
पूर्वोक्ताक्षरविन्यासं कुर्याद्वै कौतुकादिषु ॥ ४२ ॥

ध्रुवबेरात्तथा शक्तिं दीपाद्दीपमिव क्रमात् ।
ध्यात्वैव कौतुके बिम्बे स्नापने चौत्सवे तथा ॥ ४३ ॥

ध्रुवबेरात्तथा शक्तिं ध्यायन्नावाहयेत्क्रमात् ।
प्रतद्विष्णुः स्तवत इति चास्त्रासनमुदीरयन् ॥ ४४ ॥

पुष्पदर्भकुशेष्वेकं पीठान्ते त्वासनं ददेत् ।
विश्वाधिकानामित्युक्त्वा स्वागतं च वदेद्बुधः ॥ ४५ ॥

यथैव गार्हपत्याग्नेरन्वाहार्यः प्रणीयते ।
तस्मादावाहनीयेऽपि नित्यमग्निः प्रणीयते ॥ ४६ ॥

तथैव ध्रुवबेराद्वै कौतुके स्नपने तथा ।
औत्सवे च तथा बिम्बे नित्यमावाह्य चार्चयेत् ॥ ४७ ॥

उभये भित्तिपार्श्वे च ब्रह्मेशौ च समाह्वयेत् ।
पुराणस्य भृगोश्चापि धातादीनां यथाक्रमम् ॥ ४८ ॥

मणिकस्यापि सन्ध्यायास्तापसस्य तथैव च ।
तपोयुक्तस्य च तथा श्रीभूतस्य ततः परम् ॥ ४९ ॥

गरुडस्य च शान्तस्य न्यक्षादीनां यथाक्रमम् ।
इन्द्रादिलोकपालानां चक्रादीनां यथा क्रमात् ॥ ५० ॥

महाभूतस्यापि तथा क्रमेणावाहनं चरेत् ।
एतेषां तु पृथक्कुम्भे बिम्बे हीने तु तत्परः ॥ ५१ ॥

तत्काले देवकुम्भं तं नीत्वा ध्यात्वा च तत्र तान् ।
तत्कुम्भस्थजलेनैव ध्यात्वाथावाहयेदिमान् ॥ ५२ ॥

सर्वेषां परिवाराणां हीने बिम्बे च कौतुके ।
ध्रुवबेरं प्रतिष्ठाप्य पूर्वपीठे समर्चयेत् ॥ ५३ ॥

ध्रुवबेरेऽपि हीने तु पीठे वा केवलेऽर्चयेत् ।
आचार्यः स्थापकाद्यैश्च सहितः सुसमाहितः ॥ ५४ ॥

पुण्याहं वाचयित्वैव ब्रह्मघोषं च कारयेत् ।
सर्वान् कुंभस्थरत्नादीनाचार्याय ददेन्मुदा ॥ ५५ ॥

तत्कुम्भस्थजलेनैव यः स्नायाद्भक्तिमान् नरः ।
आत्मानं प्रोक्षयेद्यो वा सर्वपापैः प्रमुच्यते ॥ ५६ ॥

सर्वदोषप्रशमनं सर्वकामाभिवृद्धिदम् ।
एतस्माद्धि समं तीर्थं न भूतं न भविष्यति ॥ ५७ ॥

नित्यार्चनाविधानेन भक्तियुक्तोऽर्चयेत्क्रमात् ।
पायसाद्यैर्हविर्भिश्च निवेद्य च पुनः पुनः ॥ ५८ ॥

विधिना बलिमभ्यर्च्य कारयेत्तत्प्रदक्षिणम् ।
तद्दिने चोत्सवस्यापि सायं घोषणमाचरेत् ॥ ५९ ॥

तद्दिनेऽर्चां समारभ्य यजमानस्य शक्तितः ।
उत्सवं कारयेद्विष्णोरुत्सवोक्तविधानतः ॥ ६० ॥

अशक्ता विधिना रात्रौ कलशैः स्नापयेत्क्रमात् ।
प्रतिष्ठान्तं प्रभृत्यैव नित्यं सम्यग्विधानतः ॥ ६१ ॥

नित्यार्चनमविच्छिन्नं हविषां च निवेदनम् ।
भक्त्या प्रयत्नतः शक्त्या श्रद्धायुक्तश्च कारयेत् ॥ ६२ ॥

अन्यथा यजमानश्च ग्रामश्चापि विनश्यति ।
अर्चनाच्च हविर्दानाद्गच्छेद्विष्णोः परं पदम् ॥ ६३ ॥

सर्वेषामेव देवानां प्रतिष्ठाविधिरेष वै ।
कल्पः साधारणः प्रोक्तो मन्त्र एव विशिष्यते ॥ ६४ ॥

मूर्तिमन्त्रप्रभेदैश्च मन्त्रैस्तद्दैवतैरपि ।
अर्हानर्हौ विचिन्त्यैव योजयेत्सर्वकर्मसु ॥ ६५ ॥

विधिनैव प्रतिष्ठां यो भक्त्या विष्णोस्तु कारयेत् ।
तस्य कायकृतं पापं तत्क्षणादेव नश्यति ॥ ६६ ॥

यद्यत्कामयते सर्वं लभत्येव न संशयः ।
पूर्वजातगतास्तस्य पितरः प्रपितामहाः ॥ ६७ ॥

मातृपक्षे च ये जातास्तस्य मातामहादयः ।
तस्य पुत्रपौत्राद्या जाताश्चैवैकविंशतिः ॥ ६८ ॥

सर्वे ते च गतिं यान्ति स्वयं पूर्वैः परैः सह ।
स्वर्गे सम्यग्विहृत्यैव यावदिन्द्रालयं ततः ॥ ६९ ॥

पुनः प्राप्य हरेर्लोकं विष्णुभूतसमन्वितम् ।
सुविहृत्य यथाकामं यावदाभूतसंप्लवम् ॥ ७० ॥

भूतानामपि नाशे तु विष्णोः सायुज्यमाप्नुयात् ।
आयुरारोग्यतानृण्यधनधान्यसमृद्धिदम् ॥ ७१ ॥

यजमाने मृतेऽप्येवं समूर्तं भुवि तिष्ठति ।
यः सम्यक् पालयेदेतदधिकं यश्च कारयेत् ॥ ७२ ॥

ब्राह्मणो यजमानश्चेत्तस्य कायकृतं क्षणात् ।
पापं सर्वं विनश्यैव सर्वयज्ञफलं लभेत् ॥ ७३ ॥

क्षत्रियो विजयं कीर्तिं धनधान्यादिसंपदः ।
सागरान्तां महीं प्राप्य चक्रवर्ती भवेत्ततः ॥ ७४ ॥

सर्वक्षत्राभिवन्द्यश्च विष्णुसारूप्यमाप्नुयात् ।
वैश्यस्तु धनधान्यार्थी तेजस्वी पशुवर्धनः ॥ ७५ ॥

पुत्रवान् पशुमान् भूत्वा विष्णुसालोक्यमाप्नुयात् ।
शूद्रोऽपि तत्कुलश्रेष्ठः प्रजावान् ज्ञानवान् भवेत् ॥ ७६ ॥

इहलोकमवाप्यैव विष्णुलोकं स गच्छति ।
तद्ग्रामयजमानस्य राज्ञो राष्ट्रस्य शान्तिदम् ॥ ७७ ॥

आद्येष्टकादिकर्तापि लभते मौलिकं फलम् ।
अवतारांश्च भक्त्या तु कारयित्वा विधानतः ॥ ७८ ॥

प्रथमावरणे तत्र यथाशक्ति यथेप्सितम् ।
प्रतिष्ठाप्य विधानेन कारयेदर्चनं बुधः ॥ ७९ ॥

यदिच्छेद्दक्षिणे रामं सीतालक्ष्मणसंयुतम् ।
यमपावकयोर्मध्ये प्रतिष्ठाप्यथवाऽर्चयेत् ॥ ८० ॥

कुबेरेशानयोर्मध्ये विधिना कृष्णमेव च ।
रुक्मिणीसत्यभामाभ्यां प्रतिष्ठाप्यथवार्चयेत् ॥ ८१ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे आचार्यदक्षिणादिविधिर्नाम

पञ्चत्रिंशोऽध्यायः ॥

---

# षट्त्रिंशोऽध्यायः



अतः परं प्रवक्ष्यामि मूर्तिमन्त्रक्रमं बुधाः ।
होमं ह्यावाहनं चैव अर्चनादीन् समाचरेत् ॥ १ ॥

मूर्तिमन्त्रानिति प्राहुर्नाममन्त्रान् मनीषिणः ।
नारायणः परं ब्रह्म परमात्मेति कीर्त्यते ॥ २ ॥

तद्रूपं यत्परं सूक्ष्ममक्षरं निष्कलं च यत् ।
तत्स्थानीयं ध्रुवं बेरं ध्रुवरूपं ध्रुवस्य वै ॥ ३ ॥

आसनाद्युपचारैश्च तदर्चनमुदाहृतम् ।
त्रिकालं पादयोस्तस्य पुष्पन्यासं समाचरेत् ॥ ४ ॥

येनैव पुष्पन्यासेन ध्रुवबेरार्चनं भवेत् ।
विष्णोर्यत्सकलं रूपं स्थूलं सर्वस्य कारणम् ॥ ५ ॥

तत्स्थानीयमिति प्रोक्तं कौतुकं तेन नित्यशः ।
आसनाद्युपचारैस्तैः कौतुकं सम्यगर्चयेत् ॥ ६ ॥

चातुर्वर्ण्यसमृद्ध्यर्थं चतस्रः पुरुषादिकाः ।
आद्या मूर्तियुतास्त्वेता मूर्तयः पञ्च च स्मृताः ॥ ७ ॥

स्थानके चासने वापि शयने च तथैव च ।
विष्णुं च पुरुषं सत्यमच्युतं चानिरुद्धकम् ॥ ८ ॥

पञ्चमूर्तीयमन्त्रैश्च देवमावाह्य चार्चयेत् ।
अथवा शयने विष्णुमनन्तशयनं स्थिति ॥ ९ ॥

अनादिनिधनं चेति चात्यन्ताद्भुतमित्यपि ।
अमितं महिमानं तमित्युक्त्वा देवमर्चयेत् ॥ १० ॥

चतुर्भिर्मूर्तिमन्त्रैश्च चातुर्वर्ण्यसमृद्धये ।
आवाहनं च देवानामर्चनं च समाचरेत् ॥ ११ ॥

श्रियं धृतिं पवित्रीं च प्रमोदाधायिनीं श्रियम् ।
हरिणीं पौष्णीं क्षोणीं च महीमिति महीमपि ॥ १२ ॥

ब्रह्माणं च प्रजापतिं पितामहमिति क्रमात् ।
हिरण्यगर्भमित्युक्त्वा ब्रह्माणं रुद्रमेव च ॥ १३ ॥

उमापतिं गोपतिं च शर्वमित्येव शङ्करम् ।
मार्कण्डेयं च पुण्यं च पुराणममितं क्रमात् ॥ १४ ॥

मार्कण्डेयमथावाह्य पद्मापितरमित्यापि ।
धातृनाथं च ख्यातीशं भृगुं चेति भृगुं तथा ॥ १५ ॥

धातारं डम्बिनं चेति सनिलं गह्वरं पुनः ।
धातारं च विधातारं कीनाशमिति च ब्रुवन् ॥ १६ ॥

मुरुण्डं स्वर्णमित्युक्त्वा विधातारं समाह्वयेत् ।
भृतिं भुवङ्गमुत्सङ्गं पीठं चेति भृतिं पुनः ॥ १७ ॥

पतङ्गं मुद्गरं चेति चावदानं कपर्दिनम् ।
पतङ्गं च समावाह्य पतिरं बल्दिं तथा ॥ १८ ॥

मध्यगं वङ्कणं चेति पतिरं वरुणं पुनः ।
तेजिनं दंशिनं चेति तरस्विनमुदीरयन् ॥ १९ ॥

वरुणं मणिकं चेति महाबलमिति क्रमात् ।
विमलं द्वारपालं च मणिकं च समाह्वयेत् ॥ २० ॥

सन्ध्यां प्रभावतीं चेति ज्योतीरूपां दृढव्रताम् ।
सन्ध्यां च तापसं चेति सिद्धिराजानमित्यपि ॥ २१ ॥

सर्वदोषविनिर्मुक्तं सहस्रं मेधिनं पुनः ।
इति तापसमावाह्य वैखानसमतः परम् ॥ २२ ॥

तपोयुक्तं सिद्धिदं च सर्वदर्शनमित्यपि ।
ज्ञानात्मं समावाह्य किष्किन्धं बहुमर्दनम् ॥ २३ ॥

बहुसेनमितीत्युक्त्वा दृढव्रतमुदीरयन् ।
तीर्थमुद्ग्राहकं चैव सर्वयोग्यमुदाहृतम् ॥ २४ ॥

तपोयुक्तं समावाह्य श्रीभूतं श्वेतवर्णकम् ।
वैष्णवं मुखपालं च श्रीभूतं सम्यगाह्वयेत् ॥ २५ ॥

इन्द्रं शचीपतिं चैव पुरुहूतं पुरन्दरम् ।
इन्द्रमावाह्येदग्निं जातवेदसमित्यपि ॥ २६ ॥

हुताशनं पावकं चेत्यग्निहोत्रं यमं ततः ।
धर्मराजं तु प्रेतेशं मध्यस्थमिति तं यमम् ॥ २७ ॥

आरम्भाधिपतिं चेति नीलं निरृतिं तथा ।
सर्वरक्षोऽधिपं चेति निर्ऋतिं च समाह्वयेत् ॥ २८ ॥

वरुणं प्रचेतसं चेति रक्ताम्बरमिति क्रमात् ।
यादसांपतिं चेत्युक्त्वा तु वरुणं जवनं तथा ॥ २९ ॥

भूतात्मकं तथा वायुमुदानमिति नामभिः ।
तथा वायुं समावाह्य कुबेरं धन्यमित्यपि ॥ ३० ॥

पौलस्त्यं यक्षराजं च कुबेरमपि चाह्वयेत् ।
ईशानमीश्वरं चेति देवं च भवमित्यपि ॥ ३१ ॥

ईशानं च तथादित्यं भास्करं सूर्यमेव च ।
मार्ताण्डं च विवस्वन्तमित्यादित्यं समाह्वयेत् ॥ ३२ ॥

अङ्गारकं च वक्रं च रक्तं चेति धरासुतम् ।
इति भौमं सूर्यपुत्रं मन्दं रैवत्यमित्यपि ॥ ३३ ॥

शनैश्चरमिति प्रोच्य सूर्यपुत्रं समाह्वयेत् ।
पीतवर्णं गुरुं तिष्यं बृहस्पतिमितीरयन् ॥ ३४ ॥

बृहस्पतिं समावाह्य बुधं श्यामं तथैव च ।
सौम्यं श्रविष्ठजं चेति बुधमावाहयेत्ततः ॥ ३५ ॥

शुक्रं च भार्गवं काव्यं परिसर्पिणमित्यपि ।
शुक्रं चैभिस्तथावाह्य नलिनीं जाह्नवीं तथा ॥ ३६ ॥

गङ्गां लोकपावनीं चेति गङ्गामावाहयेत्तथा ।
वसिष्ठं सोमं यज्ञाङ्गमिन्दुं चन्द्रमितीरयन् ॥ ३७ ॥

तथा चन्द्रं समावाह्य भवं शर्वं तथैव च ।
ईशानं पशुपतिं चेति रुद्रमुग्रं तथैव च ॥ ३८ ॥

भीमं महादेवमिति रुद्रमष्टभिराह्वयेत् ।
जगद्भुवं यजद्भुवं विश्वभुवं रुद्रभुवम् ॥ ३९ ॥

ब्रह्मभुवं भुवद्भुवमिति षड्भिर्गुहं तथा ।
पुरुषं च तथा सत्यमच्युतं चानिरुद्धकम् ॥ ४० ॥

आवाहयेच्च पुरुषं चतुर्भिर्मूर्तिभिः क्रमात् ।
धात्रीं महोदरीं रौद्रीं महाकालीं महोदरीम् ॥ ४१ ॥

तांभूज्येष्ठायनीं चेति भुवज्येष्ठायनीमिति ।
सुवज्येष्ठायनीं चेति कलिराजायनीमिति ॥ ४२ ॥

कलिपत्नीमिति प्रोच्य ज्येष्ठां पञ्चभिराह्वयेत् ।
दुर्गां कात्यायनीं चेति वैष्णवीं विन्ध्यवासिनीम् ॥ ४३ ॥

एतैरेव चतुर्भिश्च दुर्गामावाहयेत्पुनः ।
कुण्ठिनीं नन्दिनीं चेति धरित्रीं रजतप्रियाम् ॥ ४४ ॥

इत्येवं कुण्ठिनीं पश्चाद्ग्रन्थिनीं वेगिनीमिति ।
प्रजां प्रवाहिनीं चेति ग्रन्थिनीं च समाह्वयेत् ॥ ४५ ॥

कृच्छ्रिणीं शङ्खिनीं चेति वाहिनीं योक्त्रिणीमिति ।
कृच्छ्रिणीं च समावाह्य कुशिनीं दंशिनीमिति ॥ ४६ ॥

छर्दिनीं वाहिनीं चेति कुण्ठिनीं च विकारिणीम् ।
दामिनीं विसिनीं चेति वैद्युतीं चैव विद्युतम् ॥ ४७ ॥

दद्रुणीं चेतीन्दुकरां सौमनस्कां प्रविद्युताम् ।
आवाहयेद् दद्रुणीमिन्द्रियविकारिणीं ततः ॥ ४८ ॥

अर्वतीं गङ्गां वार्णीं च सृजन्तीमिति चार्वतीम् ।
भृगोस्तु पूर्वमेवोक्तं सम्भृतीशं ततः परम् ॥ ४९ ॥

मरीचमर्चिष्मन्तं च पौर्णमासभृतं त्विति ।
मरीचं च समावाह्य क्षमाधवमिति क्रमात् ॥ ५० ॥

पुलहं कर्दमार्यं च महाधृतिमितीरयन् ।
पुलहं च पुलस्त्यं च प्रीतिभर्तारमेव च ॥ ५१ ॥

सङ्गीरं दान्तनीराध्यं पुलस्त्यं चेति चाह्वयेत् ।
चिद्घनं निष्कलूनुं च सन्नतीशं क्रमान्वितम् ॥ ५२ ॥

क्रतुमूर्जापतिं चेति राजपूर्वं तथैव च ।
वसिष्ठं वाक्पतिं चेति वसिष्ठं सम्यगाह्वयेत् ॥ ५३ ॥

अत्रिं नियामकं चेति सत्यनेत्रं गुरुं तथा ।
अनसूयापतिं चात्रिं गविष्ठं त्रैष्टुभं पुनः ॥ ५४ ॥

अभ्यमाकाशमित्युक्त्वा गविष्ठं चाशुमित्यपि ।
समीरणं तथा वायुं पृषदश्वमितीरयन् ॥ ५५ ॥

वायुं च वीतिहोत्रं तु हिरण्यं शुद्धमेव च ।
अग्निं चेत्येव भूताग्निं पवित्रममृतं त्विति ॥ ५६ ॥

तोयं गह्वरमित्युक्त्वा तोयं चैव यथाक्रमम् ।
पूर्वोक्तैर्मूर्तिमन्त्रैस्तु महीमावाहयेत्पुनः ॥ ५७ ॥

तथापि सिद्धिं विश्वां च भृगुपत्नीं सरस्वतीम् ।
एभिः सरस्वतीं चापि श्रियं पूर्वोक्तमूर्तिभिः ॥ ५८ ॥

आवाहयेद्यथाप्रोक्तं न्यक्षं चैव दधीत्यकम् ।
पीवरं चार्यकं चेति न्यक्षं चैभिः समाह्वयेत् ॥ ५९ ॥

विवस्वन्तं च भरतं विश्वकर्माणमित्यपि ।
मरीचिमन्तमित्युक्त्वा विवस्वन्तं तथैव च ॥ ६० ॥

मित्रं चेति त्वरं चेति राजिष्मन्तं तथा पुनः ।
रमणं कद्रुवं मित्रं क्षत्तारं वै महीधरम् ॥ ६१ ॥

ऊर्ध्वरोमं च शेवधिं क्षत्तारं पुनराह्वयेत् ।
हवीरक्षकमाग्नेयं शैलूषं पचनं त्विति ॥ ६२ ॥

हवीरक्षकमावाह्य सर्वेश्वरमथाह्वयेत् ।
जगन्नाथं च चामुण्डं सर्वतश्चरमित्यपि ॥ ६३ ॥

ब्राह्मणीं पिङ्गलां चेति गौरीं वै सर्वतोमुखीम् ।
शर्वप्रियां विश्वरूपामुग्रां चेति गणेश्वरीम् ॥ ६४ ॥

वैशाखिनीं डम्बिनीं च गायत्रीं षण्मुखीमपि ।
विश्वगर्भां विपोर्मिणीं कृष्णाभां रोहिणीमिति ॥ ६५ ॥

वाराहीं वरदामुर्वीं वज्रदंष्ट्रीमिति क्रमात् ।
जयन्तीं कौशिकीं चेति तथेन्द्राणीं घनाघनीम् ॥ ६६ ॥

कालीं नालीकदंष्ट्रीं च विप्रहां वेदधारिणीम् ।
ब्राह्मण्याद्या सप्तमातॄश्चतुर्मूर्तिभिराह्वयेत् ॥ ६७ ॥

पुष्पपालं च हारीतं चाधिवासं च फुल्लकम् ।
पुष्परक्षकमावाह्य बलिरक्षकमित्यपि ॥ ६८ ॥

दण्डं च सर्वेजं चेति समं च बलिरक्षकम् ।
विष्वक्सेनं च शान्तं च हरं चैवामितं त्विति ॥ ६९ ॥

विष्वक्सेनं समावाह्य श्रीभूतं श्वेतवर्णकम् ।
विष्वक्सेनं च गरुडं पक्षिराजं सुपर्णकम् ॥ ७० ॥

खगाधिपं समुच्चार्य गरुडं च समाह्वयेत् ।
वक्रतुण्डं चैकदंष्ट्रं विकटं च विनायकम् ॥ ७१ ॥

एतैस्तु वक्रतुण्डं च नागराजमतः परम् ।
सहस्रशीर्षं चानन्तं शेषं चेति च नागपम् ॥ ७२ ॥

सुदर्शनं च चक्रं च सहस्रविकचं तथा ।
अनपायिनमित्युक्त्वा सुदर्शनमथाह्वयेत् ॥ ७३ ॥

जयमत्युच्छ्रितं धन्यं ध्वजं चेति ध्वजं पुनः ।
पाञ्चजन्यं च शङ्खं च कम्बुं विष्णुप्रियं तथा ॥ ७४ ॥

शङ्खं यूथाधिपं चेति नित्यमुग्रं तथैव च ।
महाभूतं समुच्चार्य महाभूतं ततः परम् ॥ ७५ ॥

पार्क्योर्जुनं च हस्ताब्जमक्षहन्तारमित्यपि ।
विष्णुभूतयुतं चेति विष्णुभूतं समाह्वयेत् ॥ ७६ ॥

शयनं चेदनन्तस्य पूर्वमावाह्य तत्परम् ।
देवदेवं समावाह्य ब्रह्माणं नाभिपद्मजम् ॥ ७७ ॥

चक्रादीनायुधान् पञ्च तत्तन्मूर्तिभिराह्वयेत् ।
एवं देवान् समावाह्य निरूप्याज्यं जुहोति च ॥ ७८ ॥

मूर्तिभिश्चैभिर्देवानां तेषामर्चनमाचरेत् ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे मूर्तिमन्त्रविधानं नाम षट्त्रिंशोऽध्यायः ॥

---

## सप्तत्रिंशोऽध्यायः

---

अतः परं प्रवक्ष्यामि पञ्चमूर्तिविधिक्रमम् ।
मध्ये प्रागादिषु तथा पृथक् संकल्पकल्पिताः ॥ १ ॥

विष्णुं च पुरुषं सत्यमच्युतं चानिरुद्धकम् ।
विष्ण्वादिमूर्तयस्त्वेताः पञ्चमूर्तय ईरिताः ॥ २ ॥

धर्मो ज्ञानं तथैश्वर्यं वैराग्यमिति तद्गुणाः ।
आदिमूर्तेस्तु भिन्नास्ता मूर्तयोऽन्याश्चतद्गुणाः ॥ ३ ॥

विष्णोरेवादिमूर्तेस्तु चतस्रः पुरुषादिकाः ।
ऋग्यजुःसामाथर्वाणो वेदाश्चत्वार एव च ॥ ४ ॥

ब्रह्मक्षत्रियविट्छूद्रवृद्धिदा मूर्तयस्त्विमाः ।
भूर्भुवःसुवर्महश्चेति लोकाश्चत्वार एव ते ॥ ५ ॥

कृतत्रेताद्वापराश्च कलिश्चेति युगाः क्रमात् ।
एवं चतुर्धा संभिन्ना मूर्तयः पुरुषादिकाः ॥ ६ ॥

पञ्चानां स्थापनं नित्यं शान्तिपुष्टिसुखप्रदम् ।
वर्षदं सर्वलोकानां चातुर्वर्ण्यसमृद्धिदम् ॥ ७ ॥

चतुराश्रमिणां चापि सिद्धिदं चेति कीर्तितम् ।
पञ्चाग्नीनां यथाधानं पञ्चमूर्तिक्रमस्तथा ॥ ८ ॥

नलीनके तथाष्टाङ्के नन्द्यावर्ते चतुर्मुखे ।
सर्वतोभद्रके वाथ श्रीप्रतिष्ठितके तथा ॥ ९ ॥

बृहद्वृत्तविमाने वा यजमानसमीप्सिते ।
स्थापयेद्देवदेवं तु पञ्चमूर्तिविधानतः ॥ १० ॥

शिल्पशास्त्रोक्तमार्गेण विमानं परिकल्पयेत् ।
आदौ भूखननं कुर्याद्विमानस्य तु मध्यमम् ॥ ११ ॥

प्राच्यां पुरुषमूर्तिस्तु सत्यमूर्तिस्तु दक्षिणे ।
पश्चिमेऽच्युतमूर्तिः स्यादनिरुद्धस्तथोत्तरे ॥ १२ ॥

पुरुषादीनां चतुर्दिक्षु चतुर्गर्भगृहाणि च ।
मध्ये तले द्वितीये तु विष्णोर्गर्भालयं भवेत् ॥ १३ ॥

तृतीये तु तले तल शयानस्य हरेर्भवेत् ।
तलेऽथवा द्वितीये तु नारसिंहं प्रकल्पयेत् ॥ १४ ॥

तृतीये तु तले विष्णुमादिमूर्तिं प्रकल्पयेत् ।
एवं तत्त्रितलैर्युक्तं कुर्यात्सोपानसंयुतम् ॥ १५ ॥

चतुर्दिङ्मुखसंयुक्तं षड्गर्भालयसंयुतम् ।
मुखमण्डपसंयुक्तं चतुर्दिक्षु तथैव च ॥ १६ ॥

शिल्पशास्त्रविधानेन विमानं कारयेद्बुधः ।
तलासीनान् स्थितान् वाथ देवानेतांश्च कारयेत् ॥ १७ ॥

प्राच्यां पुरुषमूर्तिं च श्वेताभं च यथाविधि ।
तस्य दक्षिणतो देवीं श्रियं रक्तां सुलोचनाम् ॥ १८ ॥

वामे च हरिणीं देवीं श्यामवर्णां च कारयेत् ।
प्रवाळाभं भृगुं तद्वत्पुराणं चार्चकं सितम् ॥ १९ ॥

व्याजिनीं च सुरां रक्तां सुन्दरीं कनकप्रभाम् ।
श्वेतं शङ्खनिधिं कुर्याद्दक्षिणे द्वारपालकम् ॥ २० ॥

तथा पद्मनिधिं चापि रक्ताभं वामभागतः ।
सावित्रीं चैव गायत्रीं कल्पयेद्भित्तिपार्श्वयोः ॥ २१ ॥

दक्षिणे त्वञ्जनाभं च सत्यं वै दक्षिणामुखम् ।
तस्य दक्षिणतो देवीं पवित्रीं रक्तसन्निभाम् ॥ २२ ॥

पौष्णीं श्यामां तथा देवीं कारयेद्वामतः क्रमात् ।
धातृनाथं सुवर्णाभं श्यामं तद्वच्चिरायुषम् ॥ २३ ॥

व्याजिनीं च जयां श्यामां रक्तां भद्रां च कारयेत् ।
द्वारस्य दक्षिणे शङ्खं शङ्खाभं शङ्खचूळिनम् ॥ २४ ॥

वामभागे च चक्रं च रक्ताभं चक्रचूळिनम् ।
पश्चिमे च सुवर्णाभमच्युतं पश्चिमामुखम् ॥ २५ ॥

तस्य दक्षिणतो देवीं पवित्रीं रुक्मसन्निभाम् ।
वामे क्षोणीं च शुक्लाभां श्यामां वै पूरकारिणीम् ॥ २६ ॥

श्वेतं पुण्यं मुनिं चैव व्याजिनीं विजयां तथा ।
रक्तां विन्दां तथा श्यामां पूजनीं कारयेद्बुधः ॥ २७ ॥

तत्र शङ्खनिधिं कुर्यात्पूर्ववत् द्वारदक्षिणे ।
तथा पद्मनिधिं वामे द्वारपालं च कारयेत् ॥ २८ ॥

उत्तरे तु प्रवालाभिसन्निभं चानिरुद्धकम् ।
अनन्तोत्सङ्ग आसीनं वीरासनविधानतः ॥ २९ ॥

उत्तराभिमुखं नागफणैः संछन्नमौलिनम् ।
कारयेत्तदनन्तस्य फणाः सप्ताऽथ पञ्च वा ॥ ३० ॥

प्रमोदाधायिनीं देवीं प्रवालाभां च दक्षिणे ।
श्यमां वामे महीं देवीं भृगुं कनकसन्निभम् ॥ ३१ ॥

श्वेताभमसितं चापि व्याजिनीं च कुमुद्वतीम् ।
तथैवोत्पलकं चैव कारयेत विधानतः ॥ ३२ ॥

पूर्ववच्छङ्खचूलिं च चक्रचूलिं यथाक्रमम् ।
द्वारस्य दक्षिणे वामे द्वारपालानिमानपि ॥ ३३ ॥

मध्ये तले द्वितीये तु तथा सिंहासनोपरि ।
श्रीभूमिभ्यां सुखासीनं श्यामवर्णं चतुर्भुजम् ॥ ३४ ॥

शङ्खचक्रधरं चैव सर्वाभरणभूषितम् ।
कारयित्वा विधानेन पूजनीं श्यामसन्निभाम् ॥ ३५ ॥

मायां रक्तनिभामेव तथा संह्लादिनीमपि ।
मार्कण्डेयं भृगुं चैव पूर्ववत्कारयेद्बुधः ॥ ३६ ॥

बलिन्दं द्वारपालं च श्यामवर्णं गदायुधम् ।
उद्देश्यकरमुद्रं च दक्षिणे नागचूलिनम् ॥ ३७ ॥

तुहणं च तथा वामे रुक्माभं दण्डपाणिनम् ।
उद्देश्यकरसंयुक्तं कारयेद् द्वारपालकम् ॥ ३८ ॥

सर्वेषां द्वारपालानां तत्तद्द्वारे यथाक्रमम् ।
भित्त्याश्रयं च तद्विम्बमाभासं वाथ कारयेत् ॥ ३९ ॥

ऊर्ध्वे तले तृतीये तु पूर्वोक्तेन विधानतः ।
अनन्तशयने देवं शयानं संप्रकल्पयेत् ॥ ४० ॥

तलेऽथवा द्वितीये तु तथा सिंहासनोर्ध्वतः ।
श्रीभूमिभ्यां सहासीनं शान्तवेषसमन्वितम् ॥ ४१ ॥

सिंहवच्च मुखं कुर्याद्दंष्ट्रैरपि नखैर्युतम् ।
श्वेताभं रक्तवस्त्रं च शङ्खचक्रधरं परम् ॥ ४२ ॥

दक्षिणे तु श्रियं वामे क्षोणीमपि च पूर्ववत् ।
सिंहासनस्य चाधस्तादाभ्यां देवपार्श्वतः ॥ ४३ ॥

ब्रह्माणं च प्रवालाभं देवमुद्वीक्ष्य सुस्थितम् ।
उपसंहर कोपं त्वमिति तत्र सुवादिनम् ॥ ४४ ॥

शङ्करं च तथैशान्ये तिष्ठन्तं श्वेतसन्निभम् ।
देवमुद्वीक्ष्य वन्दन्तं कारयेत यथाक्रमम् ॥ ४५ ॥

भृगुं प्रवाळवर्णं च पुराणं रक्तमेव च ।
द्वितीये तु तले कृत्वा तृतीये तु तले पुनः ॥ ४६ ॥

आदिमूर्तिं तथा विष्णुं पूर्ववत्संप्रकल्पयेत् ।
एवमिष्टविमाने च ध्रुवबेराणि कारयेत् ॥ ४७ ॥

बालालयात्समानीय विमाने विधिवत्कृते ।
प्रतिष्ठोक्तविधानेन प्रतिष्ठां कारयेद्बुधः ॥ ४८ ॥

एवं कर्तुमशक्तश्चेत्कूटागारं प्रकल्प्य च ।
कूटागारात्समानीय पूर्वोक्तेन विधानतः ॥ ४९ ॥

सालीन्द्रं च सगर्भं च युक्तं हस्तप्रमाणतः ।
यथा स्यात्सुदृढं हृद्यं शिलयेष्टकयाऽथवा ॥ ५० ॥

कारयित्वैव तन्मध्ये विष्णुमूर्तिं तु पूर्ववत् ।
ऊर्ध्वे तलं च संकल्प्य पश्चिमे सोन्नतं तथा ॥ ५१ ॥

कृत्वा तत्र च पैशाचं हित्वैव स्थापनोच्यते ।
परितस्त्वन्यमूर्तीनां स्थापनं च विधीयते ॥ ५२ ॥

ध्रुवबेरं विना तत्र तत्तन्मूर्तिपदेषु तु ।
पीठे रत्नानि विन्यस्य सर्वेषां च यथाविधि ॥ ५३ ॥

लोहजाः प्रतिमाश्चापि कौतुकाद्याश्च शक्तितः ।
स्थापयेदर्चयेत्सम्यग्ग्राममध्ये हरिं परम् ॥ ५४ ॥

शक्तो नलिनकाद्येषु यथोक्तं पुनरीप्सितम् ।
विमानं विधिना सम्यक्कारयित्वैव तत्र च ॥ ५५ ॥

ध्रुवबेराणि चोक्तानि पूर्ववत्संप्रकल्प्य च ।
कूटागारात्समानीय पूर्वोक्तेन विधानतः ॥ ५६ ॥

प्रतिष्ठां कारयेत्तत्र विमाने भक्तिसंयुतः ।
एकमूर्तिविमानं चेत्कूटागारेऽपि पूर्ववत् ॥ ५७ ॥

ध्रुवकौतुकसंयुक्तं स्थापयेदिति केचन ।
परिवारान् प्रवक्ष्यामि चतुर्दिक्षु यथाक्रमम् ॥ ५८ ॥

गरुडं चेन्द्रमग्निं च दुर्गां स्कन्दं यमं तथा ।
निर्ऋतिं च बुधं चैव वरुणं जवनं तथा ॥ ५९ ॥

ब्रह्माणं च कुबेरं च विष्वक्सेनं क्रमेण वै ।
ईशानं भास्करं चैव विघ्नेशं नागराजकम् ॥ ६० ॥

चक्रं ध्वजं च शङ्खं च भूतनायकसंयुतम् ।
प्रथमावरणे देवान् परिवारान् प्रकल्प्य च ॥ ६१ ॥

गोपुरात्पुरतो बाह्ये भूतपीठं प्रकल्पयेत् ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे पञ्चमूर्तिविधिर्नाम सप्तत्रिंशोऽध्यायः ॥

## अष्टत्रिंशोऽध्यायः

पञ्चमूर्तिप्रतिष्ठायां विशेषं शृणुत द्विजाः !
यथोक्तेषु दिनेष्वेकं शुभं श्रेष्ठं प्रगृह्य च ॥ १ ॥

तस्मात्तद् दिवसात्पूर्वमङ्कुरानर्पयेत्ततः ।
षड्गर्भालयमुद्दिश्य षडाचार्यांश्च पूर्ववत् ॥ २ ॥

स्थापकानृत्विजश्चापि यथोक्तान् वरयेत्पृथक् ।
पूर्वोक्तविधिना सर्वान् संभारांश्च समाहरेत् ॥ ३ ॥

प्रमुखे विष्णुमूर्तेस्तु यागशालां च पूर्ववत् ।
तत्प्राच्यां पुरुषस्यापि कारयित्वा यथोदितम् ॥ ४ ॥

ऊर्ध्वे तलं समुद्दिश्य तत्प्राच्यामेव कारयेत् ।
दक्षिणे सत्यमूर्तेस्तु तद्द्वाराभिमुखे क्रमात् ॥ ५ ॥

पश्चिमेऽप्यच्युतस्योक्तमनिरुद्धस्य चोत्तरे ।
तद्द्वाराभिमुखे तेषां यागशालां च कारयेत् ॥ ६ ॥

शय्यावेदिं तथा कुर्यादग्निकुण्डानि च क्रमात् ।
विष्णुमूर्तेस्तदन्येषां सर्वेषां च तथैव च ॥ ७ ॥

विनैव पौण्डरीकाग्निं पञ्चाग्नीनेव कारयेत् ।
प्रधानः पुरुषस्याग्निः प्रोक्त आहवनीयकः ॥ ८ ॥

अन्वाहार्यश्च सत्यस्य गार्हपत्योऽच्युतस्य च ।
आवसथ्योऽनिरुद्धस्य प्रधान इति कीर्तितः ॥ ९ ॥

अथवा पुरुषादीनां चतुर्णां च विधानतः ।
यथोक्तं तं प्रधानाग्निमेकं तत्र प्रकल्पयेत् ॥ १० ॥

आदिमूर्तेर्नृसिंहस्य शयानस्यापि पञ्च च ।
सभ्यः प्रधान इत्येनं शय्यावेद्यास्तु सर्वतः ॥ ११ ॥

कारयेत्पुरुषस्यापि शय्यावेद्यास्तु पूर्ववत् ।
प्रकल्प्याहवनीयं च श्वभ्रं पूर्वे तु कारयेत् ॥ १२ ॥

अन्वाहार्यं च सत्यस्य शय्यावेद्यास्तु दक्षिणे ।
कुर्यात्तद्दक्षिणे श्वभ्रं स्नपनस्य विधीयते ॥ १३ ॥

गार्हपत्याग्निशय्यायाः पश्चिमेऽप्यच्युतस्य च ।
तस्मात्पश्चिमतः श्वभ्रं स्नपनार्थं प्रचोदितम् ॥ १४ ॥

अनिरुद्धस्य शय्याया आवसथ्याग्निमुत्तरे ।
कुर्यात्तदुत्तरस्यां वै श्वभ्रं कुर्याद्विधानतः ॥ १५ ॥

नव बिम्बानि चेत्तत्र विधिनैवाक्षिमोचनम् ।
अधिवासं च कुर्यात्तद्बिम्बशुद्धिनिमित्ततः ॥ १६ ॥

तद्दिनात्पूर्वरात्रौ तु वास्तुहोमं यजेत्क्रमात् ।
पुण्याहं वाचयेत्तत्र गर्भगेहेषु षट्सु च ॥ १७ ॥

ऋत्विजो विधिना स्नात्वा यजमानो मुदान्वितः ।
वस्त्रोत्तरीयाभरणैः शक्त्या तान् भूषयेत्पृथक् ॥ १८ ॥

पादौ प्रक्षाल्य चाचम्य सर्वेऽप्यध्वर्यवस्तदा ।
सूत्रोक्तविधिना सम्यगाघारं जुहुयात्क्रमात् ॥ १९ ॥

षट्कुम्भांश्च समादाय शुद्धैस्तोयैः प्रपूर्य च ।
सौवर्णमङ्गलादीनि पूर्ववत्तेषु निक्षिपेत् ॥ २० ॥

वस्त्रयुग्मेन संवेष्टच ध्यानं सम्यक् तथाचरेत् ।
बालालयेऽर्च्यमानात्तु बिम्बादावाहयेत्क्रमात् ॥ २१ ॥

आचार्यः स्थापकाः कुम्भं विष्णुमूर्तिं च पूर्ववत् ।
नयेयुः पुरुषं पश्चादनन्तशयनं ततः ॥ २२ ॥

सत्यं तथाऽच्युतं पश्चादनिरुद्धं क्रमान्नयेत् ।
श्वभ्रे बिम्बं च संस्थाप्य पार्श्वे कुम्भं च विन्यसेत् ॥ २३ ॥

प्रधानान् सप्त कलशानुपस्नानांश्च सप्त वै ।
तत्तद् द्रव्यैश्च सम्पूर्य दण्डवेद्यां तु विन्यसेत् ॥ २४ ॥

विष्णोः पुरुषमूर्तेश्च शयनस्योत्तरादिकम् ।
प्रागादि सत्यमूर्तेस्तु दक्षिणाद्यच्युतस्य च ॥ २५ ॥

पश्चिमाद्यनिरुद्धस्य कलशन्यास उच्यते ।
पूर्ववद्विधिना सम्यक्कलशैः स्नापयेत्पृथक् ॥ २६ ॥

प्लोतवस्त्रेण सम्मृज्य वस्त्राद्यैरभिभूषयेत् ।
षण्णां शयनवेद्यां च धान्योपरि यथाविधि ॥ २७ ॥

शयनानि न्यसेत्पञ्च चोपधानद्वयान्वितम् ।
अलाभे सप्तवस्त्राणि तत्तद् ध्यात्वा पृथङ् न्यसेत् ॥ २८ ॥

आरोपयेत शय्यायां देवं तत्कुम्भसंयुतम् ।
प्राङ्मुखं स्थापयेद्विष्णुं पुरुषं शयनं तथा ॥ २९ ॥

दक्षिणाभिमुखं सत्यमच्युतं पश्चिमामुखम् ।
स्थापयेदनिरुद्धं तमुत्तराभिमुखं पुनः ॥ ३० ॥

उपचारैश्च पाद्याद्यैरर्चयित्वा प्रणम्य च ।
पुण्याहं वाचयेत्तत्र बध्वा प्रतिसरां ततः ॥ ३१ ॥

तत्र कुम्भं तु तत्पार्श्वे धान्ये तत्प्रमुखे न्यसेत् ।
यद्दिग्द्वारं ततो मौळिं शय्यायां शाययेत्पृथक् ॥ ३२ ॥

उत्तराच्छादनं कुर्यात्सर्वेषां च पृथक् पृथक् ।
यजमानस्ततो होतॄन् वस्त्राद्यैरपि भूषयेत् ॥ ३३ ॥

तत्र तत्र च तद्धोता हौत्रं शंसेच्च पूर्ववत् ।
मूर्तिमन्त्रक्रमेणैव देवानावाहयेत्क्रमात् ॥ ३४ ॥

तथैव विष्णुमूर्तेश्च शयनस्य च पूर्ववत् ।
पुरुषादिचतुर्णां च तत्तन्मूर्तिक्रमेण वै ॥ ३५ ॥

तथैव नारसिंहस्य परिवारयुतस्य च ।
विष्णुमूर्तेस्तथा सभ्ये जुहुयात्पुरुषस्य तु ॥ ३६ ॥

आहवनीये सत्यस्य दक्षिणाग्नौ तथैव च ।
गार्हपत्येऽच्युतस्यापि तदभावावसथ्यके ॥ ३७ ॥

अनिरुद्धस्य कर्तव्यं प्रधानं हौत्रशंसनम् ।
आवाहनक्रमेणाज्यं निरूप्याज्याहुतीर्यजेत् ॥ ३८ ॥

पूर्ववद्विष्णुमूर्त्यादिः सभ्यादिष्वग्निषु क्रमात् ।
पौण्डरीके तथा होमं जुहुयाच्च यथाविधि ॥ ३९ ॥

तृतीये तु तले वापि जहुयात्पञ्चसु क्रमात् ।
नारसिंहप्रतिष्ठा चेत्सभ्ये सत्ये विशेषतः ॥ ४० ॥

यो वा नृसिंह इत्येवं शतमष्टोत्तरं यजेत् ।
पुरुषादि चतुर्णां च तथा पञ्चाग्नयो यदि ॥ ४१ ॥

भवेयुस्तत्तथा होमः पूर्ववत्तेषु हूयताम् ।
अथ वैको भवेदग्निर्होमस्तत्र विधीयते ॥ ४२ ॥

पालाशीं वाप्यथाश्वत्थीं मूलाग्राभ्यां घृताप्लुताम् ।
नारायणाय विद्मेति तं देवं मनसा स्मरन् ॥ ४३ ॥

तत्तद्धोमेषु समिधं जुहोत्यष्टाधिकं शतम् ।
आहवनीये चैकाग्नौ स्रुवेणाज्यं प्रगृह्य च ॥ ४४ ॥

सहस्रशीर्षाद्यैर्मन्त्रैः शतमष्टाधिकं यजेत् ।
अन्वाहार्ये तु चैकाग्नौ सत्यमूर्तिमनुस्मरन् ॥ ४५ ॥

विष्णोर्नुकाद्यैर्जुहुयात्सप्तभिः साष्टकं शतम् ।
तथैव गार्हपत्याग्नावेकस्मिन्नच्युतस्य तु ॥ ४६ ॥

अतो देवादिभिः षड्भिराज्यमष्टशतं यजेत् ।
एकस्मिन्नावसथ्याग्नावनिरुद्धस्य च स्मृतम् ॥ ४७ ॥

एकाक्षरादिभिर्मन्त्रैर्जुहुयाच्च शताष्टकम् ।
आज्यं व्याहृतिभिस्तेषु सर्वाग्निषु च हूयताम् ॥ ४८ ॥

पक्वं च वैष्णवैर्मन्त्रैर्जुह्वा च जुहुयात्क्रमात् ।
आचार्या ऋत्विजः सर्वे प्रभाते च विधानतः ॥ ४९ ॥

स्नात्वा सन्ध्यामुपास्यैव तर्पयित्वा यथाक्रमम् ।
ब्रह्मयज्ञं च कृत्वैव यागशालां प्रविश्य च ॥ ५० ॥

देवेशं संप्रणम्याग्नीन् सर्वांश्च परिषिच्य च ।
विष्णुसूक्तं च हुत्वैवमन्तहोमश्च हूयते ॥ ५१ ॥

रत्नन्यासं तथा कुर्यात् पट्सु गर्भालयेषु च ।
देवानुत्थापयित्वैव वस्त्राद्यैरभिभूष्य च ॥ ५२ ॥

पाद्याद्यैरुपचारैश्च देवान् सर्वान् समर्चयेत् ।
ऋत्विग्भ्यः स्थापकादिभ्यश्चाचार्येभ्यश्च दक्षिणाम् ॥ ५३ ॥

पूर्वोक्तविधिना दद्याद्यजमानो मुदान्वितः ।
तस्मिन् मुहूर्ते संप्राप्ते तं कुम्भं शिरसा वहन् ॥ ५४ ॥

आचार्यः पुरतो गच्छेद्धस्ताभ्यां स्थापकाः पुनः ।
नयेयुर्विष्णुमूर्तिं तं पुरुषं शयितं हरिम् ॥ ५५ ॥

सत्यमप्यच्युतं तद्वदनिरुद्धं नयेत्क्रमात् ।
तत्तदालयमावेश्य तत्तत्पीठे तथैव च ॥ ५६ ॥

प्रतद्विष्णुस्तवत इति स्थापयेयुश्च पूर्ववत् ।
आत्मसूक्तं च जप्त्वैव भक्त्या च परया युतः ॥ ५७ ॥

पादं स्पृशन्तो देवस्य पौरुषं सूक्तमेव च ।
एकाक्षरादिसूक्तं च विष्णुसूक्तं सवैष्णवम् ॥ ५८ ॥

जपेयुरेकाग्रचित्ता ध्यायन्तो मनसा हरिम् ।
आचार्यो दक्षिणे पार्श्वे कुम्भं संन्यस्य पूर्ववत् ॥ ५९ ॥

आत्मसूक्तं च शान्तिं च जप्त्वा सम्यक् समाहितः ।
ध्रुवबेरस्य पादं च स्पृशन् ध्यानपरायणः ॥ ६० ॥

प्रसन्नो भक्तियुक्तश्च ध्रुवसूक्तं तथैव च ।
वैष्णवं पौरुषं सूक्तं सूक्तमेकाक्षरादिकम् ॥ ६१ ॥

विष्णुसूक्तं जपन् ध्यायन् परमात्मानमव्ययम् ।
बीजाक्षरं च पूर्वोक्तं विन्यसेच्च यथाक्रमम् ॥ ६२ ॥

कुम्भस्थां शक्तिमादाय पूर्वोक्तेन विधानतः ।
ध्रुववेरे समावाह्य ध्यानयुक्तः समाधिना ॥ ६३ ॥

तस्मात्तत्कौतुकाद्येषु कलामावाहयेत्ततः ।
नारसिंहो यदि स्यात्तु मूर्तिमन्त्रैस्तथाह्वयेत् ॥ ६४ ॥

अनन्तशयनं देवं पुरुषं सत्यमच्युतम् ।
अनिरुद्धं तथा ध्यायेन्मूर्तिमन्त्रैर्यथोदितैः ॥ ६५ ॥

आवाहयेच्च तद्देव्यावर्चकौ च मुनी तथा ।
शैषिकद्वारपालांश्च गरुडादीननुक्रमात् ॥ ६६ ॥

अन्यान् नवविधान् देवान् परिवारान् यथोदितान् ।
तत्तद्देशे तथा ध्यायन् सर्वानावाहयेत्क्रमात् ॥ ६७ ॥

देवदेवं प्रणम्याथ पुण्याहमपि वाचयेत् ।
नित्यार्चनविधानेन विग्रहैरासनादिभिः ॥ ६८ ॥

अर्चयित्वा हविर्भिश्च यथाशक्ति निवेदयेत् ।
उत्सवस्नपनादीनि यथोक्तं कारयेद्बुधः ॥ ६९ ॥

नैमित्तिकबलिं तत्र स्नपनं चोत्सवादिकम् ।
अशक्तः सर्वमूर्तीनामादिमूर्तेस्तु वाचरेत् ॥ ७० ॥

सर्वासामपि मूर्तीनां कृतं तच्च भविष्यति ।
यस्य मूर्तौ भवेद्भक्तिर्यजमानस्य पञ्चसु ॥ ७१ ॥

तस्या मूर्तेस्तु कर्तव्यं स्नपनं चोत्सवादिकम् ।
आदिमूर्तियुतं वाथ विधिना कारयेदिति ॥ ७२ ॥

सर्वशान्तिकरं चैतत्सर्ववर्णसमृद्धिदम् ।
सर्वसिद्धिकरं चैतत्सर्वाशुभविनाशनम् ॥ ७३ ॥

शत्रुनाशकरं चैतद्धनधान्याभिवर्धनम् ।
एतद्विधानं यः कुर्यात्सर्वान् कामानवाप्नुयात् ॥ ७४ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे पञ्चमूर्तिप्रतिष्ठाविधि-
र्नामाष्टत्रिंशोऽध्यायः ॥

---

## एकोनचत्वारिंशोऽध्यायः

अथ देव्याः श्रियो मह्याः प्रतिष्ठा पृथगुच्यते ।
ध्रुवे देवीसमायुक्ते देवीहीने तु कौतुके ॥ १ ॥

पश्चाद्वा कौतुकस्यापि देव्यौ यत्नेन कारयेत् ।
यद्वस्तुना कृतं बिम्बं कौतुकं तेन वस्तुना ॥ २ ॥

देव्यौ च कारयेत्सम्यक् कौतुकस्यानुरूपतः ।
स्थानकं कौतुकं स्याच्चेद्देव्याश्च स्थानकं भवेत् ॥ ३ ॥

आसने चासनं प्रोक्तं सहैव पृथगेव वा ।
शुभर्क्षे च शुभे राशौ प्रतिष्ठां विधिनाचरेत् ॥ ४ ॥

कृत्वाऽक्षिमोचनं तद्वदधिवासं समाचरेत् ।
प्रमुखे दक्षिणे वाथ यागशालां प्रकल्प्य च ॥ ५ ॥

तद्यागशालामध्ये तु श्रीदेव्या दक्षिणेऽथवा ।
बिम्बाध्यर्धप्रमाणेन शय्या वेदिं प्रकल्पयेत् ॥ ६ ॥

शय्यावेद्यास्तु पूर्वस्मिन्नौपासनविधानतः ।
अग्निकुण्डं च कृत्वैव महीदेव्याश्च वामतः ॥ ७ ॥

शय्यावेद्यास्तु पूर्वस्यामग्निकुण्डं तथैव च ।
मध्ये सभ्यं च देव्याश्च कल्पयित्वा विधानतः ॥ ८ ॥

अग्निकुण्डस्य पूर्वस्यां श्वभ्रं देव्याश्च कारयेत् ।
अधिवासं ततो देव्यौ यागशालां प्रवेशयेत् ॥ ९ ॥

आघारं विधिवद्धुत्वा द्वौ कुम्भौ संप्रगृह्य च ।
जलेनापूर्य रत्नाद्यैः कुम्भपूजां तथाचरेत् ॥ १० ॥

गर्भालये तु तद्देव्योः पूर्वं कुम्भे तु संन्यसेत् ।
ध्यायंस्तु ध्रुवबेरस्य कुम्भादावाहयेज्जले ॥ ११ ॥

श्वभ्रे देव्यौ च विन्यस्य पार्श्वे कुम्भौ निधाय च ।
संस्नाप्य कलशैर्देव्यौ वस्त्राद्यैरभिभूष्य च ॥ १२ ॥

पञ्चशय्याः समास्तीर्य शयने शाययेच्च ते ।
शयनानामथालाभे पञ्चवस्त्राणि वा पृथक् ॥ १३ ॥

आस्तीर्य शयने देव्यौ पूर्ववच्छाययेच्च ते ।
उत्तराच्छादनं कृत्वा हौत्रशंसनमाचरेत् ॥ १४ ॥

देव्यौ मूर्तिभिरावाह्य जयादींश्च समाह्वयेत् ।
निर्वापं च ततः कृत्वा तथैव जुहुयात्क्रमात् ॥ १५ ॥

सभ्ये पुरुषसूक्तेन वैष्णवैर्विंशतिर्यजेत् ।
श्रिये जातेति श्रीदेव्या विंशतिं जहुयात्क्रमात् ॥ १६ ॥

मेदिनी देवीत्युच्चार्य महीदेव्यास्तथा यजेत् ।
श्रीसूक्तं च महीसूक्तं तत्तदग्नौ सवैष्णवम् ॥ १७ ॥

अन्तहोमं च कृत्वा तु रात्रिशेषं च यापयेत् ।
ततः प्रभाते स्नात्वैव सुवर्णं नवरत्नकम् ॥ १८ ॥

देव्योः पीठे निधातव्यं कुम्भौ देव्यौ च सन्नयेत् ।
देवालयं प्रविश्यैव देवदक्षिणवामयोः ॥ १९ ॥

बिम्बे बीजाक्षरं न्यस्य श्रिये जात इति ब्रुवन् ।
श्रीदेवीं स्थापयेत्पूर्वं मेदिन्यादि समुच्चरन् ॥ २० ॥

स्थापयेच्च महीं देवीं सम्यग्ध्यानपरायणः ।
कुम्भस्थां शक्तिमादाय तत्तन्मन्त्रेण पूर्ववत् ॥ २१ ॥

ध्रुवबेरे समावाह्य तस्मात्तत्कौतुके तथा ।
देव्यावावाहयेत्पश्चादर्चयित्वा यथाविधि ॥ २२ ॥

हवींषि च निवेद्यैव मुखवासं ददाति च ।
आचार्यस्थापकादीनामृत्विजां दक्षिणां ददेत् ॥ २३ ॥

पृथक् पृथक् च देवीभ्यां पृथगेवं समाचरेत् ।
ध्रुवे देवीविहीने तु देवीयुक्तं च कौतुकम् ॥ २४ ॥

कल्पयेत्तदशक्तोऽपि पश्चाद्वा कल्पयेत्तथा ।
देवे देवीविहीने तु भोगहानिमवाप्नुयात् ॥ २५ ॥

योगभोगादिभेदस्तु ध्रुवबेरे विधीयते ।
सर्वत्र देवीसंयुक्तं कौतुकं सर्वसिद्धिदम् ॥ २६ ॥

देवे देवीसमायुक्ते श्रीभूमिभ्यां च सम्पदः ।
पत्न्यपत्यादिवृद्धिश्च भोगाश्चान्ये भवन्ति च ॥ २७ ॥

तत्कौतुकस्य पश्चाद्वा देव्यौ कृत्वा यथाविधि ।
पूर्वोक्तेन विधानेन प्रतिष्ठामाचरेद्बुधः ॥ २८ ॥

अक्ष्युन्मेषाधिवासादीन् सर्वान् कृत्वा यथाक्रमम् ।
तथैव कुम्भं संपूज्य देव्योश्च हृदये क्रमात् ॥ २९ ॥

ध्यात्वाऽऽवाह्य च तत्कुम्भे ध्यायेद्रूपं यथाविधि ।
तद्रूपमथवा ध्यायेदावाह्य रविमण्डलात् ॥ ३० ॥

एष एव विशेषः स्यादन्यत्सर्वं तु पूर्ववत् ।
अतः परं प्रवक्ष्यामि देव्योर्वैवाहिकक्रमम् ॥ ३१ ॥

पूर्वस्मिन् स्थापिते देवे देवीहीने तु तत्र तु ।
पश्चाद्देव्योः प्रतिष्ठायां कृतायां तदनन्तरम् ॥ ३२ ॥

यदीच्छेत्कारयेत्तत्र देव्योर्वैवाहिकक्रियाम् ।
यागशालामलङ्कुर्यादलङ्कारक्रमेण वै ॥ ३३ ॥

औपासनाग्निकुण्डं च मध्ये कुर्याद् द्वयोरपि ।
दक्षिणे तु श्रियं देवीं महीदेवीं तु वामतः ॥ ३४ ॥

एकं वाथ द्वयोः कुर्यादग्निकुण्डं तयोः सह ।
यजमानो मुदा युक्तः पूर्वोक्तगुणसंयुतम् ॥ ३५ ॥

आचार्यं पूजयेद्भक्त्या वस्त्रमाल्यादिभूषणैः ।
स्वगृहं यजमानस्तां यागशालां विचिन्त्य च ॥ ३६ ॥

प्रहृष्टोऽलङ्कृते देव्यौ तत्र भक्त्या समानयेत् ।
वैखानसेन सूत्रेण पूर्वोक्तगुणसंयुतः ॥ ३७ ॥

आचार्यस्तत्क्रमात्सम्यगाघारं जहुयात्पुनः ।
अग्निमायतनात्कुण्डे कृत्वाघारं यथाविधि ॥ ३८ ॥

अग्नेः पश्चिमतः खट्वां तल्पेन सहितां न्यसेत् ।
अथवा वस्त्रसंछन्नं विष्टरं तत्र विन्यसेत् ॥ ३९ ॥

देवदेवं ततस्तत्र सर्वालङ्कारसंयुतम् ।
यागशालां विनीयैव प्राङ्मुखं स्थापयेद्बुधः ॥ ४० ॥

राजवत्पूजयेत्सम्यगुपचारैर्यथोचितैः ।
स्थित्वाचोदङ्मुखो देवं पाद्याद्यैरर्चयेत्क्रमात् ॥ ४१ ॥

मधुपर्कं तथार्घ्यं च निवेद्याचमनं ददेत् ।
आचार्यस्त्वात्मसूक्तं च जप्त्वा चैकाक्षरादिभिः ॥ ४२ ॥

सूक्तैश्च देवदेवं तु प्रणम्यैवानुमान्य च ।
वैखानसेन सूत्रेण विवाहं विधिनाचरेत् ॥ ४३ ॥

प्रसुग्मन्तेति देवेशो देवीमीक्षेत पूर्ववत् ।
अभ्रातृघ्नीति तं देवं देवी प्रेक्षेत्ततः परम् ॥ ४४ ॥

यजमानोऽथ देवाय देवीं दद्याच्च सोदकम् ।
श्रियः प्रदाने स्वात्मानं ध्यायेदङ्गिं भृगुं तु वा ॥ ४५ ॥

मह्याः प्रदाने ध्यायेद्वै स्वात्मानं तु प्रजापतिम् ।
प्रादुर्भावेषु सर्वेषु तद्देवीपितरं तथा ॥ ४६ ॥

संचिन्त्य दद्यात्तन्नाम्ना विधिना भक्तिसंयुतः ।
वरस्य पार्श्वयोर्देव्यौ सन्नयेदुभयोरुभे ॥ ४७ ॥

आचार्यस्तत्प्रधानादि लाजांश्च जुहुयात्तथा ।
अग्निप्रदक्षिणं चापि करोत्याचार्य एव तु ॥ ४८ ॥

अश्मसंस्पर्शनं देव्योः कारयेत यथाविधि ।
वरस्य पाणिना देव्योः पाणी संस्पर्शयेत्क्रमात् ॥ ४९ ॥
तथा सप्तपदाक्रान्तं देवं देव्यौ च कारयेत् ।
देव्या देवस्य तन्मन्त्रं पादौ भूमौ न चार्पयेत् ॥ ५० ॥
ध्रुवसन्दर्शनाद्यां तु क्रियां देवस्य नाचरेत् ।
आचार्यदक्षिणां दद्यात् ऋत्विग्भ्यश्च ददेत्तथा ॥ ५१ ॥
वैवाहिकं समाप्यैव प्रभूतं च निवेदयेत् ।
ग्रामप्रदक्षिणं कुर्याद्देवं देवीसमायुतम् ॥ ५२ ॥
देवीभ्यां सह देवेशं शुद्धोदैरभिषिच्य च ।
अलङ्कृत्य च देवेशं देव्यौ वस्त्रादिभूषणैः ॥ ५३ ॥
पीठे देवं च देव्यौ च स्थापयित्वा सहार्चयेत् ।
पृथक् पृथक् चेद्देवीभ्यां पृथगेव समाचरेत् ॥ ५४ ॥
स्त्रियस्तद्ग्रामवासिन्यः पुत्रपौत्रादिसंयुताः ।
सर्वमङ्गलसंयुक्ताः सर्वसम्पत्समायुताः ॥ ५५ ॥
भविष्यन्ति हरेरेवं कृत्वा वैवाहिकं विधिम् ।
कल्याणसम्पदश्चान्याः भवन्त्यस्मान्न संशयः ॥ ५६ ॥
एवं यः कुरुते भक्त्या विष्णोर्वैवाहिकं विधिम् ।
इहलोके सुखं भुक्त्वा अन्ते विष्णुपदं व्रजेत् ॥ ५७ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे देव्योः पृथक्-
प्रतिष्ठावैवाहिकविधिर्नामैकोनचत्वारिंशोऽध्यायः ॥

---

# चत्वारिंशोऽध्यायः

अतः परं प्रवक्ष्यामि विष्णोर्नित्यार्चनाविधिम् ।
ब्रह्मस्थाने कौतुकं तु स्थापितं सम्यगर्चयेत् ॥ १ ॥

तस्यैवोत्तरतः पार्श्वे चौत्सवं च विधानतः ।
दक्षिणे कौतुकस्यैव स्नपनं सम्यगर्चयेत् ॥ २ ॥

अशक्तः कौतुकं तत्र केवलं वा समर्चयेत् ।
नित्यार्चनविधानेन प्रधानं नित्यमर्चनम् ॥ ३ ॥

अधिकं च विशेषं च कौतुके कारयेद्बुधः ।
औत्सवं बिम्बमादाय चोत्सवं कारयेत्क्रमात् ॥ ४ ॥

स्नापने स्नपनं कुर्याद्बिम्बे सम्यग्यथाविधि ।
एतयोरर्चनं चापि कौतुके युक्तं भवेत् ॥ ५ ॥

ऋत्विगुक्तगुणैर्युक्तो नित्यस्वाध्यायसंयुतः ।
अर्चकस्तु यथोक्तं तु प्रातः स्नात्वा विधानतः ॥ ६ ॥

प्राणानायम्य सावित्रीं जप्त्वा स्वाध्यायमुच्चरन् ।
कल्पमन्त्रविशेषज्ञो वैष्णवः सुसमाहितः ॥ ७ ॥

गृहस्थो ब्रह्मचारी वा भक्त्यैवार्चनमाचरेत् ।
यथोपनयनादग्नौ समिदाधानमर्हति ॥ ८ ॥

तथोपनयनादूर्ध्वं विष्णोरर्चनमर्हति ।
अर्चनार्थानि द्रव्याणि संभृत्य विधिपूर्वकम् ॥ ९ ॥

परीत्य मन्दिरं विष्णोः प्रतद्विष्णुरिति ब्रुवन् ।
मणिकेति समुच्चार्य मणिकं प्रणिपत्य च ॥ १० ॥

निरस्तं रक्ष इत्युक्त्वा कुञ्चिकायन्त्रमाहरन् ।
हिरण्यपाणिमित्युक्त्वा कवाटे योजयेत्ततः ॥ ११ ॥

दिवं विवृणोतु मन्त्रेण कवाटोद्घाटनं चरेत् ।
प्रविश्याभ्यन्तरं पश्चादतो देवादिकं ब्रुवन् ॥ १२ ॥

मुखं समीक्ष्य देवस्य प्रणम्यैवानुमान्य च ।
त्रिः संप्रहार्य हस्ताभ्यां शाम्यन्त्विति ततो ब्रुवन् ॥ १३ ॥

भगवतो बलेनेति देवेशं प्रणमेत्पुनः ।
पूर्वोक्तगुणसंयुक्ताः स्नात्वैव परिचारकाः ॥ १४ ॥

दुहतां दिवमित्युक्त्वा जलपात्रं प्रगृह्य च ।
नद्यां वाथ तटाके वा कूपे वाथ पुनः शुभे ॥ १५ ॥

आद्यमभीति मन्त्रेण शुद्धतोयं प्रगृह्य च ।
देवालयं प्रविश्यैव सोमं राजानमित्यपि ॥ १६ ॥

उदकुम्भं च संन्यस्य परिचर्याश्च कारयेत् ।
हवींषि सोपदंशांश्च पचेयुस्ते विधानतः ॥ १७ ॥

अर्चको ब्रह्मब्रह्मेति हृदयं विमृशेत्ततः ।
हृदये प्रणवैर्युक्तमादिबीजं च संन्यसेत् ॥ १८ ॥

शं नो वातेति शान्तिं च जप्त्वैवार्चनमाचरेत् ।
अन्तरस्मिन्निमेत्युक्त्वा स्मरेद्ब्रह्माणमव्ययम् ॥ १९ ॥

सोमं राजानमित्युक्त्वा समादाय तु तज्जलम् ।
धारास्विति च मन्त्रेण तोयस्योत्प्लवनं चरेत् ॥ २० ॥

इदमापः शिवेत्युक्त्वा तोयं तदभिमन्त्रयेत् ।
मार्जन्या मार्जनं कुर्यादवधूतमिति ब्रुवन् ॥ २१ ॥

आशासु सहेत्यभ्युक्ष्य गोमयेनोपलेपयेत् ।
अहमेवेति मन्त्रेण निर्माल्यं च विसर्जयेत् ॥ २२ ॥

भुवस्थानादि सर्वत्र शोधयित्वा ततः परम् ।
पूतस्तस्येति मन्त्रेण वेदिमद्भिः सुशोधयेत् ॥ २३ ॥

नारायणाय विद्मेति पादे पुष्पाणि संन्यसेत् ।
विष्णुं च पुरुषं सत्यमच्युतं चानिरुद्धकम् ॥ २४ ॥

इत्येवं पञ्च पुष्पाणि मूर्तिमन्त्रैरनुक्रमात् ।
देवेशस्यैव निर्माल्यमादाय प्रयतः स्वयम् ॥ २५ ॥

विष्वक्सेनं समासाद्य अर्चयित्वा यथाक्रमम् ।
भूः प्रपद्येतिमन्त्रेण देवदेवं प्रणम्य च ॥ २६ ॥

परं रंहेतिमन्त्रेण देवमादाय चात्वरः ।
प्रतद्विष्णुस्तवतेति स्नानपीठे सुसंन्यसेत् ॥ २७ ॥

परिलिखितेति मन्त्रेण शोधनीयं विशोधयेत् ।
वारीश्चतस्र इत्युक्त्वा वारिणा शोधयेत्पुनः ॥ २८ ॥

नमो वरुण इत्युक्त्वा स्नापयेत्पुष्पवारिणा ।
भूरानिलय इत्युक्त्वा स्नापयेद्गन्धवारिणा ॥ २९ ॥

देवेशं धौतवस्त्रेण श्वेतेन विमृजेद्बुधः ।
अथवादाय तं देवं स्नानपीठे निवेश्य च ॥ ३० ॥

इषेत्वोर्जेत्यादि जपन् स्नानकर्म समाचरेत् ।
ततः कौतुकमादाय भूरसि भूरिति ब्रुवन् ॥ ३१ ॥

अर्चापीठे प्रतिष्ठाप्य देवदेवं प्रणम्य च ।
वस्त्रेणाप्युत्तरीयेण भूषणैरपि भूषयेत् ॥ ३२ ॥

स्नानाथकालादन्यस्मिन्नर्चापीठान्न चालयेत् ।
अर्चापीठात्ततोऽन्यत्र नित्यार्चां न समाचरेत् ॥ ३३ ॥

[नित्यहोमं ततः कुर्यात्समिधाज्यचरूंस्तथा ।
आघारं विधिवत्कृत्वा वास्तुहोमं च कारयेत् ॥ ३४ ॥

श्रीसूक्तं पौरुषं सूक्तं विष्णुसूक्तमतः परम् ।
तिथिं वारं च नक्षत्रं हावयेच्च घृतप्लुतम् ॥ ३५ ॥

ये भूतेति च मन्त्रेण बलिं कुर्याद्विधानतः ।
आशीर्वचनमित्युक्त्वा नित्यहोमविधिक्रमात् ॥ ३६ ॥]

औत्सवे स्नपने बिम्बे हीने तत्र तु कौतुकम् ।
स्नपनार्थं चोत्सवार्थं सन्नयेच्च तदेव वै ॥ ३७ ॥

तत्क्रियान्तेऽर्चनापीठे तदभ्यर्च्य निवेदयेत् ।
प्रणिधिं वारिणाऽऽपूर्य कूर्चयुक्तं सहाक्षतम् ॥ ३८ ॥

गायत्र्या तु ध्रुवस्थानं संप्रोक्ष्यैव विधानवित् ।
संयुक्तमेतदित्युक्त्वा ध्रुवकौतुकयोरपि ॥ ३९ ॥

सम्बन्धकूर्चं प्रक्षिप्य पुष्पन्यासं समाचरेत् ।
ध्रुवस्य पादयोर्मध्ये विष्णवे नम इत्यपि ॥ ४० ॥

प्राच्यां तु पुरुषायेति सत्यायेति च दक्षिणे ।
प्रतीच्यामच्युतायेति चानिरुद्धाय चोत्तरे ॥ ४१ ॥

आग्नेय्यां कपिलायेति यज्ञायेति च नैर्ऋते ।
नारायणाय वायव्ये पुण्यायैशान्यकोणके ॥ ४२ ॥

एवं तु प्रथमे न्यस्य द्वितीयावरणे तथा ।
वराहायेति पूर्वस्यां नारसिंहाय दक्षिणे ॥ ४३ ॥

पश्चिमे वामनायेति त्रिविक्रमेत्युत्तरे ततः ।
आग्नेय्यां तु सुभद्राय नैर्ऋत्यामीशितात्मने ॥ ४४ ॥

सर्वोद्वहाय वायव्ये सर्वविद्येति चैशिके ।
एवं द्वितीये संन्यस्य तृतीयावरणे ततः ॥ ४५ ॥

इन्द्रादिनामभिस्तद्वत्तत्तद्दिक्षु च विन्यसेत् ।
आसने दक्षिणे वाथ वामपार्श्वे पदस्य वै ॥ ४६ ॥

शयने पादपार्श्वे च तदनन्तोर्ध्वतस्तथा ।
ध्रुवे चैवं सुसंन्यस्य कौतुके च ततः परम् ॥ ४७ ॥

प्राच्यां दिशि सुभद्राय हयात्मकायेति दक्षिणे ।
वामदेवाय वारुण्यां पुण्यदेवाय चोत्तरे ॥ ४८ ॥

आग्नेय्यां दिशि सर्वाय सुखावहाय नैर्ऋते ।
संवहायेति वायव्ये चैशान्यां सुवहाय च ॥ ४९ ॥

प्रणवादिनमोऽन्तेन पृथङ्मन्त्रमुदीरयन् ।
एवं पुष्पाणि संन्यस्य पश्चाद्देवं समर्चयेत् ॥ ५० ॥

शिवं विश्वं तथा मित्रमत्रिं चैव यथाक्रमम् ।
पश्चिमादि समभ्यर्च्य पीठान्ते तु बहिर्मुखान् ॥ ५१ ॥

सनत्कुमारं वायव्येऽप्यैशान्यां सनकं पुनः ।
सनातनं तथाग्नेय्यां नैर्ऋत्यां तु सनन्दनम् ॥ ५२ ॥

दक्षिणे मार्कण्डेयं च भृगुं वामे समर्चयेत् ।
कवाटेशानपि तथा द्वारे द्वारे समर्चयेत् ॥ ५३ ॥

धातारं दक्षिणेऽभ्यर्च्य चोत्तराभिमुखं ततः ।
वामे चैव विधातारं दक्षिणाभिमुखं क्रमात् ॥ ५४ ॥

ऊर्ध्वाननं भुवङ्गं तं पतङ्गं चाप्यधोमुखम् ।
पतिरं चोत्तरावेक्षं वरुणं दक्षिणामुखम् ॥ ५५ ॥

द्वारे तु प्रथमे चैव मणिकं दक्षिणेऽर्चयेत् ।
वामभागे तथा सन्ध्यां तस्य पत्नीं समर्चयेत् ॥ ५६ ॥

द्वितीयद्वारपालौ तु तापसं सिद्धिदं तथा ।
अथवा चक्रशङ्खौ तु तस्मिन् द्वारे समर्चयेत् ॥ ५७ ॥

सोपानमध्ये श्रीभूतमर्चयेद्बहिराननम् ।
पुरस्ताद्गरुडं तस्य देवाभिमुखमर्चयेत् ॥ ५८ ॥

विष्वक्सेनं समभ्यर्च्य प्रविशेदालयं पुनः ।
एकादशविधैस्तैर्विग्रहैश्च स्वमूर्तिभिः ॥ ५९ ॥

अर्चयेत्परिवारांश्च शिष्यैरेव परान् क्रमात् ।
ततः परं विधानेन देवदेवं समर्चयेत् ॥ ६० ॥

साधवं चतुरः शङ्खान् कौतुकस्याग्रतस्तथा ।
स्थापयेत्तत्क्रमेणैव दक्षिणाद्युत्तरान्तकम् ॥ ६१ ॥

आवाहनार्थं तत्रैकं पाद्यायैव द्वितीयकम् ।
आचमनाय तृतीयं स्नानार्थं च चतुर्थकम् ॥ ६२ ॥

आमावाजस्येति जपन्नर्घ्यपात्राणि शोधयेत् ।
सोमं तेषु समुच्चार्य पात्राण्यन्यानि शोधयेत् ॥ ६३ ॥

अर्घ्यद्रव्यं समादाय गायत्र्या तत्र निक्षिपेत् ।
अभिघार्य घृतेनैव देवस्याभिमुखे न्यसेत् ॥ ६४ ॥

पुष्पादीनि च संभृत्य पूजनार्थं ततो बुधः ।
तद्विष्णोरर्चना काले प्रतिलोमाः कदाचन ॥ ६५ ॥

वेददूषकपाषण्डाः सर्वे च पतितास्तथा ।
पूजां द्रष्टुं च नार्हन्ति तस्माद्यत्नेन सर्वदा ॥ ६६ ॥

द्वारं यवनिकाछन्नं कृत्वा सम्यक् समाहितः ।
देवस्य दक्षिणे पार्श्वे समासीनस्तथासने ॥ ६७ ॥

आत्मसूक्तं जपित्वैव ध्यायेत परमं हरिम् ।
सुवर्णवर्णं रक्तास्यं रक्तनेत्रं सुखोद्वहम् ॥ ६८ ॥

शुकपिञ्छाम्बरधरं विष्णुं प्रणवरूपिणम् ।
किरीटकेयूरहारलम्बयज्ञोपवीतिनम् ॥ ६९ ॥

श्रीवत्साङ्कं चतुर्बाहुं शङ्खचक्रधरं परम् ।
शक्तिं प्रदीपवद्दीपादावेश्य प्रणिधौ ध्रुवात् ॥ ७० ॥

सुवर्भुवर्भूरित्युक्त्वा मूर्ध्नि नाभौ च पादयोः ।
न्यसेद् बिम्बस्य शुद्धात्मा यकारं पादयोस्ततः ॥ ७१ ॥

हृन्मध्ये संन्यसेद्बीजमकारं परमाक्षरम् ।
सर्वेषामपि देवानामादिर्नारायणो यथा ॥ ७२ ॥

अक्षरादिरकारोऽयं तस्य बीजाक्षरं स्मृतः ।
प्रणवैर्वेष्टयित्वा तं पश्चादावाहयेत्ततः ॥ ७३ ॥

वेदादिप्रणवश्चापि तस्य बीजाक्षरो भवेत् ।
हस्तद्वयेन प्रणिधिमुद्धृत्य प्रणवेन तु ॥ ७४ ॥

वामहस्ते गृहीत्वैव दक्षिणेन करेण तु ।
ध्रुवबेरात्प्रणिध्यां तु ध्यात्वा सम्यक् समाहितः ॥ ७५ ॥

कूर्चेनादाय तत्तोयं ध्यायन् लक्ष्मीपतिं हरिम् ।
इदं विष्णुर्वदन्मन्त्रमायातु भगवानिति ॥ ७६ ॥

स्नावयेत्प्राणभूतस्य कौतुकस्य तु मूर्धनि ।
विष्णुं च पुरुषं सत्यमच्युतं चानिरुद्धकं ॥ ७७ ॥

इत्युक्त्वा देवमावाह्य दक्षिणे श्रियमेव च ।
वामे महीं समावाह्य तत्तन्मन्त्रयुतं तथा ॥ ७८ ॥

स्नपने चोत्सवे बिम्बे ध्यात्वा वावाहयेत् ब्रुवात् ।
प्रतद्विष्णुस्तवेत्युक्त्वा चास्त्वासनमुदीरयन् ॥ ७९ ॥

पुष्पदर्भकुशेष्वेकं पीठान्ते त्वासनं ददेत् ।
विश्वाधिकानामुच्चार्य स्वागतं सम्यगाचरेत् ॥ ८० ॥

मनोऽभिमन्तेति ततो देवेशमनुमानयेत् ।
त्वं स्त्रीत्युक्त्वाऽभिमृश्यैव पाद्यं त्रीणि पदेति च ॥ ८१ ॥

इन्द्रोऽभिमन्तेत्युक्त्वा च पाद्यं देयं क्रमेण वै ।
शं नो देवीति मन्त्रेण विष्णवे चेत्युदीरयन् ॥ ८२ ॥

देवस्य दक्षिणे हस्ते दद्यादाचमनीयकम् ।
पञ्चमूर्तिविधाने तु विशेषस्त्वयमुच्यते ॥ ८३ ॥

पुरुषायापोहिष्ठेति दद्यादाचमनं पुनः ।
योगे योगेति सत्याय दद्यादेवं तु मन्त्रवित् ॥ ८४ ॥

अच्युताय समानेति पवित्रं त इति ब्रुवन् ।
अनिरुद्धाय संदद्याद्धस्ते वै दक्षिणे क्रमात् ॥ ८५ ॥

तद्विष्णोः परमं चेति दैविकं पुष्पमेव वै ।
इमाः सुमनस इत्युक्त्वा पुष्पं दद्याच्च मूर्तिभिः ॥ ८६ ॥

तद्विप्रासं समुच्चार्य चन्दनादिसुगन्धि च ।
इमे गन्धेति गन्धं च नाभेरूर्ध्वं प्रलेपयेत् ॥ ८७ ॥

प्राण्यङ्गादिपुरीषं च गन्धं यत्नेन वर्जयेत् ।
धूपितं चन्दनाद्यैश्च तद्विप्रास इति ब्रुवन् ॥ ८८ ॥

बृहस्पतीति चोक्त्वा तु धूपं दद्याच्चतुर्दिशम् ।
घृताद्दीपं तु तैलाद्वा विष्णोः कर्माणि चेति च ॥ ८९ ॥

शुभ्रा ज्योतिरिति प्रोच्य दीपं सन्दर्शयेत्तथा ।
अग्निरिन्द्रेति चोक्त्वा तु चार्घ्यं तत्राऽभिमृश्य च ॥ ९० ॥

लिर्देव इति मन्त्रेण चेन्द्रियाणीति चोच्चरन् ।
मधुपर्कवदर्घ्यं च विष्णवे संनिवेदयेत् ॥ ९१ ॥

पञ्चमूर्तिविधानं चेत्पञ्चानां च पृथक् पृथक् ।
हिरण्यगर्भ इत्युक्त्वा पुरुषाय प्रदीयते ॥ ९२ ॥

इदमापः शिवायेति सत्यायार्घ्यं निवेदयेत् ।
अच्युताय प्रदातव्यं विष्णुगायत्र्या तथा ॥ ९३ ॥

कयान इति मन्त्रेण चानिरुद्धाय दीयताम् ।
पूर्वोक्तेनैव मन्त्रेण दद्यादाचमनीयकम् ॥ ९४ ॥

इषेत्वोर्जेति मन्त्रेण स्नानायाभ्युक्षणं चरेत् ।
मित्रः सुपर्ण इत्युक्त्वा स्नोतं दद्यात्समन्त्रकम् ॥ ९५ ॥

तेजोवत्सव इत्युक्त्वा वस्त्रं देवाय दीयताम् ।
उत्तरीयं ददेदश्वात्सोमस्येति ब्रुवंस्ततः ॥ ९६ ॥

भूतो भूतेष्विति जपन् दद्याद्वै भूषणं बुधः ।
अग्निं दूतेत्युपवीतं ददेद्देवाय मन्त्रतः ॥ ९७ ॥

पूर्वोक्तेन विधानेन पाद्यमाचमनं पुनः ।
पुष्पं गन्धं तथा धूपं दीपं चाचमनं ददेत् ॥ ९८ ॥

अथावनीदमित्युक्त्वा देवस्याभिमुखं नयेत् ।
अर्चापीठस्य चासन्ने मण्डलं चोपलिप्य च ॥ ९९ ॥

हविःपात्रं समादाय प्रक्षाल्याचमनं चरेत् ।
आदित्यं भास्करं चैव सूर्यं मार्ताण्डमेव च ॥ १०० ॥

पात्राणामधिदैवत्यं विवस्वन्तं च वै पुनः ।
तस्मिन्नादित्यमभ्यर्च्य पुष्पादीनि विशोध्य च ॥ १०१ ॥

घृतेन देवस्य त्वेति स्थाल्यां पात्रेऽभिघार्य च ।
अमृतोपस्तरेत्युक्त्वा विष्णोरिदमिति स्मरन् ॥ १०२ ॥

अप्यादाय हविः पात्रे त्रिभागं प्रक्षिपेत्ततः ।
स्थालीशेषं चतुर्थांशं देवस्य न निवेदयेत् ॥ १०३ ॥

परिषद्बलिहोमार्थं पात्रशेषं तु वाहरेत् ।
उपदंशान् गुडादींश्च गायत्र्यान्यहवींषि च ॥ १०४ ॥

प्रमुखे च हविःपूर्णं पात्रं तन्मण्डले न्यसेत् ।
अभिमृश्यान्नसूक्तेन फलैर्दध्ना समायुतम् ॥ १०५ ॥

यत्ते सुशीम इत्युक्त्वा हविषि स्रावयेत् घृतम् ।
परिषिच्य ततश्चाद्भिः प्रणवेन समाहितः ॥ १०६ ॥

तदस्य प्रियमित्युक्त्वा सुभूः स्वयमिति ब्रुवन् ।
भक्त्या हवींषि सर्वाणि विष्णवे संनिवेदयेत् ॥ १०७ ॥

पञ्चमूर्तिक्रमात्तत्र पुरुषादीन् निवेदयेत् ।
हिरण्यगर्भ इत्युक्त्वा पायसं पुरुषाय च ॥ १०८ ॥

इह पुष्टिं समुच्चार्य सत्याय कृसरं ददेत् ।
समाववर्तीत्युक्त्वा तु गौल्यं चैवाच्युताय च ॥ १०९ ॥

यावकं चानिरुद्धाय तत्त्वीण्युक्त्वा निवेदयेत् ।
अलाभे पायसादीनां हविर्लब्धं तथा ददेत् ॥ ११० ॥

स्नपनस्योत्सवस्यापि हविर्लब्धं निवेदयेत् ।
देवीभ्यां च निवेद्यैव जुहुयान्मूर्तिहोमकम् ॥ १११ ॥

दक्षिणे तु विमानस्य कुण्डे चौपासनाह्वये ।
परिषिच्य च चुल्ल्यां वा चरुणा सघृतेन च ॥ ११२ ॥

ध्यायन्नेव च देवेशमतो देवादिभिर्यजेत् ।
मूर्तिमन्त्रैश्च हविषा देवीभ्यां च सहैव तु ॥ ११३ ॥

तदालयस्थदेवानां मूर्तिमन्त्रैर्यजेत्क्रमात् ।
देवस्य देव्योर्मुन्योश्च ब्रह्मशम्भ्वोश्च मध्यमे ॥ ११४ ॥

देवदेवस्य देव्योश्च जुहुयादधमे तथा ।
पुनश्च परिषिच्याद्भिरुपतिष्ठेत पावकम् ॥ ११५ ॥

पुष्पोदनोदकैरेवं बलिं पश्चात्प्रदापयेत् ।
धूपदीपसमायुक्तं वाद्यघोषसमन्वितम् ॥ ११६ ॥

प्रथमद्वारपालेभ्यो विमानपालेभ्य एव च ।
यद्दिग्द्वारं विमानस्य तद्दिक्पूर्वं बलिं ददेत् ॥ ११७ ॥

दिग्देवेभ्योऽनपायिभ्यस्तत्तन्नाम्ना बलिं क्षिपेत् ।
पाद्यमाचमनीयं च पुष्पं गन्धं तथैव च ॥ ११८ ॥

धूपं दीपं च तत्रैव बलिं दत्त्वोदकं ददेत् ।
अथवाऽप्युदकं पुष्पं बलिं दत्त्वोदकं ददेत् ॥ ११९ ॥

बलिशेषं समादाय भूतपीठे विनिक्षिपेत् ।
सर्वत्र बलिदानं तु नम्रकायः करोति वै ॥ १२० ॥

पश्चादाचम्य मन्त्रेण देवागारं ततो विशेत् ।
पानीयं च ततो दद्यादिदं विष्णुरिति ब्रुवन् ॥ १२१ ॥

शोधयित्वा निवेद्यं तु दद्यादाचमनीयकम् ।
क्रमुकानां फलैर्युक्तं कर्पूराद्यैः सुसंयुतम् ॥ १२२ ॥

विचक्रमेति चोक्त्वा तु घृतात्परीति च ब्रुवन् ।
ताम्बूलं मुखवासं च देवेशाय निवेदयेत् ॥ १२३ ॥

द्रव्यं प्रति विशेषेण घण्टां सन्ताड्य चार्पयेत् ।
नमस्कृत्य नमस्कृत्य तत्तद्द्रव्यं ददेत्पुनः ॥ १२४ ॥

बलिं पात्रे सुनिक्षिप्य देवेशमनुमान्य च ।
पूर्वोक्तविधिसंयुक्तमगारे स्यात्प्रदक्षिणम् ॥ १२५ ॥

अतो देवादि मन्त्रेण प्रणामं पञ्चधा भवेत् ।
स्तुत्वा पुरुषसूक्तेन विष्णुसूक्तेन वीक्षयेत् ॥ १२६ ॥

सहस्रशीर्षं देवमिति सम्यग् जपेत्पुनः ।
नमो ब्रह्मण इत्युक्त्वा दद्यात्पुष्पाञ्जलिं पुनः ॥ १२७ ॥

नृत्तगीतयुतं यत्तदुत्तमोत्तममुच्यते ।
प्रातरेवं समभ्यर्च्य मध्याह्ने सायमेव च ॥ १२८ ॥

प्रातर्न्यस्तानि पुष्पाणि नोदस्यैव तदूर्ध्वतः ।
पुष्पन्यासश्च कर्तव्यः पूर्वोक्तेन क्रमेण च ॥ १२९ ॥

पुष्पाणि पुष्पदामानि देवबिम्बेऽर्चितानि च ।
आदाय बेरात्पीठाधो यथास्पृश्यं क्षिपेत्तथा ॥ १३० ॥

धात्रादीनर्चयित्वैव पूर्वोक्तेन विधानतः ।
पाद्याद्यैरर्चयेद्देवं विधिनाऽनेन नित्यशः ॥ १३१ ॥
उदयादथ मध्याह्नात्तथैवास्तमयाद्रवेः ।
नाड्यस्तिस्रोऽथवा पञ्च सप्त वा काल उच्यते ॥ १३२ ॥
अर्धरात्रोदितामर्चां यामादूर्ध्वं समाचरेत् ।
देवेशमन्त्यवेलायामर्चयित्वा तु कौतुकम् ॥ १३३ ॥
स्नपनादौत्सवाद्बिम्बाद् ध्रुववेरे तथैव च ।
देवमारोपयेन्नित्यमर्चनान्ते विशेषतः ॥ १३४ ॥
यथैवाहन्यहन्याद्यमग्निं होमान्त एव च ।
गमयेद्गार्हपत्याग्नौ यथा सम्यक् समाहितः ॥ १३५ ॥
मनसा ध्रुववेरे च देवमारोपयेत्क्रमात् ।
केवलैर्नाममन्त्रैस्तु परिवारान् समर्चयेत् ॥ १३६ ॥
उक्तकाले तु सम्पूर्णे कवाटं बन्धयेत्पुनः ।
उद्घाटनमकाले तु न कुर्यादिति शासनम् ॥ १३७ ॥
उद्घाटनमकाले तु देवदेवस्य दर्शनम् ।
ग्रामनाशं च दुर्भिक्षं राजा राष्ट्रं विनश्यति ॥ १३८ ॥
अन्येन विधिना मन्त्रैरन्यैरन्यार्चकेन वा ।
आलये त्वर्चनं स्याच्चेन्महान् दोषो भवेत्ततः ॥ १३९ ॥
अनेनैव विधानेन कारयेदर्चनं बुधः ।
अथवा सूत्रकारोक्तमार्गेणैवार्चनं चरेत् ॥ १४० ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे नित्यार्चनविधि-
र्नाम चत्वारिंशोऽध्यायः ॥

---

# एकचत्वारिंशोऽध्यायः ॥



अथातः संप्रवक्ष्यामि पञ्चमूर्त्यर्चनाक्रमम् ।
विष्णुं च पुरुषं सत्यमच्युतं चानिरुद्धकम् ॥ १ ॥

पूर्वोक्तविधिना मन्त्रैर्योजयित्वा समर्चयेत् ।
चातुर्वर्ण्यसमृद्ध्यर्थं चतुर्मूर्तिसमायुतम् ॥ २ ॥

पञ्चमूर्तिभिरेवैनमादिमूर्तिं समर्चयेत् ।
श्रियं चैव धृतिं चैव पवित्रीं च विधानतः ॥ ३ ॥

श्रीदेवीमर्चयेदेवं प्रमोदाधायिनीमिति ।
हरिणीं पौष्णीं क्षोणीं च महीमिति महीं क्रमात् ॥ ४ ॥

चिरायुषं मार्कण्डेयं रौहिणेयमुदग्रिणम् ।
दक्षिणे मार्कण्डेयं च वामपार्श्वे तथैव च ॥ ५ ॥

पद्मापितरं धातृनाथं ख्यातीशं भृगुमित्यपि ।
भृगुमर्चकमभ्यर्च्य द्वारपालांस्ततः क्रमात् ॥ ६ ॥

तुहणं दैत्यराजं च विष्णुभक्तं गदाधरम् ।
दैतेयं च महावीर्यं वलिन्दं वृक्षपाणिनम् ॥ ७ ॥

अभ्यर्च्य प्रथमे द्वारे शेषं पूर्ववदाचरेत् ।
एष मध्यतले विष्णोरादिमूर्त्यर्चनाविधिः ॥ ८ ॥

चातुर्वर्ण्यसमृद्ध्यर्थं चतुर्मूर्तिभिरेव वै ।
सर्वान् देवांश्च सर्वत्र विधिना सम्यगर्चयेत् ॥ ९ ॥

पुरुषं पुरुषात्मानं परं पुरुषमित्यपि ।
तथा धर्ममयं चेति पुरुषं सम्यगर्चयेत् ॥ १० ॥

श्रियं च कमलां चेति पुरुषस्य प्रियामिति ।
अनन्तामिति देवस्य देव्यौ दक्षिणवामयोः ॥ ११ ॥

मेदिनीं धरणीमुर्वीं सर्वाधारामिति क्रमात् ।
भृगुं मुनिवरं शुद्धमग्निवर्णं तपोमयम् ॥ १२ ॥

पुराणं भक्तिमन्तं च भार्गवं चिरजीविनम् ।
अर्चकावर्चयेद्देवं देवदक्षिणवामयोः ॥ १३ ॥

शङ्खं निधिवरं चेति धनदस्य मुखं तथा ।
मौक्तिकोद्भवमित्युक्त्वा शङ्खं दक्षिणतोऽर्चयेत् ॥ १४ ॥

पद्मनिधिं वरं चेति रत्नाङ्गं भूतनायकम् ।
वामे पद्मनिधिं चैव प्राग्द्वारे सम्यगर्चयेत् ॥ १५ ॥

सत्यं सत्यात्मकं ज्ञानं सर्वसंहारमित्यपि ।
सत्यमूर्तिं समभ्यर्च्य धृतिं चैव क्षमामिति ॥ १६ ॥

दक्षसुतां सत्यपत्नीं देवीमिति श्रियं पुनः ।
पौष्णीं च वरदामुर्वीं पृथिवीमिति तां महीम् ॥ १७ ॥

धातृनाथं भूतनाथं ब्रह्मसंभवमित्यपि ।
वाग्देवीपतिमित्येवमर्चयेदर्चकं मुनिम् ॥ १८ ॥

पुण्यं विशुद्धं विश्वं च वसिष्ठमिति च क्रमात् ।
सत्यमूर्त्यात्मकं चेति वामभागे समर्चयेत् ॥ १९ ॥

शङ्खचूलं वृक्षदण्डं श्वेताङ्गं घोररूपिणम् ।
चक्रचूलं महानादमुग्ररूपं भयानकम् ॥ २० ॥

इत्येवं द्वारपालौ द्वावर्चयेत्पार्श्वयोर्बुधः ।
अच्युतं चापरिमितमैश्वर्यं श्रीपतिं तथा ॥ २१ ॥

इत्येवमच्युतं देवं मूर्तिमन्त्रैः समर्चयेत् ।
पवित्रीमिन्दिरां चेति लक्ष्मीं चाप्यच्युतप्रियाम् ॥ २२ ॥

पवित्रीमेवमभ्यर्च्य क्षोणीं वराङ्गिणीमिति ।
वरदां पुण्यदायिनीमिति क्षोणीं समर्चयेत् ॥ २३ ॥

ख्यातीशं च तपोनाथममृतयोनिं मुनिं तथा ।
सिताङ्गमुग्रतपसं चिरायुषमनन्तकम् ॥ २४ ॥

अच्युतस्यार्चकानेतावर्चयेत मुनी पुनः ।
द्वारे शङ्खनिधिं चैव तथा पद्मनिधिं क्रमात् ॥ २५ ॥

पूर्वोक्तैर्मूर्तिमन्त्रैश्च द्वारपालौ समर्चयेत् ।
अनिरुद्धं महान्तं च वैराग्यमिति च क्रमात् ॥ २६ ॥

सर्वतेजोमयं चेति पूजयेदनिरुद्धकम् ।
प्रमोदाधायिनीं वरारोहामब्धिकन्यां च मामिति ॥ २७ ॥

प्रमोदाधायिनीमभ्यर्च्य महीं गां पृथुलां ध्रुवाम् ।
इत्येवं च महीं देवीमर्चयेद्देवपार्श्वयोः ॥ २८ ॥

भृगुं तपोनिधिं चेति देवरूपं महौजसम् ।
एतैर्भृगुं समभ्यर्च्य मार्कण्डेयं महामुनिम् ॥ २९ ॥

सत्त्वं च पुण्यभावं च मार्कण्डेयं तथार्चयेत् ।
तद्द्वारे शङ्खचूळं च चक्रचूळं च पूर्ववत् ॥ ३० ॥

यथोक्तानन्यदेवांश्च धात्रादींश्च यथाविधि ।
मूर्तिमन्त्रैश्च पूर्वोक्तैरर्चयेत्तान्यथोदितैः ॥ ३१ ॥

शयनं चेदूर्ध्वतले पुराणपुरुषस्य तु ।
अर्चयेच्छयनं देवं मूर्तिमन्त्रैर्यथाविधि ॥ ३२ ॥

नाभ्यम्बुजे समासीनं ब्रह्माणं च यथाक्रमम् ।
श्रियं महीं पुराणं च भृगुं पूर्वोक्तमूर्तिभिः ॥ ३३ ॥

विष्वक्सेनं च गरुडं पूर्ववद्विधिनाऽर्चयेत् ।
नारसिंहप्रतिष्ठा चेदर्चयेन्नारसिंहकम् ॥ ३४ ॥

नारसिंहं तपोनाथं महाविष्णुं महाबलम् ।
इत्येवं नारसिंहं च देवमभ्यर्चयेद्बुधः ॥ ३५ ॥

विरिञ्चिं वरदं चेति ब्रह्माणं पद्मसम्भवम् ।
इति ब्रह्माणमभ्यर्च्य रुद्रं त्र्यम्बकमुच्चरन् ॥ ३६ ॥

शर्वं गौरीशमित्युक्त्वा रुद्रमभ्यर्चयेत्क्रमात् ।
यमं सुतं बुधं शुद्धं भाविनात्मानमित्यपि ॥ ३७ ॥

तीर्थं च पावनं चेति मन्त्रसिद्धिं महामुनिम् ।
इत्यर्चेन्मुनींस्तांश्च भूतेशं सुमतिं तथा ॥ ३८ ॥

शैषिकं चेति सेनान्यमिति सेनेशमर्चयेत् ।
एष एव विशेषः स्यादन्यत्पूर्ववदाचरेत् ॥ ३९ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे पञ्चमूर्त्यर्चनाविधिर्नामैकचत्वारिंशोऽध्यायः ॥

---

# द्विचत्वारिंशोऽध्यायः



अतःपरं प्रवक्ष्यामि नित्यसन्ध्याबलिक्रमम् ।
सौवर्णं राजतं ताम्रं कांस्यं वाथ स्वशक्तितः ॥ १ ॥

गृहीतव्यं शतपलैः पञ्चाशद्भिः पलैस्तु वा ।
कारयेद्बलिपालं च विधिनाऽनेन शक्तितः ॥ २ ॥

भुवङ्गस्यार्धविस्तारं त्रितालं वाऽथ विस्तृतम् ।
आयामं च समं वृत्तं परितोऽङ्गुलभित्तिकम् ॥ ३ ॥

तत्सीमार्धाङ्गुलं ज्ञेयं पालमध्ये सकर्णिकम् ।
कर्णिकाष्टाङ्गुलायामा सुवृतार्धाङ्गुलोन्नता ॥ ४ ॥

परितः प्रवणा चैव विष्वगष्टदलावृता ।
तदूर्ध्वे मध्यमे कार्यं मण्डलं तावदुन्नतम् ॥ ५ ॥

विमलैस्तण्डुलैरन्नं सम्यक् प्रस्थाधिकैः पचेत् ।
प्रक्षाल्य बलिपात्रं तु तन्मध्ये सूर्यमण्डलम् ॥ ६ ॥

ध्यात्वा तथाऽर्चयेत्तस्मिन् भास्करं निजमूर्तिभिः ।
प्रक्षाल्य च पुनः पालं तदन्नं तत्र निक्षिपेत् ॥ ७ ॥

पिण्डाकारं तु तत्कार्यमभिघार्य घृतेन वै ।
किञ्चित्फुल्लाम्बुजाकारं द्वादशाङ्गुलमुच्छ्रितम् ॥ ८ ॥

दशाङ्गुलं द्विभागं वा नाहमग्रे तु तत्समम् ।
मूले तद्द्विगुणं विद्यादानुपूर्व्या शीकृतम् ॥ ९ ॥

तत्पात्रं तु समादाय कौतुकस्याग्रतो न्यसेत् ।
दीपाद्दीपमिवावाह्य तस्मिन् वै कौतुकाद्विभुम् ॥ १० ॥

अर्घ्यान्तमर्चयित्वा तु पुष्पाणि परितः क्षिपेत् ।
श्रीभूतन्यक्षयोर्मध्ये तिष्ठन्तं साञ्जलिं गुरुः ॥ ११ ॥

अलङ्कृत्योत्तरीयाद्यैः सोष्णीषं बलिवाहकम् ।
तमेव गरुडं ध्यात्वा तन्मूर्तिभिरथार्चयेत् ॥ १२ ॥

प्रणम्य देवदेवेशं घण्टां संताड्य वै ततः ।
उद्यन्तमिति मन्त्रेण बलिमुद्धृत्य वै बुधः ॥ १३ ॥

बृहस्पतीति चोक्त्वा तु बलिं तच्छिरसि न्यसेत् ।
शिष्यो गरुडमात्मानं ध्यात्वाहृत्य बलिं तथा ॥ १४ ॥

प्रतद्विष्णुस्तवतेत्युक्त्वा प्रदक्षिणमथाचरेत् ।
पुरतो बलिबिम्बं च नयेदिति च केचन ॥ १५ ॥

अथवा पात्रमाराध्य बलिद्रव्यं समाक्षिपेत् ।
तदूर्ध्वे बलिबिम्बं च न्यसेत्कुर्यात्प्रदक्षिणम् ॥ १६ ॥

पिधानादिभिराच्छाद्य व्यजनैरुपवीज्य च ।
वाद्यघोषसमायुक्तं धूपदीपसमन्वितम् ॥ १७ ॥

प्रदक्षिणमथैकैकं कारयेत्प्रतिचूलिकम् ।
गरुडेन युतं वाथ वृत्तपीठयुतं तु वा ॥ १८ ॥

प्रथमावरणे चैकं द्वितीये द्विप्रदक्षिणम् ।
कारयेदथवा तत्र प्रथमे तु प्रदक्षिणम् ॥ १९ ॥

त्रिः कृत्वा गरुडस्याग्रे तिष्ठन् देवेशमव्ययम् ।
कौतुके तु समारोप्य मनसैव विचिन्तयेत् ॥ २० ॥

विष्वक्सेनं समासाद्य नमस्कृत्याऽनुमान्य च ।
खण्डयित्वा तु बल्यग्रं पृष्ठे तस्यालयस्य वै ॥ २१ ॥

चरत्यै देवतायै च पूतनायै यथाक्रमम् ।
तथैव पापरक्षोध्न्यै स्थित्वा ताभ्यो बलिं क्षिपेत् ॥ २२ ॥

पश्चात्तद्बलिशेषं तद्भूतपीठे परिन्यसेत् ।
पादौ प्रक्षाल्य चाचम्य प्रविशेदालयं बुधः ॥ २३ ॥

प्रातर्मध्याह्नयोरेवं सायं चान्नबलिं चरेत् ।
एवमन्नबलिं कुर्यात् त्रिकालं चोत्तमोत्तमम् ॥ २४ ॥

द्विकालं मध्यमं मार्गं चैककालं तथाधमम् ।
प्रातर्मध्याह्नयोरेवमन्नयुक्तं बलिं चरेत् ॥ २५ ॥

सायं त्वर्घ्यबलिं कुर्यादुत्तमं मार्गमाश्रितः ।
प्रातरर्घ्यबलिं कुर्यान्मध्याह्ने त्वन्नसंयुतम् ॥ २६ ॥

सायमर्घ्यबलिं कुर्यान्मध्यमं मार्गमाश्रितः ।
नाधमे तु बलिं कुर्यादिति केचिद्वदन्ति वै ॥ २७ ॥

यथार्घ्यबलिरुद्दिष्टः पाले सोमं तथार्चयेत् ।
देवादीनां नृणां चैव बलं यस्मात्प्रवर्धते ॥ २८ ॥

तस्माद्बलिरिति प्रोक्तः सर्वभूतहितावहः ।
बलिभ्रमणकालेऽस्मिन् येऽनुगच्छन्ति भक्तितः ॥ २९ ॥
पदे पदे यज्ञशतफलं तेऽपि समाप्नुयुः ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे बलिविधिर्नाम

द्विचत्वारिंशोऽध्यायः

---

# त्रिचत्वारिंशोऽध्यायः



अथार्चनोपचारश्च तस्य भेदश्च वक्ष्यते ।
समूर्तमर्चनं नित्यं विग्रहैरष्टभिः स्मृतम् ॥ १ ॥

अर्चनार्थं विशेषेण ग्रहणाद्विग्रहः स्मृतः ।
देवोपचारहेतुत्वादुपचारः प्रकीर्तितः ॥ २ ॥

एकविग्रहमाद्यं तु द्वितीयं स्यात् द्विविग्रहम् ।
षड्विग्रहं तृतीयं स्याच्चतुर्थं चाष्टविग्रहम् ॥ ३ ॥

एकादशोपचारं च सप्तविंशतिविग्रहम् ।
नवविंशतिकं चैव द्वात्रिंशद्विग्रहं तथा ॥ ४ ॥

आवाहनं तु सर्वेषां सामान्यं पूर्वमेव तत् ।
तेषामन्ते विसर्गं तु तथा सामान्यमेव वै ॥ ५ ॥

ताभ्यां विनैव संख्यातमासनं स्वागतं तथा ।
अनुमानं च पाद्यं च तथाचमनमेव च ॥ ६ ॥

पुष्पं गन्धं तथा धूपं दीपार्घ्याचमनानि च ।
स्नानं प्लोतं ततो वस्त्रमुत्तरीयं च भूषणम् ॥ ७ ॥

यज्ञोपवीतं च ततः पाद्यमाचमनं तथा ।
पुष्पं गन्धं तथा धूपं दीपमाचमनं पुनः ॥ ८ ॥

हविस्तथैव पानीयं तथैवाचमनं पुनः ।
मुखवासवलिश्चापि प्रणामस्तुतिरेव च ॥ ९ ॥

पुष्पाञ्जलिश्च तैर्युक्तं द्वात्रिंशद्विग्रहं स्मृतम् ।
आसनाद्यं च बल्यन्तं नवविंशतिविग्रमः ॥ १० ॥

हविराचमनान्तं तु सप्तविंशतिविग्रहम् ।
तथार्घ्याचमनान्तं यत्तदेकादशविग्रहम् ॥ ११ ॥

एतदावाहनेनापि विसर्गेण च संयुतम् ।
त्रयोदशोपचारं च वदन्त्येवं पुरातनाः ॥ १२ ॥

तथार्घ्याचमनान्तं च पाद्याद्यं चाष्टविग्रहम् ।
षड्विग्रहं तु पुष्पाद्यं तथार्घ्याचमनान्तकम् ॥ १३ ॥

केवलं पुष्पदानं च प्रणामं च द्विविग्रहम् ।
एक एव प्रणामश्चेदेकविग्रहमुच्यते ॥ १४ ॥

अशक्तानामिति प्रोक्तौ मुनिभिर्द्व्येकविग्रहौ ।
होमाधारेऽर्चनं स्याच्चेत् षड्विग्रहमिति स्मृतम् ॥ १५ ॥

कलशैः स्नपनं कुर्यादर्चनं त्वष्टविग्रहम् ।
एकादशोपचारं तु हविर्हीनार्चने सदा ॥ १६ ॥

लब्धे हविषि सर्वत्र सप्तविंशतिविग्रहम् ।
विमानार्चनमेवं स्यान्नवविंशतिविग्रहम् ॥ १७ ॥

द्वात्रिंशद्विग्रहं चापि कुर्यात्तत्रैव बुद्धिमान् ।
तं देवं मनसा ध्यात्वा स्वमूर्धन्यञ्जलिं न्यसेत् ॥ १८ ॥

मस्तिष्कमिति विज्ञेयो हृदयेऽञ्जलिसम्पुटः ।
संन्यसेत्तत्प्रणामस्तु सम्पुटः समुदाहृतः ॥ १९ ॥

साञ्जलिर्नतकायस्य प्रह्वाङ्ग इति गीयते ।
पाणिं व्यत्यस्य बध्वैव स्वस्तिबन्धनमेव वा ॥ २० ॥

पादाङ्गुलिभ्यां जानुभ्यां ललाटेनावनिं स्पृशेत् ।
पञ्चाङ्ग इति विज्ञेयः पञ्चाङ्गैः करणादधः ॥ २१ ॥

अञ्जलिं सम्प्रसार्यैवं सम्यग् ध्यानपरायणः ।
भूम्यां च दण्डवच्छेते प्रणामो दण्ड उच्यते ॥ २२ ॥

पत्रं पुष्पं फलं तोयमङ्कुरं बीजमेव वा ।
गृहीत्वा विसृजेद्भक्त्या विष्णवे नम इत्यपि ॥ २३ ॥

नमस्कारं तथा कुर्याद्द्विविग्रहमिति स्मृतम् ।
आवाहनविसर्गौ च नैतयोरिति केचन ॥ २४ ॥

विमानार्चनमुक्तं तत्सामान्यमभिधीयते ।
द्वादशं तलमुद्दिश्य यत्र यत्र तले तले ॥ २५ ॥

तलमुद्दिश्य यत्प्रोक्तं विश्वजित्पूजनं तु तत् ।
उत्तमोत्तमपूजायां यजमानस्य नित्यशः ॥ २६ ॥

आलये वा गृहे वापि स्थण्डिले वाऽथ जङ्गमे ।
इदमेव यथा प्रोक्तं सामान्यं मुनिसत्तमाः ॥ २७ ॥

अर्चनायां तु तत्प्रोक्तं यस्य तस्य विशेषतः ।
प्रथमं तु समालोक्य पूजयेन्नित्यमेव तु ॥ २८ ॥

समूर्ता त्रिविधा ज्ञेया बिम्बकूर्चजलेष्वथ ।
कूर्चे वै बिम्बवद् ध्यात्वातत्तद्बेर विधानतः ॥ २९ ॥

उत्तमा बेरपूजा स्यान्मध्यमं कूर्चपूजनम् ।
अधमा जलपूजेति प्राह पूर्वं पितामहः ॥ ३० ॥

अबिम्बपूजने रूपं चतुरङ्गुलमुन्नतम् ।
सर्वाधिष्ठानकं देवं पद्मस्थं ध्यानगोचरम् ॥ ३१ ॥

सर्वावयवसम्पूर्णं पीतवर्णं चतुर्भुजम् ।
शुकपिञ्छाम्बरधरं विष्णुं प्रणवरूपकम् ॥ ३२ ॥

एवं ध्यात्वा तु कूर्चे वै पद्ममध्यस्थमर्चयेत् ।
षडङ्गुलादहीनं तु बिम्बपूजनमाचरेत् ॥ ३३ ॥

भूमिर्देवालयं रूपमर्चनं च तथैव च ।
प्रतिष्ठावाहनं चैव मन्त्रद्रव्याणि सर्वशः ॥ ३४ ॥

विधिरर्चाप्रयोगश्च भक्तिरेषां पुरःसरा ।
एवं दशभिः संपूर्णा ह्यर्चना सकला भवेत् ॥ ३५ ॥

येऽर्चयन्ति सदा भक्त्या ते विष्णोः पदमाप्नुयुः ।
स्नात्वा सन्ध्यामुपास्यैव तर्पयित्वा विधानतः ॥ ३६ ॥

नित्यकर्माणि कृत्वैव विष्णोरर्चनमारभेत् ।
प्रातः सर्वत्र निर्माल्यं सर्वं संशोध्य यत्नतः ॥ ३७ ॥

पञ्चगव्यैरथाद्भिर्वा प्रोक्षयित्वोपलिप्य च ।
अर्चनार्थानि द्रव्याणि सर्वाण्यपि च शोधयेत् ॥ ३८ ॥

कौतुके स्नापनं कुर्यान्नित्यं वै चन्दनादिभिः ।
कुर्याद्यत्नादशक्तोऽपि विष्णुपञ्चदिनेष्वथ ॥ ३९ ॥

न कुर्याच्चेन्महादोषो भवेदिति न संशयः ।
ताम्रेण कौतुकं चेत्तदाम्लेन परिशोधयेत् ॥ ४० ॥

यस्य यस्य यथा शुद्धिस्तत्तद्द्रव्येण शोधयेत् ।
आधावेन च शुद्धेन बिम्बं संशोधयेत्पुनः ॥ ४१ ॥

पश्चान्मन्त्रेण संप्रोक्ष्य स्नापयेच्चन्दनोदकैः ।
धौतवस्त्रेण शुद्धेन तं बिम्बं विमृजेत्पुनः ॥ ४२ ॥

बहिरेवं तु संस्नाप्य पुनरन्तः प्रवेशयेत् ।
प्रतद्विष्णुस्तवत इति चोद्धृतां प्रतिमां पुनः ॥ ४३ ॥

तन्मन्त्रेणार्चनापीठे स्थापयेत्प्रतिमां तथा ।
धौतेनैव च वस्त्रेण देवेशं परिधापयेत् ॥ ४४ ॥

रूपे तु स्नापनं कुर्यादरूपे प्रोक्षणं चरेत् ।
वणयुक्ते ध्रुवस्थाने न कुर्यादिति शासनम् ॥ ४५ ॥

आवाहनादिकं चापि विसर्गान्तं तथैव च ।
अर्चनासंप्रयोगं च वक्ष्यतेऽत्र यथाक्रमम् ॥ ४६ ॥

प्रणिधिं संप्रपूर्यैव कूर्चयुक्त जलेन वै ।
पुष्पाक्षतसमायुक्तं पाणिभ्यामुद्धरेत्स्मरन् ॥ ४७ ॥

सर्वत्र व्यापिनं विष्णुं सर्वात्मकमरूपिणम् ।
निष्कलं निर्मलं देवं तेजोभासुरभाविनम् ॥ ४८ ॥

मथित्वा ध्यानमन्थेन तत्प्रणिध्यां निवेशयेत् ।
कूर्चेनैव च तद्वारि गृहीत्वा ध्यानमास्थितः ॥ ४९ ॥

बिम्बस्य मूर्ध्नि तत्तोयं विसृजेत्प्राण इत्युत ।
निष्कलं सकलं ध्यानं सकलीकरणमुत्तमम् ॥ ५० ॥

सर्वावयवसंपूर्णं परिषट्कं गुणाकरम् ।
सकलं चेति विज्ञेयं सकलेशार्चना भवेत् ॥ ५१ ॥

आवाहनं द्विधा प्रोक्तमचले च चले तथा ।
अचले पूर्वमावाह्य तस्मादावाहयेच्चले ॥ ५२ ॥

आवाहनविसर्गौ तु जङ्गमे परिकीर्तितौ ।
ध्रुवार्चना च यत्रैका तौ न स्यातामिति स्थितिः ॥ ५३ ॥

त्रिकालमर्चनायुक्ते एकदावाहनं चरेत् ।
अन्त्यवेलार्चनायां वा विसर्जनमथाचरेत् ॥ ५४ ॥

स्थण्डिलेचाप्सु चावाह्य चार्चयित्वा यथाक्रमम् ।
अर्चनान्ते यथाकाले तस्मिन्नेव विसर्जयेत् ॥ ५५ ॥

पीठान्ते पुष्पसंयुक्तमासनं परिकल्पयेत् ।
तस्मिन् पुष्पासने देवं त्वास्यतामिति तत्र वै ॥ ५६ ॥

स्वागतं मन्त्रसंयुक्तं सुमुखीकरणं विदुः ।
एतत्कर्म क्षमस्वेति याचनं चानुमानकम् ॥ ५७ ॥

पादयोर्जलमास्राव्यं पादप्रक्षालनं प्रति ।
शङ्खाग्रेण कुशाग्रेण कूर्चेनैवाथवा पुनः ॥ ५८ ॥

मन्त्रेण पादयोर्दत्तमाधावं पाद्यमुच्यते ।
तत्पाद्यतीर्थमादाय भक्त्या देवमनुस्मरन् ॥ ५९ ॥

आत्मानं प्रोक्षयेद्यस्तु सर्वपापैः प्रमुच्यते ।
गङ्गातोयेन तत्तुल्यं विष्णोः पादावसेचनात् ॥ ६० ॥

दद्याच्च दक्षिणे हस्ते तोयमाचमनीयकम् ।
मूर्ध्नि पुष्पं च संन्यस्य पादपीठे समन्ततः ॥ ६१ ॥

भुजे चक्रे च शङ्खे च पुष्पं दद्यात्समन्त्रकम् ।
मौलौ ललाटे कर्णे च हृदये भुजयोस्तथा ॥ ६२ ॥

गन्धावलेपनं कुर्यान्नाभेरूर्ध्वमथापि वा ।
चतुर्दिक्षु यथान्यायं धूपद्रव्येण धूपयेत् ॥ ६३ ॥

गुग्गुलुं वाऽगरुं वापि कोष्ठं वा चन्दनं घनम् ।
गुळं वा बिल्वधूपं वा घृतमिश्रं सुधूपयेत् ॥ ६४ ॥

सुगन्धि यद्यद् धूपं स्यात् द्रव्ययोगेन योजितम् ।
तत्तद्धूपमिति ख्यातं यथालाभं समाचरेत् ॥ ६५ ॥

दीपं तु दर्शयेत्पार्श्वे मूर्तिमन्त्रेण सर्वतः ।
पिचुवर्तिसमायुक्तं घृतं तैलमथापि वा ॥ ६६ ॥

त्रिकाङ्गुलोच्छ्रिता ज्वाला सामान्यं दीपमुच्यते ।
अधमे च तथा प्रोक्तं यथाशक्त्या विशेषतः ॥ ६७ ॥

अष्टाङ्गुलसमुत्सेधज्वालारूपमथोत्तरम् ।
अष्टाङ्गमर्घ्यमादाय चैकस्मिन्नेव संन्यसेत् ॥ ६८ ॥

अर्घ्यपात्राणि संगृह्य प्रक्षाल्य च समन्त्रकम् ।
अर्घ्यमेवं समभ्यर्च्य पुनः पात्राणि शोधयेत् ॥ ६९ ॥

पञ्चपात्रेष्वलभ्येषु पात्रमेकमथापि वा ।
पूरयेदर्घ्यद्रव्येण मनसा मन्त्रमुच्चरन् ॥ ७० ॥

सिद्धार्थकं कुशाग्राणि सतिलं तण्डुलैर्युतम् ।
दधिक्षीराम्बुसंमिश्रमर्घ्यं विद्यात्सहाक्षतम् ॥ ७१ ॥

यवसर्षपसव्रीहिमाषैस्तण्डुलमक्षतम् ।
अक्षतं प्रथमं क्षिप्त्वा पुनस्तण्डुलमेव च ॥ ७२ ॥

सिद्धार्थकान् तिलांश्चैव यथालाभं समाक्षिपेत् ।
कुशाग्राणि विनिक्षिप्य दध्ना क्षीरेण मिश्रयेत् ॥ ७३ ॥

अर्घ्यपात्राणि संगृह्य जलेन परिपूर्य च ।
समुद्धृत्य च पात्राणि तत्तन्मन्त्रैर्निवेदयेत् ॥ ७४ ॥

देवायार्घ्यं निवेद्यैव श्रीभूम्योश्च निवेदयेत् ।
अर्घ्यद्रव्यस्य चालाभे तोयेनैव निवेदयेत् ॥ ७५ ॥

पात्रालाभे तु कूर्चेन जलं संस्रावयेत्पुनः ।
तत्राप्याचमनं प्रोक्तं पूर्वोक्तेन क्रमेण वा ॥ ७६ ॥

स्नानार्थं प्रोक्षयेद्देवं मन्त्रेणैवाथ मन्त्रवित् ।
प्लोतवस्त्रेण संकल्प्य पुष्पैर्वापि तथाङ्कुरैः ॥ ७७ ॥

वस्त्रं दद्याद्यथान्यायं कुशैः पुष्पैस्तु वा पुनः ।
यद्यद्द्रव्यं च संकल्प्य तत्तद् ध्यात्वा ददेत्पुनः ॥ ७८ ॥

उत्तरीयं ददेत्पश्चादुपवीतेन संयुतम् ।
आभरणं प्रदातव्यं सौवर्णं पुष्पमेव तु ॥ ७९ ॥

मुक्तामणिमयैर्वापि पुष्पैरङ्गेषु योजयेत् ।
स्वर्णलोहमयं द्रव्यं न निर्माल्यं भवेदिति ॥ ८० ॥

प्रक्षाल्यैव प्रगृह्णीयात्तत्र तत्र विशेषतः ।
धातुभिः समलङ्कृत्य जातिहिङ्गुलिकादिभिः ॥ ८१ ॥

पुनः पाद्यादिकं दद्यात् दीपाद्याचमनान्तकम् ।
हविरित्येव जानीयाद् द्रोणं दोषविवर्जितम् ॥ ८२ ॥

तदधमाढकं वापि विष्णोरेव विशेषतः ।
एवं विधेर्हरस्यापि कविसूर्यकुमारयोः ॥ ८३ ॥

तदर्धमन्यदेवानां स्त्रीणामेव तदधकम् ।
परिवारकदेवानामाढकार्धं हविर्भवेत् ॥ ८४ ॥

पुरुषाशनं चरुं दद्यात्सर्वेषां तु विधानतः ।
नैमित्तिकं यथालाभं कुर्यादित्येव केचन ॥ ८५ ॥

अभिघार्य हविः पूर्वं पात्रंचैवाभिघार्य च ।
पात्रपूर्णं तु प्रक्षिप्य हविश्च घृतसंयुतम् ॥ ८६ ॥

पुष्पं च संन्यसेत्तस्मिन् मनसा मन्त्रमुच्चरन् ।
निवेदयेद्यथान्यायं प्रभूतं च निवेदयेत् ॥ ८७ ॥

सगुडं घृतसंयुक्तं सफलं व्यञ्जनैर्युतम् ।
पूर्णपात्रे गृहीत्वैव हविः सम्यङ्निवेदयेत् ॥ ८८ ॥

दत्त्वा दत्त्वा यथान्यायं नमस्कृत्य पुनः पुनः ।
अलाभे सर्वपात्राणामेकपात्रं निवेदयेत् ॥ ८९ ॥

स्थित्वा देवार्चनं कुर्यादासीनो वा यथार्हकम् ।
शयानो न च कुर्वीत भक्तिमांस्तत्कथंचन ॥ ९० ॥

एकजानुद्विजानु च ब्राह्मं चोत्कुटिकासनम् ।
चतुर्धा चासनं प्रोक्तमर्चनायां विशेषतः ॥ ९१ ॥

अर्चनायां तु सर्वेषामेकजानु विधीयते ।
द्विजानु स्नपने प्रोक्तं होमे ब्रह्मासनं चरेत् ॥ ९२ ॥

भोजने मूर्तिहोमे च कुर्यादुत्कुटिकासनम् ।
चतुरङ्गुलमुत्सेधं पीठमुत्कुटिकासने ॥ ९३ ॥

दक्षिणे वामपार्श्वे वा संविशेद्देवपार्श्वतः ।
सुप्रतीकं समाविश्य वार्चयेदिति शासनम् ॥ ९४ ॥

सुप्रतीकं समाविश्य स्थित्वा वा स्नापयेद्विभुम् ।
एवं समर्चयेद्विष्णुं ब्रह्माणं शङ्करं मुनी ॥ ९५ ॥

दिग्देवानन्यदेवांश्च श्रीदेव्याद्यास्तु देवताः ।
यस्य यस्य विधिः प्रोक्तस्तस्य मन्त्रैरुपास्थितम् ॥ ९६ ॥

तं निवेद्य यथान्यायं मूर्तिहोमश्च हूयताम् ।
नित्याग्निकुण्डे चुल्ल्यां वा परिषिच्य च पावकम् ॥ ९७ ॥

तन्मन्त्रेणैव हुत्वा तु मूर्तिमन्त्रैश्च हूयते ।
दद्याद्देवस्य पानीयं स्वादु वारि सुगन्धितम् ॥ ९८ ॥

दत्त्वा पश्चान्निवद्यं तु हविः पानीयमेव च ।
ततस्त्वाचमनं दद्यान्मुखवासं समन्त्रकम् ॥ ९९ ॥

ताम्बूलं मुखवासादि शुद्धद्रव्यं प्रदीयते ।
पूर्वमाचमनं दत्त्वा हविर्वा भक्ष्यमेव वा ॥ १०० ॥

निवेद्याचमनं दत्त्वा मुखवासं ददेत्पुनः ।
बलिं दत्त्वा समाराध्य देवेशमनुमान्य च ॥ १०१ ॥

देवालयं च बलिना कारयेच्च प्रदक्षिणम् ।
उक्तान् पञ्च प्रणामांश्च कुर्यान्मस्तिष्कपूर्वकान् ॥ १०२ ॥

वैष्णवैरपि मन्त्रैश्च देवेशमतिभक्तितः ।
पुष्पाण्यञ्जलिनादाय देवं ध्यायन् बहूनि च ॥ १०३ ॥

देवदेवस्य पादे तु दद्यात्पुष्पाञ्जलिं पुनः ।
कौतुकाद् ध्रुवबेरे च देवमारोपयेत्परम् ॥ १०४ ॥

अन्त्यवेलार्चनायां तु विसर्जनमथाचरेत् ।
देवालयान्त्यवेलार्चा निशीथमभिधीयते ॥ १०५ ॥

पात्रशेषेण हविषा विष्वक्सेनं निवेदयेत् ।
तन्निवेद्यं तु निर्माल्यं गोभ्यः शूद्राय वा ददेत् ॥ १०६ ॥

गुरोर्भक्त्याः स्वस्य यथोच्छिष्टं भोज्यं तत्पुत्रशिष्ययोः ।
सर्वेषां च गुरोर्विष्णोरन्नाद्यं च निवेदितम् ॥ १०७ ॥

शुद्धं भक्तैश्च सद्भिश्चैर्भोज्यमित्युच्यते बुधैः ।
ब्रह्मणश्चापि नैवेद्यं चातुर्वर्ण्यैर्यथाक्रमम् ॥ १०८ ॥

क्रूरदेवस्य रुद्रस्य नैवेद्यमपि सर्वशः ।
भक्तैरन्यैश्च सर्वैश्च न तु भोज्यं कदाचन ॥ १०९ ॥

श्रियो भूम्याश्च दुर्गायाः सरस्वत्याश्च यत्तथा ।
स्त्रीभिर्भक्तैश्च तद्भोज्यं चातुर्वर्ण्यैरिति स्मृतम् ॥ ११० ॥

क्रूराणां रुद्रपूर्वाणां काल्यादीनां निवेदितम् ।
अभोज्यं सर्वमन्नाद्यं सर्वैरपि कदाचन ॥ १११ ॥

देवार्चनार्थमित्येव द्रव्यं वै सञ्चयेद्बुधः ।
देवेशमर्चयेन्नित्यमद्यमूर्तिविगुक्तगुणैर्युतः ॥ ११२ ॥

मौनी शान्तः क्षमायुक्तो सूलोक्ताचारसंयुतः ।
कल्पमन्त्रविशेषज्ञो वैष्णवः शास्त्रपारगः ॥ ११३ ॥

निषिद्धाचारविमुखोः भक्तिमान् नियतेन्द्रियः ।
अनालस्यः सत्यवादी नित्यहोमपरायणः ॥ ११४ ॥

आराधकाश्च विष्णोस्तु तस्यालयसमीपतः ।
आवासं संप्रकल्प्यैव वसेयुर्निरुपद्रवाः ॥ ११५ ॥

अक्लेशेन यथा जीवेदर्चकः परिचारकः ।
निःशोकश्च तथा सम्यग् यजमानः प्रकल्पयेत् ॥ ११६ ॥

अर्चके क्लेशयुक्ते तु ग्रामो दग्धः सदा भवेत् ।
अर्चके क्लेशयुक्ते तु तथैव परिचारके ॥ ११७ ॥

तद्ग्रामो यजमानश्च सर्वदा दुःखितो भवेत् ।
तस्मात्सर्वप्रयत्नेन सुखं कुर्यात्त्वरान्वितः ॥ ११८ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे अर्चनोपचारविधि-
र्नाम त्रिचत्वारिंशोऽध्यायः ॥

## चतुश्चत्वारिंशोऽध्यायः

अतः परं प्रवक्ष्यामि ग्राह्यपुष्पसमुच्चयम् ।
दैविकं मानुषं ब्राह्मं पैतृकं भौतिकं तथा ॥ १ ॥

याक्षं गान्धर्विकं तद्वदासुरं राक्षसं तथा ।
पैशाचं मिश्रकं चापि पुष्पमेवं प्रकीर्तितम् ॥ २ ॥

पुष्पं पत्रं समाख्यातं तथैवाङ्कुरजादिकम् ।
मूलं चैव फलं चैवमर्चनीयं समन्त्रकम् ॥ ३ ॥

देवार्थमिति चोक्तानां द्रव्याणां च समासतः ।
आधावमधिकं तेषां तद्धि सर्वार्थसाधकम् ॥ ४ ॥

बिल्वं च करवीरं च पद्मं कुमुदमेव च ।
चत्वारि पुण्यपुष्पाणि दैविकानि समाहरेत् ॥ ५ ॥

चतुर्वर्णं तथा पुष्पं चातुर्वर्ण्यविशेषतः ।
श्वेतं रक्तं तथा पीतं कृष्णं चैव प्रकीर्तितम् ॥ ६ ॥

चयुर्वर्णसमायुक्तं श्रेष्ठं त्रैवर्णिकं तथा ।
द्विवर्णं मध्यमं ज्ञेयं चैकवर्णं कनिष्ठकम् ॥ ७ ॥

आह्निकं रात्रिकं चापि निर्माल्यं संप्रकीर्तितम् ।
तद्दलं तत्प्रफुल्लं तु सद्यस्कं शोभनं मतम् ॥ ८ ॥

एकाह्निकं तथा पुष्पं द्व्याह्निकं संप्रकीर्तितम् ।
त्र्यह्निकं तु तथा पुष्पं पाक्षिकं मासिकं तथा ॥ ९ ॥

श्वेतं शान्तिकरं ज्ञेयं पीतं यत्पौष्टिकं तथा ।
रक्तं विद्वेषणं प्रोक्तं कृष्णं सर्ववशीकरम् ॥ १० ॥

मल्लिका माल्ती जाती दूर्वाङ्कुरतृणातसी ।
द्विकर्णी बहुकर्णी च श्वेतकं नन्दकं तथा ॥ ११ ॥

पुन्नागोऽर्जुनकं चापि नन्द्यावर्ताग्रकर्णिका ।
चम्पकाऽशोकबकुला जातिपुष्पाथतिन्दुकम् ॥ १२ ॥

कनकं वाथ कल्हारं कङ्कणी चोग्रकर्णिका ।
कालीया कालान्दा च कर्णिका कृतमालिका ॥ १३ ॥

केतकी धातकी नन्दा माधवी कुसुदोत्कटम् ।
कुरवं पिण्डीतकं चाऽपि नागवृक्षं सुमोदकम् ॥ १४ ॥

कपाली भद्रकं चापि ककुभोदुम्बरं तथा ।
लताजातिषु या जाता गन्धवत्यो विशेषतः ॥ १५ ॥

तरुजातिषु सर्वासु सुगन्धं शोभनं मतम् ।
सर्वत्र प्रसवं ग्राह्यं सुगन्धो यत्र दृश्यते ॥ १६ ॥

रक्तेषु द्वयमेवं वै संग्राह्यं पुष्पसंचये ।
करवीरोत्पलं पद्मं वर्णमिश्रं न रक्तकम् ॥ १७ ॥

तेषु प्रधानं श्वेताख्यमुत्पलेष्वरुणं विदुः ।
पीतवर्णं तथा पुष्पं संग्राह्यं सर्वमेव तत् ॥ १८ ॥

कनकं कोकमाली च सूर्यनन्दा चतुर्भुजा ।
असंग्राह्यं च सर्वेषां पुष्पं पैशाचकं स्मृतम् ॥ १९ ॥

गोक्षुरी सूर्यपूजाश्च जाया ग्राह्या सुवर्चला ।
भद्रकाली तथा ग्राह्या कोकमाली जपादयः ॥ २० ॥

कनकं स्वर्णमाली च विष्णोरन्यत्र पूजनम् ।
रुद्रे प्रशस्तं चोग्रं वै उग्रगन्धार्कपूतिका ॥ २१ ॥

निर्गुण्ड्युन्मत्तवैषाख्या विवर्णश्च तथा स्मृताः ।
रुद्रस्य यानि पुष्पाणि तेषां नीलोत्पलं वरम् ॥ २२ ॥

वैष्णवेषु च पुष्पेषु श्वेतं यत्पङ्कजं वरम् ।
कर्णिकारं तथा पश्चाज्जाती पश्चात्तु चम्पकम् ॥ २३ ॥

श्रीदेव्या यानि पुष्पाणि तेषां वै मल्लिका वरा ।
काल्यै द्विकर्णिका ख्याता भूम्याः कान्ता वरा मता ॥ २४ ॥

बन्धूकं च पलाशं च न ग्राह्यं सर्वदैव तु ।
जपाकिंशुकजातानां कुसुमं च कुरण्टकम् ॥ २५ ॥

कुसुंभादीनि चान्यानि पैशाचानि विदुर्बुधाः ।
तुलसी भूस्तृणा श्चैव कृष्णा विष्णोः प्रिया मता ॥ २६ ॥

कृष्णा तु तुलसी चैव बोधनी प्रतिबोधनी ।
शङ्खी स्थलारविन्दा च सहदेवादयः सकृत् ॥ २७ ॥

एकपर्णी द्विपर्णी च रुद्रपर्णी सुखप्रदा ।
धातकी सूर्यनन्दा च बिल्वपत्रं तथैव च ॥ २८ ॥

नमेरुर्नागनन्दा च तथा सूर्यप्रबोधिनी ।
एते हि सर्वदैवत्या मुनीनामङ्कुरादयः ॥ २९ ॥

अङ्कुराणां च सर्वेषामुत्तमं तापसाङ्कुरम् ।
न निर्माल्यं भवेत्तस्मादब्दमेकं प्रपाटिकम् ॥ ३० ॥

प्रक्षाल्यैवार्चयेन्मासं न निर्माल्यमलाभके ।
यथा सुपतितं पुष्पं शुचि प्रक्षालनाद्भवेत् ॥ ३१ ॥

किशोराणां तु पत्राणां शुष्काणां च तथैव च ।
मासमेकं तथा भद्रा दूर्वा च प्रतिबोधिनी ॥ ३२ ॥

पल्लवं चापि चूतानामशोकानां तथैव च ।
एवं पर्णं तथा ग्राह्यं माधवीनां लतादयः ॥ ३३ ॥

क्षमायां दोषयुक्तायां जातं सर्वं परित्यजेत् ।
कौसुंभकं क्षमाजातं श्मशाने पार्श्वजं तथा ॥ ३४ ॥

चण्डालवाटिकादीनां समीपे वर्जयेत्तथा ।
करण्डं मुण्डकं चापि तथा प्रामीलकं च यत् ॥ ३५ ॥

एवंविधानां वृक्षाणां पुष्पाणि परिवर्जयेत् ।
लतानामङ्कुराणां च एवमुक्तं विसर्जयेत् ॥ ३६ ॥

भग्नमुत्पाटितं चापि भुग्नं छिन्नं सलेपकम् ।
शीर्णं च गैरिकं जीर्णं तथा स्वालयवर्जितम् ॥ ३७ ॥

अजिकं गर्जिकं वापि वर्जयेत्पुष्पसञ्चये ।
पाणी प्रक्षाल्य चाचम्य कृतशुद्धिः कृताञ्जलिः ॥ ३८ ॥

पुष्पमेकं विसृज्यैव नमो वारुणमुच्चरन् ।
सोमाय च महीदेव्यै तृतीयं च यथाक्रमम् ॥ ३९ ॥

सर्वं पूर्वमुखो भूत्वा पुष्पं संचिनुयाच्छुभम् ।
शुद्धे पात्रे प्रगृह्णीयाद्वस्त्रे हस्ते न चाहरेत् ॥ ४० ॥

उत्तरीयगतं ग्राह्यं देवेष्वापदि सर्वदा ।
चिन्वतः पतितं चापि पतितं ग्रन्थिबन्धने ॥ ४१ ॥

सगन्धं यच्च तत्सर्वं जले प्रक्षिप्तमेव च ।
वर्जयेज्जलजं पुष्पं भस्माक्षिप्तमपोढकम् ॥ ४२ ॥

अनिवेद्यानि पुष्पाणि चत्वार्यार्हुर्दिवौकसः ।
नीपकं कोविदारं च शिरीषं मदयन्तिकम् ॥ ४३ ॥

पूतिगन्धानि पुष्पाणि कुरण्टकुसुमानि च ।
एकवर्णान्यगन्धानि पुष्पाणि परिवर्जयेत् ॥ ४४ ॥

पात्रेणैव समाच्छाद्य पुष्पं वै सञ्चितं पुटे ।
अन्ते च प्रक्षिपेत्पुष्पं पुष्परक्षकमुद्दिशन् ॥ ४५ ॥

एवं पुष्पं समादाय देवस्यार्चनमारभेत् ।
पुष्पाणि परिवाराणां पृथक् पात्रे समाहरेत् ॥ ४६ ॥

उत्पाटितानि पुष्पाणि चासुराणीति लक्षयेत् ।
हरिताहरितान्येव दैविकानि विदुर्बुधाः ॥ ४७ ॥

सकण्टकानां वृक्षाणां पुष्पाणि परिवर्जयेत् ।
प्रोक्तानि राक्षसानीति तेषां ग्राह्याणि पूजने ॥ ४८ ॥

छिन्नारं भिन्नमस्तिष्कं याक्षिकं परिकीर्तितम् ।
एकरात्रोषितं पुष्पं गन्धर्वाणां प्रकीर्तितम् ॥ ४९ ॥

गृहीतपरिशीर्णं च भूतानां च विदुर्बुधाः ।
नरेणाशुचिना स्पृष्टं चण्डालैः पुल्कसैस्तथा ॥ ५० ॥

विद्याधराणां तद्विद्यादर्चिताङ्गं विदुर्बुधाः ।
ग्रन्थिभग्नं तथायातं ततोऽमूलं तु पाटितम् ॥ ५१ ॥

ऊर्जितं सुरबिन्दूनां शेषं वै शिबुकं विदुः ।
मौकुल्यं विकसेदस्तात्तद्वेलापरिसंहृतम् ॥ ५२ ॥

सारं सुपात्रे सन्यस्तं ब्रह्मणः परिकीर्तितम् ।
सकिङ्किणीके गन्धाढ्ये जृम्भकाले समाहृतम् ॥ ५३ ॥

नाघावघ्राविर्तं पुष्पं पुण्यपुष्पं प्रकीर्तितम् ।
एवं पुष्पं समादाय देवस्यार्चनमाचरेत् ॥ ५४ ॥

पृथक् पृथक् च पात्रेषु तान्यष्टौ सम्यगाहरेत् ।
निर्माल्यपतितं पुष्पं तत्सर्वं परिवर्जयेत् ॥ ५५ ॥

नराघ्रातं गवाघ्रातमन्याघ्रातं च वर्जयेत् ।
अन्यत्र षट्पदाघ्रातादन्यैर्विकसितं तथा ॥ ५६ ॥

एवं संभारमाहृत्य मनसा मन्त्रमुच्चरन् ।
प्रविशेदालयं पूर्वं प्रतद्विष्णुरिति ब्रुवन् ॥ ५७ ॥

चण्डोरगेशौ संपूज्य लब्धानुज्ञो यथाक्रमम् ।
तयोरन्यतरेणैव सायं संप्रविशेत्पुनः ॥ ५८ ॥

नादेयं वाथ ताटाक्यं कौप्यं वा जलमाहरेत् ।
आत्मानं दापयेत्पूर्वं द्वितीयं प्रणिधापनम् ॥ ५९ ॥

तृतीयं संभाराहरणं चतुर्थं शोधनं भवेत् ।
पञ्चमं हरिसेनेशस्यार्चनं च यथाक्रमम् ॥ ६० ॥

षष्ठं ध्यानसमावेशः सप्तमं देववाहनम् ।
सकलीकृतमव्यग्रं चाष्टमं च तथोच्यते ॥ ६१ ॥

नवमं याचनं प्रोक्तं दशमं परिपूजनम् ।
अर्चनं त्वर्घ्यदानाद्यैरेकादश सुभाषितम् ॥ ६२ ॥

ततो द्वादशकं चेति परिवारसमर्चनम् ।
यूथाधिपान्तं ज्ञेयं तत्त्रयोदशसमर्चनम् ॥ ६३ ॥

चतुर्दशकमेतेषां सर्वेषां बलिदापनम् ।
सप्तविंशतिभिर्भेदैस्तेषां तेषां यथाक्रमम् ॥ ६४ ॥
अर्चनादर्चनं प्राह सुरासुरपितामहः ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे ग्राह्यपुष्पसमुच्चयविधिर्नाम चतुश्चत्वारिंशोऽध्यायः ॥

---

## पञ्चचत्वारिंशोऽध्यायः

अतः परं प्रवक्ष्यामि हविष्पाकविधिक्रमम् ।
हविरुद्दिश्य धान्यानि चोपदंशांस्तथाहरेत् ॥ १ ॥

शालिं व्रीहिं प्रियङ्गुं च नीवारं षष्टिकं तथा ।
यवं च वेणुकं चैव प्रशस्तानि विदुर्बुधाः ॥ २ ॥

व्रीहीणामपि सर्वेषां कृष्णधान्यं विवर्जयेत् ।
सर्वेषां व्रीहिकाणां च शालिर्दशगुणो भवेत् ॥ ३ ॥

शतगुणं प्रियङ्गु स्यात् नीवारं तु सहस्रकम् ।
अयुतं गर्भषष्टं स्यादनन्तं यववेणुके ॥ ४ ॥

चातुर्वर्ण्याहृतं धान्यं प्रशस्तमिति गीयते ।
अन्त्यजैः प्रतिलोमैश्च नीतं धान्यं विवर्जयेत् ॥ ५ ॥

अथवा पुण्यलब्धं च धान्यं शुद्धं समाहरेत् ।
त्रिवर्षातीतधान्यानि न प्रशंसन्ति दैविके ॥ ६ ॥

तण्डुलानपि सर्वांश्च मासादूर्ध्वं विसर्जयेत् ।
आपोहिष्ठेति मन्त्रेण प्रोक्ष्य धान्यानि चाहरेत् ॥ ७ ॥

आलये वा गृहे वापि शुद्धे देशे समाहितः ।
विताने वा कटे वापि समास्तीर्य विधानतः ॥ ८ ॥

आतपेन तथाशोष्य विश्वामित्रं परिह्वसेत् ।
गोचर्ममात्रं संगृह्य मण्डलं चोपलिप्य च ॥ ९ ॥

चतुर्दिशं चतुर्हस्तं गोचर्मेति प्रशस्यते ।
तत्रैवोलूखलं सम्यङ् मुसलं च निधाय च ॥ १० ॥

उलूखलेऽर्चयेत्सोमं मुसले च सुदर्शनम् ।
पुष्पादीन् शोधमित्वैव धान्यानि प्रक्षिपेत्ततः ॥ ११ ॥

पादौ प्रक्षाल्य चाचम्य देवेशं चेति संस्मरन् ।
पूजिताभिस्तु योषिद्भिः शुद्धाभिश्चावघातयेत् ॥ १२ ॥

श्वासं स्वेदं विसृज्यैव मूलमन्त्रेण घातयेत् ।
तानि प्रक्षिप्य शूर्पेषु निरस्तेति तथैव च ॥ १३ ॥

शूर्पेण शोधयित्वा तान् कणकङ्कुविवर्जिताम् ।
वैकुण्ठपुष्पसंकाशान् तण्डुलान् संप्रगृह्य च ॥ १४ ॥

शुद्धेषु नवपात्रेषु देवस्य त्वेति निक्षिपेत् ।
उत्तमं मध्यमं चेति कनिष्ठं त्रिविधं हविः ॥ १५ ॥

उत्तमं षोडशप्रस्थं मध्यमं तु तदर्धकम् ।
अधमं त्वाढकं प्रोक्तं यथाशक्ति समाहरेत् ॥ १६ ॥

तण्डुलानां शतप्रस्थं प्रभूतमिति संस्मृतम् ।
द्विगुणं त्रिगुणं वापि चतुर्गुणमथापि वा ॥ १७ ॥

पञ्चषट्सप्तसंयुक्तमष्टमं नवमं तथा ।
सहस्रप्रस्थसंयुक्तं महाहविरिति स्मृतम् ॥ १८ ॥

यावद्भक्तिसमायुक्तं तण्डुलान् संप्रगृह्य च ।
व्यञ्जनानि यथोक्तानि यथाशक्ति समाहरेत् ॥ १९ ॥

मौद्गिकं पायसं चैव कृसरं गौल्यमेव च ।
यावकं चैव शुद्धान्नमित्युक्तं षड्विधं हविः ॥ २० ॥

तण्डुलस्य समं ग्राह्यं मुद्गसारमिति स्मृतम् ।
पादं पादार्धसंयुक्तमर्धं वै मुद्गसारकम् ॥ २१ ॥

तण्डुलेन समायुक्तं पाचयेत्तत्तु मौद्गिकम् ।
यावत्तण्डुलमादाय त्रिगुणं दुग्धमाहरेत् ॥ २२ ॥

एवं पचेत मृद्भाण्डे पायसान्नं विचक्षणः ।
तण्डुलस्य चतुर्भागमर्धं पादं तु वा घृतम् ॥ २३ ॥

तत्समं गुडमाक्षिप्य पायसान्नं विधीयते ।
यावत्तण्डुलपक्वं स्यात्तदर्धं तिलमाहरेत् ॥ २४ ॥

सार्धपादं तथापादं तिलचूर्णं च कारयेत् ।
तच्चूर्णेन समायुक्तं पूर्वोक्तेन घृतेन च ॥ २५ ॥

तथा गुडेन संयुक्तं कृसरं हविरुच्यते ।
तण्डुलात् त्रिगुणं दुग्धं दुग्धार्धं तोयमाहरेत् ॥ २६ ॥

तदर्धं मुद्गमित्युक्तं मुद्गसारमिति स्मृतम् ।
तथा गुडं घृतं चैव तण्डुलार्धं विधीयते ॥ २७ ॥

पक्वमेतैः समायुक्तं गौल्यं हविरिति स्मृतम् ।
यावत्तण्डुलमादाय तदर्धं यवमाहरेत् ॥ २८ ॥

साधेपादं तु वा पादं यवं च प्रतिगृह्य च ।
यावकं पाचयेत्तस्य पायसान्नं गुडं घृतम् ॥ २९ ॥

श्वेतैश्च तण्डुलैः शुद्धैः शुद्धान्नं पाचयेद्बुधः ।
मूर्तीनां चैव सर्वासां शुद्धान्नं चाथ पाचयेत् ॥ ३० ॥

हवींषि विष्णवे दद्याच्छक्तः सर्वाणि नित्यशः ।
मृण्मये तु नवे पात्रे पचनं श्रेष्ठमुच्यते ॥ ३१ ॥

अलाभे लोहपात्रे वा पाचयेत्तद्विधानतः ।
मृद्भाण्डेऽपि पुराणे तु पचनं नैव कारयेत् ॥ ३२ ॥

द्रोणादर्धाधिकं यत्तदेकपात्रे न पाचयेत् ।
अथवा पाचयेद्भाण्डे चतुःप्रस्थं विधानतः ॥ ३३ ॥

माषं तण्डुलमात्रं स्यादष्टमाषं पणं स्मृतम् ।
निष्कं स्याद्विंशतिपणं दशनिष्कं पलं स्मृतम् ॥ ३४ ॥

चतुष्पलं तु कुडुपं प्रस्थं षोडशकं पलम् ।
आढकं तु चतुःप्रस्थं द्रोणं तु चतुराढकम् ॥ ३५ ॥

आग्नेय्यां पचनस्थानं द्वितीयावरणे चरेत् ।
दीर्घशालां प्रकुर्वीत दक्षिणोत्तरमायताम् ॥ ३६ ॥

विमानेन समं वापि विमानात्पादहीनकम् ।
सार्धं कपोततुल्यं वा पादाग्रसममेव वा ॥ ३७ ॥

यथाशक्त्या प्रकुर्वीत चुल्लीं चैव सुकारयेत् ।
वप्त्वा स्नात्वा शुचिर्भूत्वा पचनारम्भमाचरेत् ॥ ३८ ॥

दुहतां दिवमित्युक्त्वा तोयमाहृत्य वै बुधः ।
प्रजास्थालीति मन्त्रेण स्थालीमाहृत्य यत्नतः ॥ ३९ ॥

विष्णवे जुष्टमित्युक्त्वा स्थाल्यां तण्डुलमाक्षिपेत् ।
इदमापः शिवश्चेति शोधयित्वा जलेन वै ॥ ४० ॥

वाचस्पतेति मन्त्रेण चुल्यामारोपयेद्धविः ।
शुद्धं सुगन्धं पुण्यं तदिन्धनं संप्रगृह्य च ॥ ४१ ॥

इन्धनैः पाचयेदेवं हविष्यं तच्छुभं स्मृतम् ।
देवेभ्यः स्वन्नमिच्छन्ति स्रावि सर्वत्र वर्जयेत् ॥ ४२ ॥

दुर्गन्धकाष्ठान्यन्यानि विषधूमानि वर्जयेत् ।
कण्टकैश्च समायुक्तं सर्वं यत्नेन वर्जयेत् ॥ ४३ ॥

पाचकः प्राङ्मुखो भूत्वा हविः सम्यक् सुपाचयेत् ।
अथवोदङ्मुखो भूत्वा पाचयेत विधानतः ॥ ४४ ॥

उपक्रम्येष्टमात्रं च हविराक्षिप्य न व्रजेत् ।
कदलीजातयः सर्वाश्चूतं च पनसद्वयम् ॥ ४५ ॥

उर्वारुकं च बृहती क्षुद्रा च बृहती तथा ।
कारवल्लीत्रयं सिंही कर्कन्धू वत्सरी तथा ॥ ४६ ॥

कूश्माण्डं नारिकेलं च कार्कोटं तिन्त्रिणीफलम् ।
अलर्कं गृध्रनखी च ग्राह्यमित्युच्यते बुधैः ॥ ४७ ॥

कोशातकीमलाबूं च यत्नेन परिवर्जयेत् ।
उत्पलस्य चकन्दं च वल्लीनां कन्दमेव च ॥ ४८ ॥

रुद्रकन्दं महाकन्दं कन्दं पिण्डीतकं तथा ।
आर्द्रकं जीरकं कोलं मरिचं सर्षपं तथा ॥ ४९ ॥

राजमाषं महामाषं श्यामाकं कृष्णमाषकम् ।
माषमुद्गं महामुद्गं निष्पावं तिलतिल्वकौ ॥ ५० ॥

न्यरसी(?) रक्तबाप्पं च शाकेषु ग्राह्यमेव वै ।
हविष्यादीनि मन्वाद्यैः प्रोक्तान्यन्यानि चाहरेत् ॥ ५१ ॥

आहृत्य क्षालयित्वा तु पृथक् पाले यथाविधि ।
मरीचजीरकैर्युक्तं सुगन्धि सरसं शुभम् ॥ ५२ ॥

एकं द्वौ त्रींस्तथा सम्यक् चतुरो वा ततोऽधिकान् ।
उपदंशान् यथायोगं पाचयेत स्वशक्तितः ॥ ५३ ॥

आढकस्योपदंशानां संयोगः संप्रवक्ष्यते ।
प्रत्येकमुपदंशं च षट्पलं वा चतुष्पलम् ॥ ५४ ॥

प्रस्थस्यार्धं तु पादं वा सूपसारं समाहरेत् ।
घृतं च कुडुबं वाथ तदर्धं पादमेव वा ॥ ५५ ॥

प्रस्थमर्धं तदर्धं वा दधि सम्यक् समाहरेत् ।
गुडं पलं तदर्धं वा यथालाभमथापि वा ॥ ५६ ॥

द्रोणार्धे च तथा द्रोणे वर्धयेदधिकेऽपि च ।
कदल्याः पनसस्यापि चूतस्यापि स्वशक्तितः ॥ ५७ ॥

फलानि च सुपक्वानि यथालाभानि चाहरेत् ।
सूपं च गरुसाश्चापि यथाशक्ति सुकारयेत् ॥ ५८ ॥

युक्तं तण्डुलपिष्टेन समेनैव गुडेन च ।
पादोनेनाथवार्धेन पचेद् गुडसमायुतम् ॥ ५९ ॥

मरीचजीरकैर्युक्तं घृतेऽपूपानि पाचयेत् ।
हवींषि सोपदंशानि पाचयेत स्वशक्तितः ॥ ६० ॥

पाचयित्वाऽवरोप्यैव सतोयेनैव पाणिना ।
स्थालीबाह्यं प्रमार्ज्यैव भस्मना पुण्ड्रमाचरेत् ॥ ६१ ॥

पादौ मुखं च प्रक्षाल्य सम्यगाचम्य पाचकः ।
स्थालीं त्रिपादे संस्थाप्य धारयन् वामपाणिना ॥ ६२ ॥

तदूर्ध्वे दक्षिणं न्यस्य देवागारं प्रवेशयेत् ।
प्रमुखे वामपार्श्वे च स्थापयित्वा विचक्षणः ॥ ६३ ॥

अधावनीति मन्त्रेण मण्डलान्युपलिप्य च ।
पात्रैः पञ्चभिरावृत्य पञ्चमूर्तीर्निवेदयेत् ॥ ६४ ॥

मुद्गान्नं विष्णवे चैव पायसं पुरुषाय च ।
सत्याय कृसरान्नं तु गौड्यं चैवाच्युताय च ॥ ६५ ॥

यावकं चानिरुद्धाय साधयित्वा निवेदयेत् ।
सगुडं घृतसंयुक्तं सफलं व्यञ्जनैर्युतम् ॥ ६६ ॥

पूर्णपात्रे निवेद्यैव ततः शीतोदकं ददेत् ।
वस्त्रपूतं जलं स्वादु शीतलं गन्धवासितम् ॥ ६७ ॥

हरेः पानीयकं दद्यात्पुनराचमनं ददेत् ।
पात्रे पात्रे चतुर्थांशमन्नं तत्रावशेषयेत् ॥ ६८ ॥

देवीभ्यां च मुनिभ्यां च हवींषि च निवेदयेत् ।
पात्रशेषं गृहीत्वैव मूर्तिहोमश्च हूयताम् ॥ ६९ ॥

परिवारबलिं चैव तच्छेषेण प्रदीयताम् ।
पात्रशेषं प्रगृह्णीयादाचार्यो वाऽर्चकोऽथवा ॥ ७० ॥

इत्येवं भृगुणा प्रोक्तं काश्यपेन मरीचिना ।
प्रत्येकपात्रे नालब्धे द्वे पात्रे वा तथैव च ॥ ७१ ॥

अलाभे तु हविःपात्रे प्रक्षाल्यात्र ददेत्पुनः ।
अलाभे सर्वपात्राणामेकपात्रे निवेदयेत ॥ ७२ ॥

चतुष्काले हविर्दानमुत्तमोत्तममुच्यते ।
त्रिकालेषूत्तमं प्रोक्तं द्विकाले मध्यमं भवेत् ॥ ७३ ॥

एककाले हविः स्याच्चेदधमं तद्विदुर्बुधाः ।
प्रातः सायं तथाऽर्घ्यान्तमर्चयित्वा विधानतः ॥ ७४ ॥

अशक्तोऽपि हविर्यत्नान्मध्याह्ने वा निवेदयेत् ।
अन्यथा तु महान् दोषो भवेदिति न संशयः ॥ ७५ ॥

प्रभूतं तु हविर्यत्र देवमादाय मन्त्रतः ।
दक्षिणे प्रमुखे वाऽपि प्रथमावरणे बुधः ॥ ७६ ॥

द्वितीयावरणे वाऽपि तृतीयावरणेऽथवा ।
हविर्निवेदनार्थाय कूटं वा मण्टपं तु वा ॥ ७७ ॥

अलङ्कारयुतं स्थानं प्राग्द्वारं संप्रकल्पयेत् ।
यद्दिग्द्वारं विमानं स्यात्तस्यां दिशि मुखं तथा ॥ ७८ ॥

देवेशं स्थापयेत्तत्र पाद्याद्यैरर्चयेत्क्रमात् ।
अथावनीति मन्त्रेण मण्डलं चोपलिप्य च ॥ ७९ ॥

मण्डलं तण्डुलैर्वापि व्रीहिभिर्वा विकीर्य च ।
तदूर्ध्वं वस्त्रमास्तीर्य शुद्धं श्वेतं तथैव च ॥ ८० ॥

प्रक्षाल्य कदलीपत्रमुत्तराग्रं समास्तरेत् ।
पात्राधिपं समभ्यर्च्य शोधयित्वा पुनस्ततः ॥ ८१ ॥

हवींषि देवस्य त्वेति घृतेनैवाभिघार्य च ।
तन्मन्त्रेण घृतेनैव तत्पात्रमभिघार्य च ॥ ८२ ॥

हविष्मतीति मन्त्रेण हविः प्रक्षिप्य चात्वरः ।
उपदंशसमायुक्तं सगुडं घृतसंयुतम् ॥ ८३ ॥

प्रभूतं तु समाक्षिप्य देवेशं मनसा स्मरन् ।
अभिमृश्यान्नसूक्तेन देवदेवं निवेदयेत् ॥ ८४ ॥

सन्ध्याकाले यदि स्याच्चेद्बलिमुत्थापयेद्बुधः ।
यत्कामेन हविर्दद्यात्तत्सर्वं तु लभेत सः ॥ ८५ ॥

आमोदश्च प्रमोदश्च संमोदश्च तथैव च ।
वैकुण्ठश्चेति चत्वारो विष्णुलोकाः प्रकीर्तिताः ॥ ८६ ॥

मौद्गिकान्नप्रदानेन लोकमामोदमाप्नुयात् ।
पायसान्नप्रदानेन प्रमोदमधिगच्छति ॥ ८७ ॥

कृसरान्नप्रदानेन संमोदं लोकमाप्नुयात् ।
गौल्यस्य हविषो दानाद्वैकुण्ठं लोकमाप्नुयात् ॥ ८८ ॥

यावकान्नप्रदानेन सगच्छेत्परमं पदम् ।
शुद्धान्नस्य प्रदानेन विष्णुलोके महीयते ॥ ८९ ॥

प्रभूतदानात्सर्वेषु विष्णुवन्मोदते चिरम् ।
यावद्भिस्तण्डुलैरन्नं विष्णवे संनिवेदयेत् ॥ ९० ॥

तावद्वर्षाणि तल्लोके विष्णुवत्संमहीयते ।
अपूपादीनि भक्ष्याणि कदल्याः पनसस्य च ॥ ९१ ॥

भक्त्या फलानि चूतस्य देवेशाय निवेदयेत् ।
ताम्बूलं मुखवासादि कर्पूरैलादिभिर्युतम् ॥ ९२ ॥

सुगन्धं पुष्पमालां च वस्त्राणि विविधानि च ।
द्रव्याण्यन्यानि सर्वाणि देवेशाय ददाति यः ॥ ९३ ॥

यद्यत्कामेन संदद्यातत्तत्सर्वं लभेत सः ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे हविःपाकविधिर्नाम

पञ्चचत्वारिंशोऽध्यायः ॥

---

# षट्चत्वारिंशोऽध्यायः

अतः परं प्रवक्ष्यामि नवधाप्यर्चनाक्रमम् ।
उत्तमं मध्यमं तद्वदधमं त्रिविधं स्मृतम् ॥ १ ॥

एकैकं तु त्रिधा कृत्वा नवधा भेद उच्यते ।
अधमेऽप्यधमार्चायां मध्याह्नेत्वाढकं हविः ॥ २ ॥

पूर्वोक्तविधिना सम्यग् देवेशस्य निवेदयेत् ।
आढकार्धं हविर्देव्योर्मध्याह्ने संनिवेदयेत् ॥ ३ ॥

आसनाद्यैस्तथा प्रातरर्घ्यान्ताचमनान्तकैः ।
पाद्याद्यैर्मुखवासान्तं मध्याह्ने चार्चयेत्क्रमात् ॥ ४ ॥

तथार्घ्याचमनान्तैश्च रात्रौ पाद्यादिभिः पुनः ।
विग्रहैरर्चनं कुर्याद्दीपाश्चत्वार ईरिताः ॥ ५ ॥

प्रातर्मध्याह्नयोर्दीपौ घार्तौ तैलौ तु वा स्मृतौ ।
ब्रह्माणं शङ्करं चापि मार्कण्डेयं भृगुं तथा ॥ ६ ॥

गर्भगेहे समभ्यर्च्य द्वारे द्वारे प्रति प्रति ।
धात्रादिद्वारदेवांश्च सर्वत्रापि समर्चयेत् ॥ ७ ॥

मणिकं च तथा सन्ध्यां तापसं सिद्धिदं पुनः ।
विष्वक्सेनं च गरुडं श्रीभूतं च समर्चयेत् ॥ ८ ॥

एवमेवार्चनं यत्तदधमाधममुच्यते ।
मध्याह्ने च तथा प्रातर्देवेशस्याढकं हविः ॥ ९ ॥

कारयेच्च तथा देव्योराढकार्धं विधिः स्मृतः ।
विग्रहैर्मुखवासान्तैरासनाद्यैस्तथैव च ॥ १० ॥

प्रातरभ्यर्च्य मध्याह्ने पाद्याद्यैश्च विधानतः ।
विग्रहैर्मुखवासान्तं देवं देव्यौ समर्चयेत् ॥ ११ ॥

पाद्याद्यर्घ्याचमनान्तैः रात्रौ पूर्ववदर्चयेत् ।
दीपास्तद्द्विगुणाः प्रोक्ता घार्तास्तैलास्तु वा तथा ॥ १२ ॥

अधमे मध्यमं चैतदर्चनं समुदाहृतम् ।
प्रातर्मध्याह्नयो रात्रौ देवेशस्याढकं हविः ॥ १३ ॥

आढकार्धं तथां देव्यास्त्रिकालं हविरुच्यते ।
प्रातर्मध्याह्नयोः सर्वे द्वात्रिंशद्विग्रहैरपि ॥ १४ ॥

पाद्याद्यर्घ्यान्तकं रात्रावर्चनं च यथाविधि ।
पूर्वोक्तद्विगुणा दीपास्त्रिसन्ध्यं च त्रिकालिकाः ॥ १५ ॥

दीपं त्वेकं तथाजस्रं त्रिकालं चार्चनं तथा ।
मध्याह्ने मूर्तिहोमं च विधिनात्रबलींस्तथा ॥ १६ ॥

प्रातः क्रमेण रात्रौ च विधिनार्ध्यबलिं चरेत् ।
स्नानकाले हविर्दाने बलेरुद्धरणे तथा ॥ १७ ॥

वाद्यैश्च घोषणं चापि कारयेत स्वशक्तितः ।
एतैः सर्वैः समायुक्तं त्वधमोत्तममुच्यते ॥ १८ ॥

देवेशस्य तु मध्याह्ने द्रोणार्धं तु हविः स्मृतम् ।
प्रातस्तथैव रात्रौ च हविराढकमेव च ॥ १९ ॥

अर्धयामेऽर्चनं तद्वदाढकं तु हविः स्मृतम् ।
देव्योर्हविस्तथा चैवं मूर्तिहोमो बलिस्तथा ॥ २० ॥

पूर्वोक्तद्विगुणा दीपाः ज्वालोत्सेधस्तु त्र्यङ्गुलः ।
मुन्योश्च विष्वक्सेनस्य गरुडस्य तथैव च ॥ २१ ॥

आढकार्धं तु मध्याह्ने हविः प्रोक्तं तथैव च ।
शिष्टं सर्वं तु पूर्वोक्तमर्चने मध्यमाधमे ॥ २२ ॥

प्रातर्मध्याह्नयोस्तद्वद् द्रोणार्धं च हविः स्मृतम् ।
रात्रावप्यर्धयामे च हविराढकमेव वै ॥ २३ ॥

अर्चनं तु चतुष्कालं पूर्ववत्सम्यगाचरेत् ।
त्रिकालं च हविर्देव्योरर्चनं च तथा भवेत् ॥ २४ ॥

तथैव मुन्यादीनां तु द्विकालं च हविः स्मृतम् ।
पूर्वोक्तद्विगुणा दीपाश्चतुरङ्गुलमात्रकाः ॥ २५ ॥

प्रातर्मध्याह्नयोश्चापि मूर्तिहोमं तथाचरेत् ।
विधिनान्नबलिं चापि रात्रावर्ध्यबलिं तथा ॥ २६ ॥

सर्ववाद्यसमायुक्तं गेयेन च समन्वितम् ।
मध्यमे मध्यमं चैतदर्चनं परिभाषितम् ॥ २७ ॥

त्रिकालं देवदेवस्य द्रोणार्धं तु हविर्भवेत् ।
देव्योर्हविस्त्रिकालं च मुन्यादीनां तु पूर्ववत् ॥ २८ ॥

चतुष्कालार्चनं चान्यत्सर्वं पूर्ववदुच्यते ।
मध्यमोत्तममार्गे वै ज्ञेयमुत्तममध्यमम् ॥ २९ ॥

मध्याह्ने तु हविर्द्रोणं देवेशस्य निवेदयेत् ।
देव्योश्च मुन्यादीनां च त्रिकालं च हविर्भवेत् ॥ ३० ॥

मूर्तिहोमं त्रिकालं वा द्विकालं वाऽथ हूयते ।
द्विकालं वा त्रिकालं वा तथैवान्नबलिर्भवेत् ॥ ३१ ॥

पूर्वोक्तद्विगुणा दीपाः षडङ्गुलसमुच्छ्रयाः ।
नृत्तगेयसमायुक्तं वाद्यघोषसमन्वितम् ॥ ३२ ॥

द्वादश्यां श्रवणे चापि कलशैः स्नापयेद्विभुम् ।
उत्तमाधममेतत्तु मार्गमित्यवबोधत ॥ ३३ ॥

हविर्द्विकालं द्रोणः स्याद्रात्रौ द्रोणार्धमुच्यते ।
देवस्यैवं हविः प्रोक्तं देव्यादीनां तु पूर्ववत् ॥ ३४ ॥

इन्द्रादिपरिवाराणामाढकार्धं हविर्भवेत् ।
त्रिकालं मूर्तिहोमश्च त्रिकालान्नबलिस्तथा ॥ ३५ ॥

पूर्वोक्तद्विगुणा दीपाः षडङ्गुलसमुच्छ्रयाः ।
सर्ववाद्यसमायुक्तं नृत्तगेयसमन्वितम् ॥ ३६ ॥

विष्णुपञ्चदिने वापि संक्रान्त्यां च यथाविधि ।
स्नपनं चोत्सवं शक्तो भक्तियुक्तश्च कारयेत् ॥ ३७ ॥

उत्तमे मध्यमे चैतदर्चनं समुदाहृतम् ।
त्रिकालं च हविर्द्रोणमर्धयामे तदर्धकम् ॥ ३८ ॥

हविर्देवस्य संप्रोक्तं तद्देव्योस्त्वाढकं हविः ।
प्रातर्मध्याह्नयोः सर्वैरर्चनं विग्रहैस्तथा ॥ ३९ ॥

रात्रौ स्नानद्वयेनापि श्रोताद्येन विना तथा ।
अन्यैः सर्वोपचारैश्च श्रद्धाभक्तियुतोऽर्चयेत् ॥ ४० ॥

त्रिकालान्नबलिस्तद्वन्मूर्तिहोमस्त्रिकालकः ।
विष्णुपञ्चदिने तस्मिन् विषुवे चायने तथा ॥ ४१ ॥

संक्रान्त्यां मासनक्षत्रे पुण्येऽन्यस्मिन् दिने क्रमात् ।
श्रद्धाभक्तिसमायुक्तः कलशैः स्नपनं क्रमात् ॥ ४२ ॥

उत्सवं च यथाशक्ति यत्नतः कारयेद्बुधः ।
वाद्यानां घोषकैरेव घोषणं च यथाक्रमम् ॥ ४३ ॥

अप्सरोभिश्च दासीभिर्नृत्तं गेयं च सुन्दरम् ।
गान्धर्वोक्तक्रमेणैव त्रिकालं च प्रयत्नतः ॥ ४४ ॥

कारयेत यथाशक्ति देवदेवस्य सन्निधौ ।
अन्यैश्च मङ्गलैः सर्वैरुत्तमोत्तममर्चनम् ॥ ४५ ॥

अधिके तु विमाने च ध्रुवबेरं तथाधिकम् ।
तथैव कौतुकाद्यांश्च परिवारांस्तथाधिकान् ॥ ४६ ॥

प्रतिष्ठामधिकामेव नित्यार्चामधिकां तथा ।
हविराद्यधिकं सम्यग्घोमं चापि बलिं तथा ॥ ४७ ॥

स्नापनं चोत्सवं तद्वदधिकं सर्वमाचरेत् ।
यत्किञ्चिदधिके न्यूनं कारयेच्चेद्विनश्यति ॥ ४८ ॥

न्यूने चाऽप्यधिकं कर्म यदि कुर्यात्तदुत्तमम् ।
इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे नवविधार्चनं नाम
षट्चत्वारिंशोऽध्यायः ॥

---

## सप्तचत्वारिंशोऽध्यायः

अतः परं प्रवक्ष्यामि पुण्यर्क्षेष्वधिकार्चनम् ।
श्रवणं द्वादशी शुक्ले कृष्णे च द्वादशी तथा ॥ १ ॥

पौर्णमास्याप्यमावास्या पञ्चैतानि दिनानि च ।
विष्णुपञ्चदिनानीति प्रोक्तान्येवं पुरातनैः ॥ २ ॥

श्रवणर्क्षसमायुक्ता द्वादशी चोत्तमोत्तमा ।
विष्णुपञ्चदिनेष्वेषु विषुवे चायने तथा ॥ ३ ॥

ग्रहणे चैव संक्रान्त्यां तत्तन्मासादिनेषु वै ।
उत्सवोक्तेन विधिना चोत्सवं कारयेद्धरेः ॥ ४ ॥

स्नपनोक्तेन विधिना कलशैः स्नापयेद्विभुम् ।
द्वात्रिंशद्विग्रहैर्देवमर्चयेत विधानतः ॥ ५ ॥

महाहविः प्रभूतं वा देवेशाय निवेदयेत् ।
अशक्तोऽपि दिनेष्वेषु स्नात्वा देवं प्रणम्य च ॥ ६ ॥

अद्भिः शुद्धैः सुगन्धैश्च केवलैर्वाऽभिषिच्य च ।
द्वात्रिंशद्विग्रहैर्देवमर्चयित्वा विधानतः ॥ ७ ॥

हवींषि च यथाशक्ति पाचयित्वा निवेदयेत् ।
मासे चाश्वयुजे माघे श्रवणे च पुनर्वसौ ॥ ८ ॥

स्नापयित्वाऽर्चयित्वा च हवींष्यपि निवेदयेत् ।
मत्स्यकूर्मवराहाणामाविर्भूतदिनेषु तत् ॥ ९ ॥

विष्णुपञ्चदिनानां वै कालो मध्याह्न उच्यते ।
अयने विषुवे काले तत्कालात्पूर्वमारभेत् ॥ १० ॥

आश्वयुज्यां च कार्तिक्यां पौर्णमास्यां विशेषतः ।
अमावास्यादिने वापि देवस्याग्रयणं चरेत् ॥ ११ ॥

मासे चाश्वयुजेऽप्यस्मिन्नूर्जमासेऽपि मुख्यतः ।
धान्यानां च नवानां वै सर्वासु च तिथिष्वपि ॥ १२ ॥

देवस्याग्रयणं पूर्वं कृत्वा धान्यानि संभरेत् ।
सोमयज्ञे हविर्यज्ञे पाकयज्ञे तथैव च ॥ १३ ॥

देवाग्रयणशिष्टानि धान्यान्येव प्रयोजयेत् ।
शिशिरे चैव नीवारान् वसन्ते च यवानपि ॥ १४ ॥

श्यामाकांश्चैव वर्षासु व्रीहींश्चैव शरदृतौ ।
सर्वांच्छरदृतावापि संभृत्याग्रयणं चरेत् ॥ १५ ॥

संपत्कामी श्रियं भक्त्या भृगुवारेषु चार्चयेत् ।
पुष्पदामसुगन्धैश्च तुलसीकुङ्कुमादिभिः ॥ १६ ॥

पायसापूपताम्बूलनारिकेलफलादिभिः ।
यो भक्त्या पूजयेल्लक्ष्मीं सर्वक्षत्रियवन्दितः ॥ १७ ॥

प्रजावान् पशुमान् भूमौ सर्वसौभाग्यमाप्नुयात् ।
इहलोके सुखं भुङ्क्त्वा देहान्ते मोक्षभाग्भवेत् १८ ॥

अतः परं प्रवक्ष्यामि देवस्याग्रयणे विधिम् ।
व्रीहीणां च यवानां च नीवाराणां तथैव च ॥ १९ ॥

प्रियङ्गूनां च षष्टीनां वेणुकानां तथैव च ।
हविष्पाकोक्तधान्यानां देवस्याग्रयणं चरेत् ॥ २० ॥

आहृत्यैतानि धान्यानि चातुर्वर्णैर्हृतानि च ।
आलयाभिमुखे देशे तानि सर्वाणि विन्यसेत् ॥ २१ ॥

यथोक्तविधिना सर्वानुपदंशान् समाहरेत् ।
गुडं दधि घृतं चैव स्वयंपक्वफलानि च ॥ २२ ॥

मुखवासं च वस्त्राणि पुष्पाणि च समाहरेत् ।
तानि संभृत्य सर्वाणि वाद्यघोषसमन्वितम् ॥ २३ ॥

ग्रामं प्रदक्षिणं कुर्यादलङ्कारसमायुतम् ।
वस्त्रमाल्यैरलङ्कृत्य चक्रं चानुनयेत्सह ॥ २४ ॥

देवालयं प्रविश्याथ तद्धान्यानि विशोध्य च ।
हविष्पाकोक्तवत्पश्चादवघातं च कारयेत् ॥ २५ ॥

तण्डुलांश्च विशुद्धांस्तु ततः पात्रे समाहरेत् ।
तण्डुलैस्तैर्नवैरेव हवींष्यपि बहूनि च ॥ २६ ॥

पूर्वोक्तविधिना सर्वानुपदंशांश्च पाचयेत् ।
देवेशं स्नापयित्वैव वस्त्राद्यैरपि भूषणैः ॥ २७ ॥

माल्यैर्गन्धैस्तथा देवमलङ्कृत्य विशेषतः ।
दिने शुभेऽनुकूले च मुहूर्ते च शुभे तथा ॥ २८ ॥

तण्डुलांश्च नवानद्भिश्चतुः प्रक्षालयेत्पुनः ।
अधिदेवं समभ्यर्च्य पात्राण्यद्भिर्विशोध्य च ॥ २९ ॥

गुडेन मिश्रीकृत्यैव नारिकेलफलान्वितान् ।
पात्रेषु तान् विनिक्षिप्य घृतेनाप्यभिघार्य च ॥ ३० ॥

वैष्णवैरभिमृश्यैव तदस्य प्रियमित्यपि ।
आप्यायन्तां ध्रुवेत्युक्त्वा तण्डुलांस्तान् निवेदयेत् ॥ ३१ ॥

पुनराचमनं दत्त्वा मुखवासं यथाविधि ।
पुनरभ्यर्च्य देवेशमुपदंशादिभिर्युतम् ॥ ३२ ॥

महाहविः प्रभूतं वा यथाशक्ति निवेदयेत् ।
मूर्तिहोमं च जुहुयात्परिवारेभ्य एव च ॥ ३३ ॥

निवेदयेद्यथाशक्ति बलिं चापि ददेत्क्रमात् ।
तण्डुलान् देवशेषांश्च प्राश्नीयुर्नियता द्विजाः ॥ ३४ ॥

एवमाग्रयणं विष्णोः कारयेद्यो मुदान्वितः ।
धान्यादिसर्ववृद्धिं च लभतेऽन्यद्यथेप्सितम् ॥ ३५ ॥

मासेऽस्मिंश्च भवेन्नित्यं भक्त्या धान्यं ददाति यः ।
संवत्सरहविर्दानाद्यत्फलं तदवाप्नुयात् ॥ ३६ ॥

सुवर्णाभरणं भक्त्या यथाशक्ति ददाति यः ।
सर्वैश्वर्यमवाप्यैव वैष्णवं पदमाप्नुयात् ॥ ३७ ॥

कार्तिक्यां पौर्णमास्यां च दीपदानविधिस्त्वयम् ।
तद्दिने चापराह्णे तु दीपार्थं च घृतं बहु ॥ ३८ ॥

तैलं वाऽप्यथ संभृत्य पिचुवर्तीश्च संभरेत् ।
देवालयं च परितो मृष्टसिक्तोपलेपनैः ॥ ३९ ॥

अलङ्कारैरलंकुर्यादन्यैरपि च शोभनैः ।
देवेशमपि वस्त्राद्यैर्भूषणैरपि मङ्गलैः ॥ ४० ॥

गन्धैः सुगन्धपुष्पाद्यैरलङ्कुर्यात्प्रयत्नतः ।
प्रदोषकाले प्राप्ते तु दीपानुद्दीपयेद्बहून् ॥ ४१ ॥

विमाने गर्भगेहे च सोपाने मुखमण्टपे ।
प्राकारेषु च सर्वेषु तथा स्नपनमण्टपे ॥ ४२ ॥

आस्थानमण्टपे चापि सर्वत्रापि तदालये ।
द्वारेष्वपि च सर्वेषु दीपानुद्दीपयेत्तथा ॥ ४३ ॥

नित्यार्चनान्ते तं देवमर्चयित्वा यथाविधि ।
महाहविः प्रभूतं वा हवींष्यपि निवेदयेत् ॥ ४४ ॥

पूर्वोक्तविधिना पक्वान्यपूपानि बहूनि च ।
पृथुकान् गुलसंमिश्रान् यथाशक्ति निवेदयेत् ॥ ४५ ॥

एवं यः कुरुते भक्त्या ज्ञानैश्वर्यसमन्वितः ।
कीर्तिदीप्तिसमायुक्तः सुचिरं दिवि मोदते ॥ ४६ ॥

तस्मिन् मासेऽप्यविच्छिन्नं नित्यदीपं च शक्तितः ।
सन्ध्यादीपं च वा दद्यात्सोऽपि तत्फलमाप्नुयात् ॥ ४७ ॥

नित्यस्य दीपदानस्य फलं मासाल्लभेत सः ।
मार्गमासस्वरूपोऽभूद्भगवान् कमलापतिः ॥ ४८ ॥

तच्छुक्लद्वादशीपूजामुत्तरत्र वदाम्यहम् ।
मार्गशीर्षे च द्वादश्यां पूजनं सर्वसिद्धिदम् ॥ ४९ ॥

तैष्ये गव्येन पयसा नित्यं संस्नापयेद्धरिम् ।
संवत्सरफलं यस्मात्तस्मान्मासार्चनाल्लभेत् ॥ ५० ॥

मासे तन्मासनक्षत्रे पौर्णमासीसमायुते ।
उत्सवं स्नपनं चापि शक्तश्चेत्कारयेद्बुधः ॥ ५१ ॥

माघमासे च नक्षत्रे पूर्वपक्षे पुनर्वसौ ।
जयन्तीति समाख्याता तस्यां सम्यगुपोष्य च ॥ ५२ ॥

मध्याह्ने राघवं सम्यगर्चयित्वा समाहितः ।
उत्सवस्नपनादीनि कारयेत यथाक्रमम् ॥ ५३ ॥

धूपद्रव्यैर्यथाप्रोक्तैर्धूपदानेन यद्भवेत् ।
नित्यधूपात्फलं यत्स्यादस्मिन् मासे च तद्भवेत् ॥ ५४ ॥

फाल्गुने मासि नक्षत्रे पादे चादौ च फल्गुने ।
श्रीदेवी प्रादुरासीद्धि तस्मात्तस्मिन् दिने तथा ॥ ५५ ॥

देव्या सहैव देवस्य चोत्सवं स्नपनं बुधः ।
कारयित्वा समभ्यर्च्य हवींष्यपि निवेदयेत् ॥ ५६ ॥

अथवा केवलाद्भिश्च स्नापयित्वा निवेदयेत् ।
देवदेव्योः प्रसादेन यथेष्टं तदवाप्नुयात् ॥ ५७ ॥

तद्दिने श्रियमभ्यर्च्य श्रीकामः श्रियमाप्नुयात् ।
मासेऽस्मिन् गन्धदानेन नित्यगन्धफलं लभेत् ॥ ५८ ॥

चैत्रमासे पौर्णमास्यां सुगन्धानि बहूनि च ।
प्रयत्नेनैव पुष्पाणि फलानि च बहून्यपि ॥ ५९ ॥

संभृत्यैव च पुष्पाद्यैर्देवं देव्यौ यथोचितम् ।
अलङ्कुर्याद्विमानं च सर्वत्र परितोऽपि च ॥ ६० ॥

अलङ्कृत्य तथाभ्यर्च्य हवींषि च निवेदयेत् ।
चैत्र्यां तु पुष्पदानेन नित्यपुष्पफलं लभेत् ॥ ६१ ॥

वैशाखमासे पानीयं शुद्धं स्वादु सुशीतलम् ।
सुगन्धितं जलं स्वच्छमुत्पूतं च ददेत्ततः ॥ ६२ ॥

नित्यपानीयदानस्य फलं तेनैव लभ्यते ।
ज्येष्ठे मासे तथा मूले पौर्णमास्यां तथैव च ॥ ६३ ॥

सुगन्धैः शुद्धतोयैश्च स्नापयित्वा हरिं परम् ।
वस्त्रैर्नवैरलङ्कुर्यात्कौशेयाद्यैश्च शक्तितः ॥ ६४ ॥

अर्चयित्वा विधानेन हवींषि च निवेदयेत् ।
विष्णोर्यः कारयेदेवं वस्त्राणां वृद्धिमेति सः ॥ ६५ ॥

मासेऽस्मिंश्छत्रदानं च स्नानदानं च शस्यते ।
आषाढे मासि वाषाढ्यां पौर्णमास्यां च पूर्ववत् ॥ ६६ ॥

उत्सवस्नपनादीनि कारयेत हरेः प्रभोः ।
अस्मिन् मासे तथार्घ्यस्य दानमुत्तममुच्यते ॥ ६७ ॥

श्रावणे मासि नक्षत्रे श्रवणे च प्रयत्नतः ।
उत्सवस्नपनादीनि कारयेत स्वशक्तितः ॥ ६८ ॥

श्रावणे मासि तस्मिंश्च कृष्णपक्षे विशेषतः ।
अष्टमी रोहिणीयुक्ता सा जयन्तीति कीर्तिता ॥ ६९ ॥

तत्रोपवासं कृत्वैव स्नापयित्वा निवेदयेत् ।
मासे प्रोष्ठपदे चापि श्रवणर्क्षदिने तथा ॥ ७० ॥

उत्सवं कारयेद्विष्णोरुत्सवोक्तक्रमेण च ।
मासेऽस्मिंस्तु हविर्भक्त्या विष्णोर्यः संनिवेदयेत् ॥ ७१ ॥

नित्यं च हविषो दानाद्यत्फलं स्याल्लभेच्च तत् ।
मार्गशीर्षकमासस्तु मासानां श्रेष्ठ उच्यते ॥ ७२ ॥

तन्मासे तु कृतं सर्वमनन्तं फलमुच्यते ।
द्वादशीश्रवणं तस्मिन्नमावास्या तथोत्तरे ॥ ७३ ॥

उपवासव्रतं चान्यत्तत्तन्मासे समाचरेत् ।
अतः परं प्रवक्ष्यामि द्वादशीकल्पमुत्तमम् ॥ ७४ ॥

मार्गशीर्षकमासे च शुक्लपक्षे विधानतः ।
द्वादश्यां च प्रयत्नेन विष्णोरुत्सवमाचरेत् ॥ ७५ ॥

एकादश्यां च पूर्वस्यामुदयात्पूर्वमेव च ।
स्नात्वा स्नानविधानेन सन्ध्यां सम्यगुपास्य च ॥ ७६ ॥

देवादींस्तर्पयित्वैव भक्तियुक्तो मुदा युतः ।
देवदेवं प्रणम्यैव सन्निधौ समुपास्य च ॥ ७७ ॥

समाहितो हरिं ध्यायन् मन्त्रमष्टाक्षरं जपेत् ।
ऋचोऽप्यन्यास्तथा ध्यायन् जपेद्भक्त्यैव वैष्णवीम् ॥ ७८ ॥

संहिताध्ययनं चापि यथाकामं समाचरेत् ।
मध्याह्ने च तथा सायं स्नानकर्म समाचरेत् ॥ ७९ ॥

कथास्तु वैष्णवीर्भक्त्या कीर्तयेच्छृणुयात्ततः ।
वैष्णवं व्रतमातिष्ठन्नुपवासं समाचरेत् ॥ ८० ॥

ध्यायन्नेव तथा सायं स्नानकर्म समाचरेत् ।
रात्रावपि तथा ध्यायन्नासीताथ शयीत वा ॥ ८१ ॥

द्वादश्यां च पुनः प्रातः स्नात्वा स्नानविधानतः ।
तथा सन्ध्यामुपास्यैव तर्पयित्वा तथैव च ॥ ८२ ॥

नित्यजप्यानि जप्त्वा च देवदेवं प्रणम्य च ।
भक्त्या च परया युक्तः श्रद्धया च मुदा तदा ॥ ८३ ॥

उत्सवोक्तक्रमेणैव देवस्योत्सवमाचरेत् ।
अशक्तः कलशैर्देवं स्नापयेत यथाक्रमम् ॥ ८४ ॥

हविष्पाकविधानेन गौल्यादीनि हवींष्यपि ।
यथाशक्ति यथाभक्ति पाचयेत यथाविधि ॥ ८५ ॥

द्वात्रिंशद्विग्रहैर्देवं ध्यायन् भक्त्या समर्चयेत् ।
घृतोपदंशसंयुक्तं हवींषि च निवेदयेत् ॥ ८६ ॥

कदल्यादीनि पक्वानि फलान्यपि निवेद्य च ।
कर्पूरादिसमायुक्तं ताम्बूलं क्रमुकैर्युतम् ॥ ८७ ॥

मुखवासं यथाशक्ति भक्तियुक्तो निवेदयेत् ।
अशक्तः केवलैरद्भिः शुद्धैर्गन्धसमायुतैः ॥ ८८ ॥

स्नापयित्वा तथाभ्यर्च्य हविर्गौल्यं निवेदयेत् ।
अशक्तो हविरन्यद्वा देवेशाय निवेदयेत् ॥ ८९ ॥

पाणिभ्यां परिपूर्णाभ्यां पुष्पाण्यादाय चात्वरः ।
पुष्पाञ्जलिस्तु बहुशो देवदेवस्य पादयोः ॥ ९० ॥

षड् वैष्णवान् जपन् मन्त्रान् दद्याद् ध्यायन् हरिं परम् ।
प्रणामान् पञ्च पूर्वोक्तान् यथाकामं समाचरेत् ॥ ९१ ॥

जप्त्वैव पौरुषं सूक्तं विष्णुसूक्तं जपेत्पुनः ।
आलये वा गृहे वापि सामान्योऽयं विधिः स्मृतः ॥ ९२ ॥

हरेरेवं विधानेन भक्त्या च परया मुदा ।
मार्गशीर्षकमासे च द्वादश्यामर्चने कृते ॥ ९३ ॥

नित्यार्चने विशेषे च सर्वत्रापि प्रमादतः ।
संवत्सरेऽपि यन्न्यूनं सर्वं पूर्णं भवेद्बुधाः ॥ ९४ ॥

नित्यार्चनायां ये दोषाः सर्वे नश्यन्त्यसंशयः ।
द्वादश्यामर्चनादेव हरिः प्रीततरो भवेत् ॥ ९५ ॥

नित्यार्चनफलं चास्माल्लभते परमव्ययम् ।
श्रवणद्वादशीयोगे फलं वक्तुं न शक्यते ॥ ९६ ॥

एवं कृत्वाऽर्चनं देवे ऋषयो बहवः पुरा ।
राजर्षयस्तथाऽन्ये वै जग्मुस्तत्परमं पदम् ॥ ९७ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे पुण्यर्क्षेषु विशेषार्चनविधिर्नाम सप्तचत्वारिंशोऽध्यायः ॥

---

## अष्टचत्वारिंशोऽध्यायः

अथातः परिवाराणां सर्वेषां च यथाक्रमम् ।
प्रतिष्ठाया विधानं तु पृथगत्र प्रवक्ष्यते ॥ १ ॥

पुराणस्य च कुर्याच्चेत्सोपानस्य च दक्षिणे ।
भृगोश्च यदि कुर्यात्तु सोपानस्योत्तरे तथा ॥ २ ॥

औपासनविधानेन कुण्डं कुर्याद् द्वयोरपि ।
ब्रह्मणः शङ्करस्यापि कुर्याच्चेत्तद्वदाचरेत् ॥ ३ ॥

इन्द्रस्याभिमुखे कुर्यादग्नेरपि तथैव च ।
यमस्य पूर्वपार्श्वे च निर्ऋतेः प्रमुखे तथा ॥ ४ ॥

दक्षिणे वरुणस्यापि वायोरपि तथैव च ।
पश्चिमे च कुबेरस्य विष्वक्सेनस्य पश्चिमे ॥ ५ ॥

ईशानस्य रवेश्चापि तयोरालयपूर्वतः ।
दक्षिणे गरुडस्यापि चक्रस्यापि च दक्षिणे ॥ ६ ॥

ध्वजदेवस्य शङ्खस्य महाभूतस्य दक्षिणे ।
अन्येषां परिवाराणामालयाभिमुखे तथा ॥ ७ ॥

द्विहस्तायतविस्तारां तालोत्सेधां प्रमाणतः ।
बिम्बार्धाधिकमानां वा शय्यावेदिं प्रकल्पयेत् ॥ ८ ॥

शय्यावेद्यास्तु पूर्वस्यां दक्षिणे वाथवा पुनः ।
औपासनविधानेन कुण्डमग्नेश्च कारयेत् ॥ ९ ॥

बिम्बं यदि भवेत्तेषां तन्मन्त्रेणाक्षिमोचनम् ।
अधिवासश्च कर्तव्यः पूर्वोक्तेन विधानतः ॥ १० ॥

कुम्भं च द्रोणपूर्णं वै कालखण्डादिवर्जितम् ।
आघारं जुहुयात्पश्चादौपासनविधानतः ॥ ११ ॥

तन्तुना कुम्भमावेष्ट्य जलेन परिपूर्य च ।
वस्त्राभ्यां वेष्टयित्वैव तत्तदायुधसंयुतम् ॥ १२ ॥

रत्नादीनि विनिक्षिप्य कुम्भपूजां समाचरेत् ।
तं तं देवं विधानेन कुम्भे ध्यायेद्यथाविधि ॥ १३ ॥

औपासनाग्निमादाय कृत्वाघारं यथाविधि ।
कलशैः स्नापयित्वा च बध्वा प्रतिसरां तथा ॥ १४ ॥

शयनानि तथास्तीर्य पुण्याहं वाचयेत्पुनः ।
शयने शाययेत्तत्र देवपार्श्वे शिरो भवेत् ॥ १५ ॥

उत्तराच्छादनं कृत्वा हौत्रं शंसेत्तथैव च ।
तत्तन्मूर्तिभिरावाह्य निरूप्याज्याहुतीर्यजेत् ॥ १६ ॥

सर्वेषां परिवाराणां प्रतिष्ठोक्तक्रमेण वै ।
तत्तन्मन्त्रेण तद्धोमे वैष्णवेन समायुतम् ॥ १७ ॥

आज्यं विंशतिकृत्वस्तु जुहुयात्तमनुस्मरन् ।
यस्य यस्य च देवस्य तत्तन्मन्त्रमुदीरयन् ॥ १८ ॥

यस्य यस्य च देवस्य मूलमन्त्रो न विद्यते ।
मूर्तिमन्त्रैश्चतुर्भिश्च जहुयात्तस्य पूर्ववत् ॥ १९ ॥

तत्तद्धोमे तथा पश्चादन्त्यहोमः सुहूयताम् ।
ततः प्रभाते स्नात्वैव कुम्भं विम्बं विनीय च ॥ २० ॥

तत्तत्स्थानं प्रविश्यैव तत्तन्मन्त्रमुदीरयन् ।
रत्नन्यासं यथालाभं कृत्वा तत्र विधानतः ॥ २१ ॥

तत्तन्मन्त्रेण तद्बिम्बं प्रतिष्ठाप्य समाहितः ।
उक्तबीजाक्षरं वाथ तन्नामाद्यक्षरं तु वा ॥ २२ ॥

हृदये तस्य देवस्य न्यसेत्तद्बीजमक्षरम् ।
मकारं मार्कण्डेयस्य भृकारं च भृगोरपि ॥ २३ ॥

मकारं ब्रह्मणस्तद्वदुकारं शङ्करस्य तु ।
इन्द्रस्य च इकारं वै पकारं पावकस्य तु ॥ २४ ॥

षकारं यमदेवस्य पकारं निर्ऋतेरपि ।
वकारं वा सकारं वा वरुणस्य तथैव च ॥ २५ ॥

वायोर्यकारं राकारं कुबेरस्य विधानतः ।
विकारं विष्वक्सेनस्य शकारं चेश्वरस्य च ॥ २६ ॥

ऋकारं वा खकारं वा भास्करस्य विशेषतः ।
जकारं गरुडस्यापि चकारं चक्रदैवते ॥ २७ ॥

जकारं च ध्वजस्योक्तं शकारं शङ्खदैवतम् ।
भकारं भूतदैवत्यं स्मृत्वा बीजाक्षरं न्यसेत् ॥ २८ ॥

बीजाक्षरो विशेषेण यस्य देवस्य नोच्यते ।
तस्य बीजाक्षरः प्रोक्तस्तस्य नामादिकोऽक्षरः ॥ २९ ॥

तत्तद्बेरस्य हृदये तत्तद्बीजाक्षरं न्यसेत् ।
कुम्भे शक्तियुतं तीर्थं कूर्चेनादाय च क्रमात् ॥ ३० ॥

तं तं देवं तथा ध्यायन् तत्तन्मूर्धनि संस्रवेत् ।
तत्तन्मूर्तेस्तु मन्त्रेण क्रमादावाहयेत्पुनः ॥ ३१ ॥

आसनाद्युपचारैश्च तत्तन्मूर्तिभिरेव च ।
अर्चयित्वा विधानेन हविस्सम्यङ्निवेदयेत् ॥ ३२ ॥

अनुक्तमत्र तत्सर्वं पूर्ववत्कारयेद्बुधः ।
यथोक्तदक्षिणार्धं वा पादं वा शक्तितो ददेत् ॥ ३३ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे प्रतिष्ठाविधिर्नामाष्ट-
चत्वारिंशोऽध्यायः ॥

---

# एकोनपञ्चाशोऽध्यायः



अतः परं प्रवक्ष्यामि स्नपनं वै समासतः ।
उत्सवान्ते च विषुवे ग्रहणे चन्द्रसूर्ययोः ॥ १ ॥

अयने च प्रतिष्ठान्ते विष्णुपञ्चदिनेषु च ।
पुण्यर्क्षेष्वपि चान्येषु स्नापयेच्च यथाक्रमम् ॥ २ ॥

गुरुशुक्रोदयेऽब्दान्ते युगान्ते च विधानतः ।
दुर्भिक्षेऽवग्रहे चापि व्याध्याद्यशुभसम्भवे ॥ ३ ॥

सर्वोपद्रवशान्त्यर्थं सर्ववृध्द्यर्थमेव च ।
देवेशं कलशैर्भक्त्या स्नापयेद्विधिवित्तमः ॥ ४ ॥

स्नपनोक्तदिनात्पूर्वं नवमे वाऽथ सप्तमे ।
पञ्चमेऽहनि वा कुर्याद्विधिनैवाङ्कुरार्पणम् ॥ ५ ॥

अङ्कुरानर्पयित्वैव द्रव्याण्यपि समाहरेत् ।
मृदं च पर्वतांश्चापि धान्यान्यप्यङ्कुरांस्तथा ॥ ६ ॥

मङ्गलान्यप्यथैतानि प्राग्द्रव्याणि विदुर्बुधाः ।
पञ्चगव्यं घृतं चैव मधु चातः परं दधि ॥ ७ ॥

क्षीरगन्धोदकं तद्वदक्षतोदफलोदकम् ।
कुशोदकं च रत्नोदं जप्योदकमतः परम् ॥ ८ ॥

सर्वौषध्युदकं चापि पञ्चगव्यादिकानि च ।
प्रधानानीति चोक्तानि द्वादशानि पुरातनैः ॥ ९ ॥

पुण्यपुष्पं च चूर्णं च कषायं तीर्थवारि च ।
वनौषधिसमायुक्तं हारिद्रं चूर्णमेव च ॥ १० ॥

तथैव सर्वगन्धं च मूलगन्धमतः परम् ।
आत्मद्रव्याणि चैतानि पुण्यपुष्पादिकानि वै ॥ ११ ॥

धौतवस्त्रोत्तरीये च धातुराभरणं तथा ।
पुष्पमाला च गन्धं च सप्तैतानि तथैव च ॥ १२ ॥

स्नपनेषु च सर्वेषु सामान्यानि भवन्ति वै ।
पुष्पद्रव्याणि धान्यानि गन्धद्रव्याणि चाक्षतान् ॥ १३ ॥

तन्तुदर्भान् कुशांश्चापि वस्त्राणि च विशेषतः ।
धूपद्रव्यं फलं चापि मधु क्षीरं घृतं दधि ॥ १४ ॥

उक्तानि स्नपनार्थं तु द्रव्याण्यन्यानि चाहरेत् ।
पक्वबिम्बफलाकारान् खण्डस्फुटितवर्जितान् ॥ १५ ॥

आढकैः परिपूर्णांश्च कलशानाहरेच्छुभान् ।
भिन्नान् जीर्णानपक्वांश्च सकाळानपि वर्जयेत् ॥ १६ ॥

कलशानां पिधानार्थं शरावांश्च यथोचितान् ।
द्रव्यसंग्रहणार्थं तु शरावान् प्रस्थपूरणान् ॥ १७ ॥

द्रोणार्धपूर्णान् करकान् द्रोणपूर्णान् घटानपि ।
उदधानीं च षड्द्रोणसम्पूर्णामपि कारयेत् ॥ १८ ॥

सम्यग् दग्धान् नवान् सर्वान् पूर्वमेव समाहरेत् ।
कलशाश्चाढकैः पूर्णाः ग्राह्यास्तु मनुजैः शुभाः ॥ १९ ॥

द्रोणार्धपूर्णा ऋषिभिः संग्राह्याः कलशाः स्मृताः ।
द्रोणपूर्णास्तु कलशा देवैर्ग्राह्यास्तथैव च ॥ २० ॥

प्रमुखे चोत्तरे सम्यगैशान्ये च विशेषतः ।
प्रोक्ष्योपलिप्य तत्स्थानमलङ्कृत्य च तत्र वै ॥ २१ ॥

धूपदीपसमायुक्तो धान्यान्यपि विकल्प्य च ।
संस्थाप्योलूखलं शुद्धं मुसलं च सुसंन्यसेत् ॥ २२ ॥

सोमं चोलूखलेऽभ्यर्च्य मुसले च सुदर्शनम् ।
हरिद्राणां सिनीवालीमर्चयेत यथाविधि ॥ २३ ॥

दासीः संपूजयेन्नारीर्जयादीन्मनसा स्मरन् ।
ताभिः संचूर्णयित्वैव सुवर्णं तत्र निक्षिपेत् ॥ २४ ॥

चूर्णयित्वा पुनश्चूर्णं कलशेन समाहरेत् ।
मृदं चूर्णं कषायं च सर्वगन्धं तथैव च ॥ २५ ॥

संशोध्य चूर्णयित्वैव शरावेषु समाहरेत् ।
पूर्वेद्युरेव रात्रौ तु देवेशमभिभूष्य च ॥ २६ ॥

यमाग्न्योर्मध्यमे देशे शयनं संप्रकल्प्य च ।
व्रीहिभिस्तण्डुलैस्तत्र स्थण्डिलं संप्रकल्प्य च ॥ २७ ॥

ऊर्ध्वे पञ्च शयनानि चर्मजादीनि संस्तरेत् ।
वेदाहमिति तत्रोर्ध्वे वस्त्रेण परिवेष्टयेत् ॥ २८ ॥

अभ्युक्ष्य शयने तत्र देवेशं स्थापयेत्ततः ।
पूर्वोक्तगुणसम्पन्नैर्यजमानेन पूजितैः ॥ २९ ॥

आचार्याद्यैर्विशुद्धैस्तु पुण्याहमपि वाचयेत् ।
बध्वा प्रतिसरां तत्र शाययेन्मन्त्रमुच्चरन् ॥ ३० ॥

उत्तराच्छादनं कृत्वा चामराद्यैश्च वीजयेत् ।
नृत्यैर्गेयैस्तथा वाद्यैर्जयशब्दैश्च घोषयेत् ॥ ३१ ॥

आलयाभिमुखे तस्मादैशान्ये चोत्तरेऽथवा ।
यथोक्तेन विधानेन कारयेत्स्नपनालयम् ॥ ३२ ॥

मण्टपं वाथ कूटं वा प्रपां वा शुभदर्शनाम् ।
कारयित्वैव तन्मध्ये चौपासनविधानतः ॥ ३३ ॥

शिलयाऽथेष्टकाभिर्वा सुधयाथ मृदैव वा ।
उत्तरे जलमार्गेण युक्तं श्वभ्रं च कारयेत् ॥ ३४ ॥

अधिके बेरपीठे तु परितस्तु चतुर्दिशम् ।
चतुरङ्गुलमुत्सृज्य श्वभ्रवेदिं तथाऽऽचरेत् ॥ ३५ ॥

श्वभ्रं तत्कदलीपत्रैः पद्मस्याथोत्पलस्य च ।
कुमुदस्य हरिद्रस्य पत्रैर्वाऽच्छादयेत्ततः ॥ ३६ ॥

ऊर्ध्वे वितानेनाच्छाद्य स्थूणानां वेष्टनं चरेत् ।
ध्वजैः पताकैर्दीपैश्च धूपैस्तद्दर्भमालया ॥ ३७ ॥

मुक्तादामाङ्कुरैश्चान्यैरलङ्कुर्युर्यथोचितम् ।
परितः श्वभ्रवेद्यास्तु चर्यादिशं व्यपोह्य च ॥ ३८ ॥

श्वभ्रस्य परितश्चैव व्रीहिभिस्तण्डुलैरपि ।
पङ्क्तिं द्वितालविस्तारां चतुरङ्गुलकोच्छ्रयाम् ॥ ३९ ॥

अथवा त्र्यङ्गुलोत्सेधां द्व्यङ्गुलोच्छ्रयसंयुताम् ।
कृत्वा तल चतुर्दिक्षु प्रागादिषु यथाक्रमम् ॥ ४० ॥

द्वितालविस्तृतद्वारं निर्गमाय च कल्पयेत् ।
कलशेऽधिके तथा कुर्युः पङ्क्ती द्वे तिस्र एव वा ॥ ४१ ॥

यावन्तः कलशाः सन्ति तेषां न्यासार्हमेव च ।
तावद्विस्तारसंयुक्तामेकां वा पङ्क्तिमाचरेत् ॥ ४२ ॥

नीलवारुणमध्ये तु पङ्क्तौ पङ्क्तीशपीठिकाम् ।
व्रीहिभिस्तण्डुलैर्वाथ तालविस्तारसंयुताम् ॥ ४३ ॥

षडङ्गुलोन्नतां कृत्वा कुबेरेशानयोर्बुधः ।
मध्ये तु विष्वक्सेनस्य पीठं कुर्याच्च पूर्ववत् ॥ ४४ ॥

तत्पङ्क्तौ तु मृदादीनि सर्वद्रव्याणि विन्यसेत् ।
तथा पङ्क्तिबहुत्वेऽपि कलशेषु बहुष्वपि ॥ ४५ ॥

तत्तत्स्थाने यथोक्ते वा तत्तद्द्रव्याणि विन्यसेत् ।
प्रधाने पञ्चगव्याद्यैर्द्रव्यैर्द्वादशभिः क्रमात् ॥ ४६ ॥

सम्पूर्णाः कलशास्सर्वे प्रधानकलशाः स्मृताः ।
शुद्धोदकैः सुगन्धैश्च सम्पूर्णाः कलशाश्च ये ॥ ४७ ॥

ते तु प्रधानोपस्नानादुपस्नाना इतीरिताः ।
पञ्चगव्यादिभिर्द्रव्यैः पूरयित्वा पृथक् पृथक् ॥ ४८ ॥

चतुरश्चतुरश्चैव प्रधानान् कलशान् क्रमात् ।
द्वौ द्वौ वाऽप्यथवैकैकमाहरेत स्वशक्तितः ॥ ४९ ॥

उत्तमं मध्यमं चेति कनिष्ठं त्रिविधं स्मृतम् ।
उपस्नानांश्च कलशांश्चतुरश्चतुरोऽथवा ॥ ५० ॥

षट् षट् च सप्त सप्ताथ कलशान् वाहरेत्तथा ।
तन्तुना कलशान् सर्वान् वेष्टयेच्च यवान्तरम् ॥ ५१ ॥

अथाङ्गुल्यन्तरं वापि कलशान् परिवेष्टयेत् ।
प्रधानद्रव्यसम्पूर्णाः प्रधानकलशास्तु ते ॥ ५२ ॥

पञ्चगव्यादिकलशा उपस्नानसमन्विताः ।
अष्टावष्टाविति प्रोक्ताः सर्वे चापि पृथक् पृथक् ॥ ५३ ॥

हरिद्राचूर्णसम्पूर्णाः कलशाश्च तथैव च ।
उपस्नानयुतास्सम्यगष्टौ तु कलशाः स्मृताः ॥ ५४ ॥

नद्यादिजलसम्पूर्णाश्चत्वारः कलशास्तथा ।
अष्टोत्तरशतं प्रोक्तं कलशानां तु संख्यया ॥ ५५ ॥

दिवैव शुद्धपात्रे च गृह्णीयादुदकं शुभम् ।
धारास्विति च संगृह्य वस्त्रेणोत्पवनं चरेत् ॥ ५६ ॥

इदमापश्शिवेत्युक्त्वा जलं तदभिमन्त्रयेत् ।
रात्रौ जलं न गृह्णीयाद्गृह्णीयादग्निसन्निधौ ॥ ५७ ॥

मधु क्षीरं घृतं सम्यगुत्पूयैव समाहरेत् ।

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे स्नपनद्रव्यसमुच्चयो नामैकोनपञ्चाशोऽध्यायः ॥

---

## पञ्चाशोऽध्यायः

---

पङ्क्तीशं शैषिकं चापि पङ्क्तौ पीठे समर्चयेत् ।
अर्घ्यान्तमर्चयित्वा तु पङ्क्तौ दर्भान् विकीर्य च ॥ १ ॥

मृदादिद्रव्यसंयुक्तान् कलशान् विन्यसेत्क्रमात् ।
नारायणाय विद्मेति सर्वान् संपूरयेद्बुधः ॥ २ ॥

नद्यां तटाके दर्भाणां मूले सस्यसमुद्भवे ।
गजदक्षिणदन्ते च वृषशृङ्गे च दक्षिणे ॥ ३ ॥

वल्मीके च कुलीरस्य निवासे च मृदं तथा ।
हृत्वा मृदः शरावेषु चाष्टावष्टासु पूरयेत् ॥ ४ ॥

सर्वालाभे तु नादेयदर्भमूलमृदं तु वा ।
ऐशान्यादि मृदोऽष्टौ च सौम्यान्तं संन्यसेत्क्रमात् ॥ ५ ॥

मृदादिसर्वद्रव्याणि गायत्रीं वैष्णवीं वदन् ।
तत्तत्स्थाने यथोक्ते च विन्यसेत्तान्यसंकरम् ॥ ६ ॥

हिमवान् दुर्जयो विन्ध्यो विदूरो वेदपर्वतः ।
महेन्द्रश्च पुरी चन्द्रशतशृङ्गाश्चपर्वताः ॥ ७ ॥

याज्ञिकैरेव वृक्षैस्तु कारयेत्पर्वतानिमान् ।
अष्टाङ्गुलोच्छ्रयान् मूले विस्तारस्तु षडङ्गुलः ॥ ८ ॥

ऊर्ध्वे च त्र्यङ्गुलं चैव चतुरश्रान् क्रमात्कृशान् ।
एवमष्टौ तु वृक्षैस्तु मृदा वा पर्वतान् कृतान् ॥ ९ ॥

ऐन्द्रादि च तदैशान्तं पङ्क्ति बाह्ये तु विन्यसेत् ।
शालिव्रीहियवा मुद्गास्तिलमाषाः प्रियङ्गवः ॥ १० ॥

गोधूमाश्चणकास्तिल्वा मसूराश्चातसी तथा ।
कुलुत्थाः सर्षपाश्चैव षष्टिनिष्पाव एव च ॥ ११ ॥

धान्यानि प्रस्थमात्राणि शरावेषु प्रपूर्य च ।
आग्नेयादि च याम्यान्तं धान्यान्येतानि विन्यसेत् ॥ १२ ॥

धान्यानामप्यलाभे तु यवं प्रतिनिधिं हरेत् ।
तस्याप्यलाभे मुद्गं वा गृह्णीयादिति केचन ॥ १३ ॥

अङ्कुरार्पणकाले तु स्नपनार्थाङ्कुरानपि ।
अर्पयित्वा च पूर्वोक्तान् शरावेषु निधाय च ॥ १४ ॥

यमनैर्ऋतयोर्मध्ये विन्यसेदङ्कुरांस्तथा ।
अङ्कुराणामलाभे तु दूर्वाङ्कुरमथाहरेत् ॥ १५ ॥

पुष्पाणि वा समादाय तत्तद्ध्यात्वा ददेत्पुनः ।
श्रीवत्सं पूर्णकुम्भं च भेरीमादर्शनं तथा ॥ १६ ॥

मत्स्ययुग्मं तथा सम्यगङ्कुशं शङ्खमेव च ।
आवर्तं च तथैतांश्च मङ्गलान् विधिना तथा ॥ १७ ॥

याज्ञिकैरेव वृक्षैस्तु सप्ताङ्गुलसमुच्छ्रयान् ।
यथैव तत्तद्रूपं तु तथारूपांस्तु कारयेत् ॥ १८ ॥

चतुरङ्गुलमुत्सेधं तेषां पीठं विधीयते ।
उक्तवृक्षैर्मृदा वाथ कारयेत विधानतः ॥ १९ ॥

पर्वतान् मङ्गलांश्चापि मृण्मयानाहरेद्दृढम् ।
प्राग्द्वारे दक्षिणे भागे श्रीवत्सं संन्यसेद्बुधः ॥ २० ॥

आग्नेय्यां पूर्णकुम्भं तु दक्षिणे द्वारपश्चिमे ।
भेरीं तु नैर्ऋते देशे दर्पणं संन्यसेद् बुधः ॥ २१ ॥

उत्तरे पश्चिमद्वारान्मत्स्ययुग्मं च संन्यसेत् ।
वायव्ये चाङ्कुशं न्यस्य चोत्तरद्वारपूर्वतः ॥ २२ ॥

शङ्खं संन्यस्य चावर्तमैशान्यां दिशि विन्यसेत् ।
षोडशांशस्य चैकांशं घृतं तद्द्विगुणं दधि ॥ २३ ॥

त्रिकांशं क्षीरमुद्दिष्टं चतुरंशं तु गोमयम् ।
षडंशं चेति गोमूत्रं योजयेत्पञ्चगव्यके ॥ २४ ॥

ऐशान्यां पञ्चगव्यैश्च सम्पूर्णान् कलशान् न्यसेत् ।
सद्यः पक्वं घृतं श्रेष्ठं मासादूर्ध्वं तु वर्जयेत् ॥ २५ ॥

घृतसम्पूर्णकलशान् न्यसेदैन्द्रस्य चोत्तरे ।
मधु शुद्धं फलोद्भूतं पुष्पजं वा समाहरेत् ॥ २६ ॥

मधूक्ते तत्र तोयं वा नारिकेलजलं तु वा ।
नारिकेलजलैश्चेत्तु स्नापयेत्सद्य एव तत् ॥ २७ ॥

मधुसम्पूर्णकलशानैन्द्राग्न्योर्मध्यमे न्यसेत् ।
ग्राहयेन्मृण्मये पात्रे नारिकेलाम्बु विन्यसेत् ॥ २८ ॥

दधि ग्राह्यमशुक्तं चेद् द्व्यहाभ्यन्तरगं शुभम् ।
दधिसम्पूर्णकलशानाग्नेय्यां स्थापयेद् बुधः ॥ २९ ॥

सद्यो दुग्धं पयः श्रेष्ठं यामातीतं परित्यजेत् ।
कलशान् क्षीरसम्पूर्णान् यमाग्न्योर्मध्यमे न्यसेत् ॥ ३० ॥

सर्वगन्धयुतं तोयं गन्धोदकमिति स्मृतम् ।
यमनैर्ऋतयोर्मध्ये न्यसेद्गन्धोदकं पुनः ॥ ३१ ॥

अक्षतैर्मिश्रितं तोयमक्षतोदकमुच्यते ।
यवसर्षपसव्रीहिमाषैस्तण्डुलमक्षतम् ॥ ३२ ॥

अक्षतानि च तद्द्रव्यं जलाष्टांशं विनिक्षिपेत् ।
अक्षतोदकसम्पूर्णान्नैर्ऋत्यां कलशान् न्यसेत् ॥ ३३ ॥

कदल्या नारिकेलस्य चूतस्य पनसस्य च ।
फलैश्च कामरस्यापि नारङ्गस्य तथैव च ॥ ३४ ॥

कुरुन्दोत्तमकुञ्ज्यादिफलैः शुद्धैः शुभैरपि ।
फलैः सुमिश्रितं तोयं फलोदकमिति स्मृतम् ॥ ३५ ॥

नीलवारुणयोर्मध्ये संन्यसेत्तु फलोदकम् ।
कुशाग्रैर्मिश्रितं तोयं कुशोदकमितीरितम् ॥ ३६ ॥

वरुणोदानयोर्मध्ये कुशोदकलशान् न्यसेत् ।
पद्मरागं च वज्रं च वैडूर्यं मौक्तिकं तथा ॥ ३७ ॥

प्रवालं च विदुः पञ्च पञ्चरत्नानि वै बुधाः ।
पुष्यरागं मरतकं गोमेधं चेन्द्रनीलकम् ॥ ३८ ॥

पूर्वैरेतैश्च युक्तानि नव रत्नानि वै विदुः ।
नवरत्नयुतं तोयं रत्नोदकमिति स्मृतम् ॥ ३९ ॥

यथालाभयुतं वाथ सुवर्णेनाथवा युतम् ।
रत्नोदकैश्च संपूर्णान् वायव्ये कलशान् न्यसेत् ॥ ४० ॥

अतोदेवादि षण्मन्त्रान् जपेत्तत्कलशोदकम् ।
दर्भैश्च संस्पृशन्नेव तज्जप्योदकमुच्यते ॥ ४१ ॥

(तान्) सोमोदानयोर्मध्ये जप्योदकलशान् न्यसेत् ।
सर्वौषधिसमायुक्तं सर्वौषध्युदकं भवेत् ॥ ४२ ॥

यथालाभौषधीयुक्तं तण्डुलैरथ संयुतम् ।
ईशानसोमयोर्मध्ये सर्वौषध्युदकं न्यसेत् ॥ ४३ ॥

उपस्नानांश्च कलशान् तेषां वामान्तरे न्यसेत् ।
सर्वेषु कलशेष्वेव कुशं कूर्चं तु वा क्षिपेत् ॥ ४४ ॥

पिधानैश्च शरावैस्तान् सर्वानेव पिधाय च ।
ऋतं सत्येति मन्त्रेण कलशानभिमन्त्रयेत् ॥ ४५ ॥

बिल्वं च करवीरं च पद्मं कुमुदमेव च ।
नन्द्यावर्तं चैकपद्मं तुलसी विष्णुपर्णिका ॥ ४६ ॥

अष्टौ च पुण्यपुष्पाणि चत्वार्याद्यानि चाथवा ।
एतान्यपि शरावेषु सम्यगेव प्रगृह्य च ॥ ४७ ॥

यमनैर्ऋतयोर्मध्ये पुण्यपुष्पाणि विन्यसेत् ।
श्रीवेष्टकमुशीरं च मसूरं चैकमुद्गकम् ॥ ४८ ॥

दमनकं तथा मुद्गं चणकांश्च तथैव च ।
चूर्णयित्वा तु सर्वान्वै शरावेषु प्रपूरयेत् ॥ ४९ ॥

नीलवारुणयोर्मध्ये तांश्च चूर्णान् सुविन्यसेत् ।
हारिद्रचूर्णैः संपूर्णान् कलशानपि तत्र वै ॥ ५० ॥

तदुपस्नानकलशैः संयुक्तांश्च सुविन्यसेत् ।
अश्वत्थस्य मधूकस्य खदिरस्य वटस्य च ॥ ५१ ॥

वञ्जुलासनयोश्चापि तथैवोदुम्बरस्य च ।
त्वच आहृत्य शुष्कांश्च कृत्वा संचूर्णयेत्ततः ॥ ५२ ॥

तच्चूर्णानां कषायाणि शरावेषु प्रगृह्य च ।
वरुणोदानयोर्मध्ये तत्कषायाणि विन्यसेत् ॥ ५३ ॥

नद्यां तटाके कूपे च पल्वले तीर्थमाहरेत् ।
तीर्थोदकैश्च चतुरः कलशानपि पूरयेत् ॥ ५४ ॥

तत्रैव तीर्थकलशान् काषायैस्सह विन्यसेत् ।
सैंही च नकुली व्याघ्रानन्ता चादित्यचम्पया ॥ ५५ ॥

पाठा च सहदेवी च दूर्वेत्यौषधयः स्मृताः ।
ता वनौषधीश्चापि शरावेषु निधाय च ॥ ५६ ॥

दानसोमयोर्मध्ये विन्यसेच्च वनौषधीः ।
ग्रौणेयकं हरेणुं च पलव्याघ्रनखागरु ॥ ५७ ॥

गां तु ध्यामकं चोचमेरूवालं च चोरकम्(?) ।
सीमपि त्वचं चैलं स्थिरा नारदसादनम् ॥ ५८ ॥

जातीफलं तथा चैव सर्वगन्धार्थमाहरेत् ।
एतांश्च चूर्णयित्वैव शरावेषु प्रपूर्य च ॥ ५९ ॥
कुबेरैशानयोर्मध्ये सर्वगन्धं च विन्यसेत् ।
नन्द्यावर्तमपामार्गं पालाशं च तथैव च ॥ ६० ॥
करवीरस्य पत्रं च दौर्वाण्यपि समाहरेत् ।
एतानि मूलगन्धानि शरावेषु प्रगृह्य च ॥ ६१ ॥
शान्तस्य पश्चिमे भागे स्पर्शनार्थानि विन्यसेत् ।
श्वेतं शुद्धं नवं सूक्ष्मं क्षौतवस्त्रं च धीयते ॥ ६२ ॥
मूलगन्धस्य पार्श्वे तु क्षौतवस्त्रं तु विन्यसेत् ।
जातिहिङ्गुलकं शुद्धमञ्जनं च मनश्शिला ॥ ६३ ॥
गोरोचनां च धातूंस्तान् शरावेषु प्रगृह्य च ।
शान्तस्य पूर्वभागे च तस्य पङ्क्त्यां सुविन्यसेत् ॥ ६४ ॥
स्थाने यथोक्तद्रव्याणि मन्त्रेणोक्तेन वै पृथक् ।
मृदादीनि न्यसेदेवं सावित्र्या वाथवा पुनः ॥ ६५ ॥
षट्त्रिंशदङ्गुलैः कूर्चैः श्वभ्रे वापि चतुर्दिशम् ।
प्रागग्रमुत्तराग्रं च प्रागाद्यं चोत्तरान्तकम् ॥ ६६ ॥
अधोवेद्यां परिस्तीर्य चोर्ध्ववेद्यां ततः परम् ।
प्रागाद्यं च तथैशान्तं जयादीरपि चार्चयेत् ॥ ६७ ॥
जयां च विजयां विन्दां पुष्टिकां नन्दकामपि ।
कुमुद्वतीमुत्पलिकां विशोकां चापि पूजयेत् ॥ ६८ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे स्नपनद्रव्यविन्यासविधिर्नाम पञ्चाशोऽध्यायः ॥

## एकपञ्चाशोऽध्यायः

फलकां श्वभ्रमध्ये च विन्यसेदचलां शुभाम् ।
आचार्यः शिष्यसंयुक्तो देवेशं संप्रणम्य च ॥ १ ॥

पूर्वोक्तेन विधानेन देवमुद्धृत्य मन्त्रतः ।
धूपैर्दीपैः समायुक्तैः पटहादिनिनादितैः ॥ २ ॥

ध्वजैश्चक्रैश्च पिञ्छैश्च चामरैश्च समायुतम् ।
जयशब्दैस्समायुक्तं नृत्तगेयसमन्वितम् ॥ ३ ॥

शकुनसूक्तं जपन्नेव देवदेवं समानयेत् ।
ग्रामं देवालयं वाथ प्रदक्षिणमथाचरेत् ॥ ४ ॥

स्थापयेच्छ्भ्रमध्ये च देवं संप्रणमेत्पुनः ।
सुवर्भुवर्भूरित्युक्त्वा मूर्ध्नि नाभौ च पादयोः ॥ ५ ॥

स्पृष्ट्वावाह्य च देवेशमर्चयेदष्टविग्रहैः ।
दक्षिणस्यां दिशि द्वारे विमाने सति तत्र च ॥ ६ ॥

प्राङ्मुखं स्थापयेद्देवं तत्तद्दिङ्मुखमेव वा ।
मृदादिद्रव्यदेवांश्च क्रमेणैवार्चयेत्ततः ॥ ७ ॥

मृद्देवता तु भूदेवी पर्वतेशस्तु पावकः ।
वायुर्वै धान्यदेवोऽभूद्रुद्रोऽङ्कुरदेवता ॥ ८ ॥

मङ्गलाधिपतिः शक्रः पञ्चगव्याधिपः शिवः ।
तस्यैव विश्वेदेवाः स्युरुपस्नानाधिदेवताः ॥ ९ ॥

सामवेदो घृतेशः स्यादुपस्नानस्य वत्सरः ।
ऋग्वेदो मधुदेवः स्यादुपस्नानाधिदेवताः ॥ १० ॥

प्राणायामस्तु यजुर्वेदो दधीश इति कथ्यते ।
उपस्नानाधिपा रुद्राः क्षीरं चाथर्वदैवतम् ॥ ११ ॥

अश्विनौ तदुपस्नानदेवौ गन्धोदकाधिपाः ।
ऋतवस्तदुपस्नाने मरुतो देवताः स्मृताः ॥ १२ ॥

अक्षतोदकदेवश्च काश्यपोऽथ बृहस्पतिः ।
तदुपस्नानदेवः स्यात् तथा सोमः फलोदके ॥ १३ ॥

अनन्तस्तदुपस्नाने कुशोदे मुनयः स्मृताः ।
तक्षकस्तदुपस्नाने विष्णू रत्नोदकाधिपः ॥ १४ ॥

उपस्नाने च गन्धर्वा मन्त्रा जप्योदकेऽधिपाः ।
विद्याधराश्चोपस्नाने सर्वौषध्युदकेश्वराः ॥ १५ ॥

आदित्यस्तदुपस्नाने देवताश्चाप्सरोगणाः ।
पुण्यपुष्पाधिपो धाता शक्रश्चूर्णस्य देवता ॥ १६ ॥

वरुणः कषायदेवः स्याद्गुहस्तीर्थोदकाधिपः ।
रुद्रो वनौषधीशः स्याच्छिनीवाल्यधिदैवतम् ॥ १७ ॥

हारिद्रचूर्णमित्युक्तं तदुपस्नानदेवता ।
राका स्यात्सर्वगन्धस्य देवश्चन्द्रः प्रकीर्तितः ॥ १८ ॥

मूलगन्धाधिपो ब्रह्मा प्लोतवस्त्राधिपस्तथा ।
त्वष्टा दुर्गा तु धातूनां देवतेति प्रकीर्तिताः ॥ १९ ॥

तत्तद्द्रव्याधिदेवांश्च पार्श्वे तद्द्रव्यधारकान् ।
आवाह्य विग्रहैर्देवानर्घ्याद्याचमनान्तकैः ॥ २० ॥

अर्चयेत विधानेन पश्चान्निश्छिद्रमेव च ।
सर्वद्रव्याणि चैतानि वस्त्रैराच्छादयेद् बुधः ॥ २१ ॥

प्रोक्षणार्थं जलेनैव करकौ द्वौ प्रपूर्य च ।
श्वभ्रस्य दक्षिणे चैकं वामे चैकं च संन्यसेत् ॥ २२ ॥

अर्चनार्थांश्च संभारान् सर्वान् संभृत्य पूर्ववत् ।
आचार्यो भक्तियुक्तस्तु पादौ प्रक्षाल्यं चाचमेत् ॥ २३ ॥

दधिक्राविण्ण इत्युक्त्वा दधिप्राशनमाचरेत् ।
आचम्य प्रयतः शुद्धो देवदेवं प्रणम्य च ॥ २४ ॥

सोष्णीषः सोत्तरीयश्च भूषणैरपि भूषितः ।
स्नपने प्रमुखे सम्यग् द्विकाङ्गुष्ठद्विजानुना ॥ २५ ॥

समासीनश्च देवेशमर्चयेदष्टविग्रहैः ।
अधिके देवरूपे तु स्थित्वा देवं समर्चयेत् ॥ २६ ॥

द्रव्यैर्मृदादिभिर्देवं मन्त्रेण स्नापयेत् क्रमात् ।
उत्तराभिमुखः स्थित्वा चासीनो वा तथैव च ॥ २७ ॥

अर्चयेत्स्नापयेच्चेति केचिदाहुर्मनीषिणः ।
प्रदक्षिणक्रमाच्छिष्यो द्रव्याण्यादाय वै ततः ॥ २८ ॥

स्थित्वा दक्षिणपार्श्वे च गुरुहस्ते ददेत्पुनः ।
प्रणवेनैव कूर्चेन करकाद्भिश्च तत्र वै ॥ २९ ॥

प्रोक्षयित्वैव हस्ताभ्यामादाय गुरुरत्वरः ।
एकाक्षरं जपन्नेव मृद्भिः संस्नापयेद्विभुम् ॥ ३० ॥

शिष्यस्तत्पात्रमादाय तत्स्थाने सन्यसेत्तथा ।
तत्काले वाद्यघोषं च नृत्तं गेयं च कारयेत् ॥ ३१ ॥

द्रव्यं प्रति तथा देवमर्चयेदन्तरेऽन्तरे ।
विश्वे निमग्न इत्युक्त्वा सर्वतश्च प्रदक्षिणम् ॥ ३२ ॥

कारयित्वा तथा तैस्तु प्रणामं चापि कारयेत् ।
प्राणप्रसूतिरित्युक्त्वा धान्यैस्तैः स्नापयेद् बुधः ॥ ३३ ॥

वितत्य बाणमित्युक्त्वा चाङ्कुरैरर्चयेद् बुधः ।
त्वं वज्रभृद्भूतेत्युक्त्वा मङ्गलैरष्टभिस्तथा ॥ ३४ ॥

प्रदक्षिणं प्रणामं च कारयेत्तदनुक्रमात् ।
वसोः पवित्रमित्युक्त्वा स्नापयेत् पञ्चगव्यकैः ॥ ३५ ॥

वारीश्चतस्र इत्युक्त्वा सर्वेषामन्तरेऽन्तरे ।
उपस्नानैश्च कलशैर्देवेशं स्नापयेत्पृथक् ॥ ३६ ॥

अग्न आयाहि वीतेति घृतेन स्नापयेद्विभुम् ।
अग्निमीळेति मन्त्रेण मधुना स्नापयेत्पुनः ॥ ३७ ॥

इषेत्वोर्जेत्वेत्युक्त्वा च दध्ना तु स्नापयेत्पुनः ।
शंनो देवीति मन्त्रेण क्षीरोदैः स्नापयेत्क्रमात् ॥ ३८ ॥

अभित्वा शूर इत्युक्त्वा गन्धोदैः स्नापयेद्धरिम् ।
इमा ओषधयेत्युक्त्वा स्नापयेदक्षतोदकैः ॥ ३९ ॥

जपं दत्त्वेति मन्त्रेण स्नापयेच्च फलोदकैः ।
चत्वारि वाक्परीत्युक्त्वा स्नापयेच्च कुशोदकैः ॥ ४० ॥

नारायणाय विद्मेति रत्नोदैः स्नापयेत्ततः ।
पूतस्तस्येति मन्त्रेण जप्योदैः स्नापयेद्गुरुः ॥ ४१ ॥

चत्वारि शृङ्गामन्त्रेण सर्वौषध्युदकैरपि ।
प्रधानैर्द्वादशद्रव्यैर्देवेशं स्नापयेत्क्रमात् ॥ ४२ ॥

धाता विधातेत्युच्चार्य पुण्यपुष्पैरथार्चयेत् ।
ऋचो यजूंषीत्युक्त्वैव तच्चूर्णैः स्नापयेत्पुनः ॥ ४३ ॥

उद्वर्तयेत्कषायेण स एष देव इत्यपि ।
स सर्ववेत्तामन्त्रेण स्नापयेत्तीर्थवारिभिः ॥ ४४ ॥

सामैश्रिताङ्गमित्युक्त्वा चौषधीभिः प्रमार्जयेत् ।
हरिद्राचूर्णमादाय सिनीवालीति मन्त्रतः ॥ ४५ ॥

त्वं स्त्री पुमांस्त्वं चेति तच्चूर्णैः स्नापयेद् बुधः ।
वैष्णवैः सर्वगन्धं च देवेशं स्नापयेत्पुनः ॥ ४६ ॥

त्वं भूर्भुवस्त्वमित्युक्त्वा मूलगन्धैश्च मार्जयेत् ।
इषे त्वोर्जे त्वादि जपन् आप उन्दन्त्वितीर्यच ॥ ४७ ॥

पुनरुष्णोदकैरेव शोधयेच्च घृतादिकम् ।
विसृज्य प्रतिसराबन्धं शुद्धद्रव्येण शोधयेत् ॥ ४८ ॥

शुद्धोदकैः सुगन्धैश्च स्नापयेत यथोचितम् ।
श्वभ्रस्य दक्षिणे पार्श्वे पीठं संस्थापयेच्छुभम् ॥ ४९ ॥

श्वभ्रादुत्थाप्य देवेशं स्थापयेदप्रमादतः ।
मित्रः सुपर्ण इत्युक्त्वा क्षौतेन विमृजेत्पुनः ॥ ५० ॥

य एवं नित्यमित्युक्त्वा वस्त्रैराभरणैरपि ।
पुष्पमालादिभिर्गन्धैर्धातुभिश्च तथैव च ॥ ५१ ॥

अलङ्कृत्य विशेषेण पाद्याद्यैरष्टविग्रहैः ।
अर्चयेद्देवदेवं तं पूर्वोक्तेन क्रमेण च ॥ ५२ ॥

विष्णुसूक्तं जपन्नेव प्रणामान् पञ्च चाचरेत् ।
यजमानस्तदाचार्यदक्षिणां च ददेत्पुनः ॥ ५३ ॥

शिल्पिभ्यो दक्षिणां दत्त्वा देवेशं प्रणमेद् बुधः ।
सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतम् ॥ ५४ ॥

जपन् शकुनसूक्तं तु देवमादाय वै तदा ।
आस्थानमण्टपे देवं संस्थाप्यैवार्चयेत्तथा ॥ ५५ ॥

प्रभूतं तु हविः सम्यङ् महाहविरथापि वा ।
बहुभिश्चोपदंशैश्च घृतेन दधिना फलैः ॥ ५६ ॥

युक्तं भक्त्या निवेद्यैव पानीयाचमने ददेत् ।
मुखवासं च दत्त्वैव देवमानीय वै ततः ॥ ५७ ॥

अर्चापीठे प्रतिष्ठाप्य देवदेवं समर्चयेत् ।
अथवा ह्यर्चनापीठे प्रतिष्ठाप्य समर्च्य च ॥ ५८ ॥

हविर्निवेदनं कृत्वा मुखवासं ददेत्पुनः ।
कौतुकं स्नापयेच्चेत्तु गर्भागारं प्रविश्य च ॥ ५९ ॥

तत्रैवाभ्यर्च्य देवेशं हविस्सम्यङ् निवेदयेत् ।
भक्त्यैव देवदेवस्य स्नापनं कारयेत्तु यः ॥ ६० ॥

सर्वपापैर्विनिर्मुक्तः पुत्रपौत्रादिवर्धनम् ।
धनधान्यविवृद्धिं च कामांश्चान्यानवाप्नुयात् ॥ ६१ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे शताष्टकलशविधिर्नामैक-
पञ्चाशोऽध्यायः ॥

---

## द्विपञ्चाशोऽध्यायः

अतः परं प्रवक्ष्यामि नवधा स्नापनक्रमम् ।
मृत्सर्वतश्च धान्यं चाप्यङ्कुरो मङ्गलं तथा ॥ १ ॥

प्रधानद्रव्यपूर्वत्वात्प्राग्द्रव्याणीति वै विदुः ।
पञ्चगव्यं घृतं चापि मधु तस्मात्परं दधि ॥ २ ॥

क्षीरं गन्धोदकं पश्चादक्षतोदं फलोदकम् ।
कुशोदकं च रत्नोदं जप्योदं च तथैव च ॥ ३ ॥

सर्वौषध्युदकं चेति पञ्चगव्यानि तानि तु ।
स्नपनस्य प्रधानत्वात्प्रधानानीति चक्षते ॥ ४ ॥

पुण्यपुष्पं च चूर्णं च कषायं तीर्थवारि च ।
वनौषधिस्तथा चैव हारिद्रं चूर्णमेव च ॥ ५ ॥

सर्वगन्धस्य चूर्णं च मूलगन्धं तथैव च ।
प्रधानस्यानुदेयत्वादनुद्रव्याणि वै तथा ॥ ६ ॥

प्लोतवस्त्रोत्तरीयाणि धातुराभरणानि च ।
पुष्पमाला च गन्धं च नवभेदेषु चैव हि ॥ ७ ॥

स्नपनेषु च सर्वत्र सामान्यानि भवन्ति वै ।
पञ्चगव्यादिभिर्द्रव्यैः सर्वौषध्युदकान्तकैः ॥ ८ ॥

प्रधानैरेव संपूर्णान् कलशान् द्वादशैव च ।
वारिपूर्णानुपस्नानान् कलशान् द्वादश क्रमात् ॥ ९ ॥

पूर्वोक्तेन क्रमेणैव कलशानाहरेच्छुभान् ।
पूर्ववत्परितः पङ्क्तिं व्रीहिभिः कारयेद् बुधः ॥ १० ॥

ऐशान्यादि तथा पङ्क्तौ पञ्चगव्यादिकं न्यसेत् ।
स्थाने यथोक्ते संन्यस्य द्रव्यदेवांस्तथार्चयेत् ॥ ११ ॥

वस्त्रेण कलशान् सर्वान्निश्छिद्रं परिवेष्टयेत् ।
श्वभ्रे देवं तथाऽभ्यर्च्य मन्त्रैरुक्तैरनुक्रमात् ॥ १२ ॥

चतुर्विंशतिभिश्चैव कलशैः स्नापयेद्विभुम् ।
अधमाधममित्युक्तं स्नपनं प्रति तत्त्वतः ॥ १३ ॥

श्वभ्रस्य परितः पङ्क्तिं व्रीहिभिः कारयेत्तथा ।
प्राग्द्रव्यैरपि पूर्वोक्तैरनुद्रव्यैर्विनापि च ॥ १४ ॥

पञ्चगव्यादिभिर्द्रव्यैः प्रधानैः पूर्वचोदितैः ।
संपूर्णास्तान् प्रधानांश्च कलशान् द्वादशैव च ॥ १५ ॥

वारिपूर्णानुपस्नानान् षट्त्रिंशत्कलशानपि ।
आहृत्य च तथा सम्यक् पञ्चगव्यादिकांस्तथा ॥ १६ ॥

ऐशान्यादि च सर्वांश्च पूर्वोक्तेन क्रमेण च ।
तत्तत्स्थाने तु कलशान् सोपस्नानान् न्यसेत्तथा ॥ १७ ॥

तत्तद्देवं समभ्यर्च्य वस्त्रेण परिवेष्ट्य च ।
विग्रहैरष्टभिश्चैव श्वभ्रे देवं समर्चयेत् ॥ १८ ॥

पूर्वोक्तेन क्रमेणैव मन्त्रैरुक्तैरनुक्रमात् ।
चत्वारिंशद्भिरष्टाभिः कलशैः स्नापयेद्धरिम् ॥ १९ ॥

एतैस्तु स्नपनं प्रोक्तमधमान्मध्यमं तथा ।
पूर्ववत्परितः पङ्क्तिं व्रीहिभिः परिकल्प्य च ॥ २० ॥

अनुद्रव्याणि सर्वाणि प्राग्द्रव्याणि च सर्वशः ।
आहृत्य च विधानेन शरावेषु प्रपूरयेत् ॥ २१ ॥

तीर्थोदकानि चत्वारि हरिद्राचूर्णमेव च ।
शङ्खेषु वा शरावेषु पूरयेत विशेषतः ॥ २२

अन्यानि सर्वद्रव्याणि तथैव परिपूरयेत् ।
पञ्चगव्यादिभिर्द्रव्यैः पूर्णान् द्वादशभिस्तथा ॥ २३

कलशान् द्वादशाहृत्य सर्वौषध्युदकान् ।
वारिपूर्णानुपस्नानान् षट्त्रिंशत्कलशानपि ॥ २४ ॥

आहरेत विधानेन द्रव्याण्यन्यैश्च संयुतान् ।
पूर्वोक्तेन विधानेन तत्तत्स्थाने तथैव च ॥ २५ ॥

प्राग्द्रव्याण्यमृतादीनि प्रधानानि च सर्वशः ।
अनुद्रव्याणि सर्वाणि विन्यसेच्च यथोचितम् ॥ २६ ॥

ऐशान्यादिक्रमादीनामधिदेवं समर्चयेत् ।
वस्त्रैः सर्वाणि चैतानि निश्छिद्रं परिभूष्य च ॥ २७ ॥

श्वभ्रपूजां च कृत्वैव श्वभ्रस्थं देवमर्चयेत् ।
द्रव्यैर्मृदादिभिस्सम्यगुक्तमन्त्रैरनुक्रमात् ॥ २८ ॥

भक्त्या च परया युक्तो देवेशं स्नापयेत्तथा ।
एतत्तु स्नपनं पुण्यमधमादुत्तमं स्मृतम् ॥ २९ ॥

पूर्वोक्तेन विधानेन प्राग्द्रव्यैश्च समायुतैः ।
अनुद्रव्यैश्च संयुक्तैः शताष्टकलशैस्तथा ॥ ३० ॥

द्रव्यैर्मृदादिभिः सर्वैर्मन्त्रैरेव यथोदितैः ।
स्नापयेद्देवदेवं तं श्रद्धाभक्तिसमन्वितः ॥ ३१ ॥

तत्वेन स्नपनं त्वेतन्मध्यमाधममुच्यते ।
प्राग्दव्यैर्द्विगुणैस्सर्वैरनुद्रव्यैस्तथैव च ॥ ३२ ॥

शताष्टकाच्च द्विगुणैः कलशैश्च विधानतः ।
तथा षोडशभिर्युक्तैर्द्विशतैः कलशैरपि ॥ ३३ ॥

पूर्वोक्तेन विधानेन स्नापयेद्भक्तितो हरिम् ।
मध्यमान्मध्यमं प्रोक्तं स्नपनं द्विजसत्तमाः ॥ ३४ ॥

प्राग्द्रव्यैरनुद्रव्यैश्च तथा चैव चतुर्गुणैः ।
शताष्टभिर्विशेषेण कलशैश्च चतुर्गुणैः ॥ ३५ ॥

द्वात्रिंशत्कलशैर्युक्तैश्चतुर्भिश्च शतैरपि ।
पूर्वोक्तविधिना सर्वैः सम्पूर्णं स्नापयेद्विभुम् ॥ ३६ ॥

एतत्तु स्नपनं प्रोक्तं मध्यमादुत्तमं बुधाः ।
तथैव षड्गुणैर्युक्तैः प्राग्द्रव्यैश्च तथैव च ॥ ३७ ॥

षड्गुणैरप्यनुद्रव्यैः कलशैरपि षड्गुणैः ।
चत्वारिंशद्भिरष्टाभिः सहितैः षट्छतैरपि ॥ ३८ ॥

पूर्वोक्तेन विधानेन स्नपनं चोत्तमाधमम् ।
प्राग्द्रव्यैरनुद्रव्यैस्तु तथैवाष्टगुणैरपि ॥ ३९ ॥

तथैवाष्टशतैस्तद्वच्चतुषष्टिसमायुतैः ।
कलशैः स्नपनं चैतदुत्तमान्मध्यमं स्मृतम् ॥ ४० ॥

शताष्टकैः दशगुणैः प्राग्द्रव्यैरपि सर्वशः ।
दशगुणैरनुद्रव्यैः कलशैश्च तथैव च ॥ ४१ ॥

दशगुणैः प्रधानैश्च सोपस्नानसमन्वितैः ।
पूर्वोक्तेन विधानेन सर्वैर्दशगुणैरपि ॥ ४२ ॥

अशीतिभिः सहस्रैस्तु कलशैश्च प्रयत्नतः ।
स्नापयेद्देवदेवं तं भक्त्या च परया मुदा ॥ ४३ ॥

उत्तमोत्तममेतत्तु स्नपनं परमं विदुः ।
स्नपनं कारयेद्यस्तु देवदेवस्य भक्तितः ॥ ४४ ॥

काम्यं सर्वं च लब्ध्वैव विष्णुलोकं स गच्छति ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे नवविधस्नपनं नाम
द्विपञ्चाशोऽध्यायः ॥

# त्रिपञ्चाशोऽध्यायः



अथोत्सवार्थं चक्रस्य लक्षणं संप्रवक्ष्यते ।
सुवर्णेनाथ रूप्येण ताम्रेणैवायसाथवा ॥ १ ॥

गजदन्तेन वृक्षेण कुर्याच्चक्रं स्वशक्तितः ।
महावेरस्य हस्तेन चतुर्विंशतिकाङ्गुलम् ॥ २ ॥

आयतं विस्तृतं चैव समं तस्येति संस्मृतम् ।
प्रमाणमेतद्वृत्तं स्याद्दारूणां च षडङ्गुलम् ॥ ३ ॥

वृत्तं पट्टस्य विस्तारं त्रिकाङ्गुलमिति स्मृतम् ।
तन्मध्ये चारकूटं स्यात्तस्यायामं त्रिकाङ्गुलम् ॥ ४ ॥

कूटमध्ये च सिंहस्य कुर्याद्वामकराननम् ।
शताष्टारयुतं श्रेष्टं पञ्चाशद्भिररैर्युतम् ॥ ५ ॥

मध्यमं तु चतुर्विंशत्यैरैर्युक्तं कनिष्ठिकम् ।
मध्यं तत्पृष्ठपार्श्वस्य कार्यं संफुलपद्मवत् ॥ ६ ॥

पार्श्वयोरुभयोर्मूर्ध्नीत्यग्रानलशिखायुतम् ।
अधस्तात्फलकायुक्तं तद्घन्धं चतुरङ्गुलम् ॥ ७ ॥

पार्श्वयोः फलकास्थाभ्यां सिंहाभ्यां च समुद्धृतम् ।
अधस्तात्फलकायास्तु कुम्भाभं वा तटित्प्रभम् ॥ ८ ॥

अष्टाङ्गुलप्रमाणेन कृत्वा तत्रैव योजयेत् ।
खादिरेण तु दण्डेन दण्डाधोऽग्रे च मध्यमे ॥ ९ ॥

पट्टैर्बध्वा च तत्पट्टविस्तारं च त्रिकाङ्गुलम् ।
दण्डायामं च चक्रस्य त्रिगुणं परिपठ्यते ॥ १० ॥

पादं पीठं च दण्डाधो बन्धं भागोन्नतं तथा ।
अत ऊर्ध्वं प्रवक्ष्यामि चक्रस्य स्थापनाक्रमम् ॥ ११ ॥

प्रमुखे मण्टपे वाथ लब्धभागोन्नतं तथा ।
चक्रायामाधिकायामां शय्यावेदिं च कारयेत् ॥ १२ ॥

प्राक्पश्चिमायतां वेदिमर्धविस्तारसंयुताम् ।
औपासनोक्तविधिना कुण्डं कुर्याच्च दक्षिणे ॥ १३ ॥

प्रतिष्ठादिवसात्पूर्वं चतुर्थेऽहनि पूर्ववत् ।
अधिवासं च कृत्वैव प्रतिष्ठादिवसात्पुरा ॥ १४ ॥

वास्तुहोमं च कृत्वैव कुम्भपूजां समाचरेत् ।
औपासनक्रमेणाग्नावाघारं जुहुयात्पुनः ॥ १५ ॥

कुम्भे चक्रं विधानेन ध्यायेत्सम्यक्समाहितः ।
संस्नाप्य कलशैश्चक्रं बध्वा प्रतिसरां ततः ॥ १६ ॥

शयने शाययित्वा वै हौत्रं तत्र प्रशंसयेत् ।
चक्रं मूर्तिभिरावाह्य निरूप्याज्याहुतीर्यजेत् ॥ १७ ॥

अग्नौ चक्रस्य मन्त्राभ्यां शतमष्टोत्तरं यजेत् ।
स्थानमुक्तं च चक्रस्य यमाग्न्योर्मध्यमं पुरा ॥ १८ ॥

प्रातः स्नात्वा विशुद्धात्मा शुभे राशावनिन्दिते ।
चक्रं कुम्भं समानीय चक्रस्य स्थानमत्वरः ॥ १९ ॥

तत्र रत्नं सुवर्णं वा तत्तन्मन्त्रेण विन्यसेत् ।
बीजाक्षरं च विन्यस्य चक्रमन्त्रौ जपंस्तथा ॥ २० ॥

ध्यायन् कुम्भगतां शक्तिं कूर्चेनादाय तज्जलम् ।
चक्रमूर्धनि संस्राव्य मन्त्रेणावाहयेत्क्रमात् ॥ २१ ॥

आवाह्यैव विधानेन पुण्याहं वाचयेत्ततः ।
आसनाद्युपचारैश्च क्रमेणैवार्चयेत्पुनः ॥ २२ ॥

हवींषि च यथाशक्त्या तच्चक्राय निवेदयेत् ।
गुरवेऽध्वर्यवे चैव दक्षिणां च ददेत्तदा ॥ २३ ॥

एवं यः कुरुते भक्त्या तस्य शत्रुक्षयो भवेत् ।
अन्यस्मादपि सर्वस्माद्भयं तस्य विनश्यति ॥ २४ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे चक्रप्रतिष्ठाविधिर्नाम त्रिपञ्चाशोऽध्यायः ॥

---

## पञ्चपञ्चाशोऽध्यायः ॥

अतः परं तु वक्ष्येऽहमुत्सवारम्भमुत्तमम् ।
देवदेवस्य विष्णोर्हि सर्वलोकशुभप्रदम् ॥ १ ॥

उत्सवं सर्वलोकानां शान्तिपुष्टिकरं विदुः ।
स वो यज्ञस्समाख्यातस्सर्वयज्ञविशेषतः ॥ २ ॥

उत्कृष्टोऽयं यतस्तस्मादुत्सवस्त्विति कीर्त्यते ।
कालोत्सवः श्रद्धोत्सवस्तथा नैमित्तिकोत्सवः ॥ ३ ॥

इत्येवं त्रिविधं प्राहुरुत्सवं शार्ङ्गधन्वनः ।
मासे तु यस्मिन् कस्मिंश्चिदब्दमब्दं प्रति प्रति ॥ ४ ॥

तत्कालसमयेनैव कृतः कालोत्सवो भवेत् ।
कालोत्सवस्समारब्धो हीनश्चेद्दोषकृद्भवेत् ॥ ५ ॥

श्रद्धाभक्ती यदि स्यातां तदैवारभ्य भक्तितः ।
श्रद्धया क्रियते यस्तु स वै श्रद्धोत्सवो भवेत् ॥ ६ ॥

भयप्रदनिमित्तेषु तथानावृष्टिकादिषु ।
क्रियते तत्प्रशान्त्यर्थं स निमित्तोत्सवस्स्मृतः ॥ ७ ॥

समूर्तार्चनयज्ञोऽयमुत्सवो वैष्णवस्त्विति ।
राजा ग्रामस्य शक्तोऽन्यो यथाशक्ति यथाविधि ॥ ८ ॥

उत्तमं मध्यमं वापि सर्वयत्नेन कारयेत् ।
अन्येषामप्यशक्तानामधमं तु विधीयते ॥ ९ ॥

पक्षत्रयोदशाहं च दिनमेकादशं तथा ।
नवाहं चाथ सप्ताहं पञ्चाहमथवा तथा ॥ १० ॥

त्रिदिनं द्विदिनं तद्वदेकाहमथवा तथा ।
एवं तु नवधा प्रोक्तमुत्सवाहं विधानतः ॥ ११ ॥

नैकाहद्विदिने वापि ध्वजारोहणमिष्यते ।
अयने विषुवे चापि मासर्क्षे विष्णुपञ्चके ॥ १२ ॥

तत्रापि श्रवणे यत्नाद्द्वादश्यां मार्गशीर्षके ।
राज्ञश्चैवाथ जन्मर्क्षे प्रतिष्ठादिवसे तथा ॥ १३ ॥

ग्रामस्य जन्मनक्षत्रे स्वजन्मर्क्षे च भक्तिमान् ।
एतेष्विष्टे दिने तीर्थं यथा स्यात्तु तदारभेत् ॥ १४ ॥

उत्सवान्तस्तु दिवसस्तत्तु तीर्थदिनं विदुः ।
उत्सवस्य दिनं यावत्तावद्द्वित्रिगुणीकृते ॥ १५ ॥

तदादौ दिवसे सम्यग् ध्वजारोहणमाचरेत् ।
ध्वजस्य लक्षणं वक्ष्ये पटं श्वेतं समाहरेत् ॥ १६ ॥

पादायामं पटं कुर्याच्चतुर्हस्तमथापि वा ।
तदर्धं चैव विस्तारं चतुस्तालमथापि वा ॥ १७ ॥

चतुर्धा भक्तभागेषु चैकभागश्शिरो भवेत् ।
तदधस्ताद्विभागं तु चित्राभासपटं भवेत् ॥ १८ ॥

पादौ च शिष्टभागं तु क्रमेणैव प्रतिह्रसेत् ।
अतः परं प्रवक्ष्यामि गरुडस्य यथा क्रमम् ॥ १९ ॥

पटस्य मध्ये गरुडं पञ्चवर्णैस्समायुतम् ।
कारयेत सुवर्णाभं शुकपिञ्जरवाससम् ॥ २० ॥

झल्लरीमेखलायुक्तं किङ्किणीजालसंयुतम् ।
कुण्डलाङ्गदहाराद्यैर्भूषितं मकुटोज्ज्वलम् ॥ २१ ॥

हेमपिञ्जरवर्णाङ्गान् पञ्चवर्णसमन्वितान् ।
तदा मरकताभान् वा सितान् वा चित्रकृच्चरेत् ॥ २२ ॥

श्वेतो रक्तो हरित्कृष्णः पीतो वर्णाश्च पञ्च वै ।
आनीलश्वेतवर्णाङ्गं सर्पं दंष्ट्रयुतं शिशुम् ॥ २३ ॥

फणायुक्तं च गुञ्जाक्षं बाहौ वै दक्षिणे तथा ।
एवं गरुडरूपं तु सर्वालङ्कारसंयुतम् ॥ २४ ॥

स्वस्तिकासनमासीनं प्राञ्जलिं गरुडं लिखेत् ।
तन्मूर्ध्नि पार्श्वयोश्चैव संयुतं छत्रचामरैः ॥ २५ ॥

उभयोः पार्श्वयोर्दिव्यौ शङ्खचक्रौ च कारयेत् ।
जवेन व्योम्नि गच्छन्तं लिखेद्वा गरुडं पटे ॥ २६ ॥

एकं पादं समाकुञ्च्य दक्षिणं संप्रसार्य च ।
हृदयेऽञ्जलिसंयुक्तं गगनेष्वुमिवोल्बणम् ॥ २७ ॥

पूर्वोक्तलक्षणैर्युक्तं पूर्वालङ्कारसंयुतम् ।
ब्राह्मणानां हितार्थाय ध्वजदण्डं च वैणवम् ॥ २८ ॥

क्षत्रियाणां तु जातिं च वैश्यानां चम्पकं तथा ।
शूद्राणां क्रमुकं तद्वत्सर्वेषां क्रमुकं तु वा ॥ २९ ॥

आयामं ध्वजदण्डस्य विमानसममुच्यते ।
तत्पादहीनमथवा विमानार्धसमं तु वा ॥ ३० ॥

यथालाभपरीणाहमभिन्नं यावता भवेत् ।
तद्वंशयष्टेरायामं एकविंशतिकं यमम् ॥ ३१ ॥

चतुर्दशयमं वापि नवतालमथापि वा ।
यष्ट्यायामं तु तत्सर्वं चतुर्थांशं विभज्य च ॥ ३२ ॥

ऊर्ध्वं तु ध्वजदण्डाग्रादेकांशं तद्व्यपोह्य च ।
वलयं योजयेत्तस्मिंस्ताम्रमायसमेव वा ॥ ३३ ॥

यथोचितं ध्वजस्याग्रे बन्धनं समुदाहृतम् ।
ततोऽधो ध्वजदण्डेन सहैकांशं व्यपोह्य च ॥ ३४ ॥

ततोऽपि तदधो मध्ये यष्टिमूलमिति त्रिषु ।
यष्ट्या धारांश्च दारूंस्त्रीनचलान् योजयेत्क्रमात् ॥ ३५ ॥

स्थानेषु ध्वजदण्डाग्रे तेषु प्रोक्तेषु दारुषु ।
देवस्याभिमुखं चैव भूतपीठस्य पश्चिमे ॥ ३६ ॥

अवटं खानयेत्तत्र ध्वजस्य स्थापनाय वै ।
पञ्चतालं चतुस्तालं त्रितालं निम्नमेव वा ॥ ३७ ॥

एवमेतानि कृत्वा वै पश्चात्कर्म समाचरेत् ।
यजमानस्तदाचार्यं वस्त्राद्याभरणैरपि ॥ ३८ ॥

पूजयेद्वाहकौ चैव चक्रस्यापि ध्वजस्य च ।
देवस्याभिमुखे सम्यङ् मण्टपे चोपलिप्य च ॥ ३९ ॥

चतुर्दिक्षु चतुर्हस्तं पञ्चहस्तमथापि वा ।
पञ्चवर्णैरलङ्कृत्य तस्मिन् प्राच्यां ध्वजस्य वै ॥ ४० ॥

द्वितालविस्तृतायामं तालोत्सेधं त्रिवेदिकम् ।
धान्यैः पीठं प्रकल्प्यैव तथा चक्रस्य पश्चिमे ॥ ४१ ॥

विष्वक्सेनस्योत्तरे वै पीठं सम्यक् प्रकल्पयेत् ।
तत्तत्पीठे ध्वजादींश्च संन्यस्यैव यथाक्रमम् ॥ ४२ ॥

वास्तुशुद्धिं तथाकुर्याद् ध्वजस्यात्र यथोचितम् ।
कुम्भतोयैः प्रतिष्ठोक्तैः शुद्ध्यर्थं प्रोक्षयेद्ध्वजम् ॥ ४३ ॥

ध्वजं संप्रोक्ष्य चावाह्य ध्वजे गरुडमर्चयेत् ।
चक्रं च विष्वक्सेनं च विधिनैव समर्चयेत् ॥ ४४ ॥

मुद्गान्नं गरुडस्यापि शुद्धान्नं हविरन्ययोः ।
निवेदयित्वा सर्वेषां मुखवासं ददेत्क्रमात् ॥ ४५ ॥

पुण्याहं वाचयेत्तत्र ब्रह्मघोषसमन्वितम् ।
भेरीमलङ्कृतां धान्ये न्यसेद्यष्टिसमन्विताम् ॥ ४६ ॥

वस्त्रगन्धादिभिस्सम्यगलङ्कृत्य च वादकम् ।
नन्दिकेश्वरमात्मानं स्मृत्वा भेरीं च ताडयेत् ॥ ४७ ॥

पक्वमन्नं बलिं पात्रे पक्वापूपसमन्वितम् ।
पक्वैश्च मुद्गनिष्पावतिलतिल्वैश्च मिश्रितम् ॥ ४८ ॥

पुष्पगन्धाक्षतैर्युक्तं प्रभूतं बलिमाहरेत् ।
दिवैव सायात्पूर्वं च घोषणार्थं व्रजेत्क्रमात् ॥ ४९ ॥

अग्रे तता(दि)घोषं च कारयित्वा ततो बलिम् ।
वाहयित्वाग्रतश्चैव बलिदाता गुरुर्व्रजेत् ॥ ५० ॥

चक्रं ध्वजं समादाय वाहकौ दनुक्रमात् ।
द्वारेशपरिवारेभ्यो बलिं दत्त्वा च पूर्ववत् ॥ ५१ ॥

ग्रामं गत्वा बहिर्वीथ्यां तत्र सन्धौ बलिं ददेत् ।
विग्रहैरष्टभिः पूर्वं दिग्देवं तं समर्चयेत् ॥ ५२ ॥

मुष्टचन्नं सम्प्रगृह्यैव पक्वापूपादिभिर्युतम् ।
नमोऽन्तेनैव तन्नाम्ना दत्त्वा सर्वेभ्य इत्यपि ॥ ५३ ॥

भूतेभ्यश्चाथ यक्षेभ्यः पिशाचेभ्यस्तथैव च ।
राक्षसेभ्यश्चा नागेभ्यश्चार्चयित्वा बलिं ददेत् ॥ ५४ ॥

गन्धर्वेभ्यो गणेभ्यश्च नम इत्यष्टदिक्षु वै ।
अथ वापि जलं पुष्पं बलिं पश्चाज्जलं ददेत् ॥ ५५ ॥

तस्यां दिशि च तं देवं मन्त्रेणैवाथ घोषयेत् ।
यज्ञस्य घोषदित्याद्यैरुत्सवाध्वरघोषणम् ॥ ५६ ॥

यथार्हं मन्त्रसूक्तैश्च ब्रह्मेन्द्राद्यधिदेवताः ।
ग्रामे कुर्यान्नगर्यादौ गद्यैः पद्यैश्च घोषयेत् ॥ ५७ ॥

एतेन चोत्सवेनैव प्रीयतां भगवान् हरिः ।
ऋषयः पितरस्सर्वे पत्नीभिस्सहिता मुदा ॥ ५८ ॥

आदित्या वसवो रुद्रा मरुतः स्वगणैस्सह ।
सर्वे देवाश्च देवीभिर्गरुडासुरपन्नगाः ॥ ५९ ॥

सिद्धविद्याधरा यक्षगन्धर्वा भूतराक्षसाः ।
तथा किंपुरुषाश्चैव किन्नराश्चारणा गणाः ॥ ६० ॥

दुर्गा ज्येष्ठा महाकाली रोहिण्यो मातरस्तथा ।
सर्वाश्चाप्सरसश्चैव विष्णुभूताश्च सर्वशः ॥ ६१ ॥

अस्मिन्देवोत्सवे काले समागच्छन्तु सादराः ।
बलिमादाय संप्रीताः शुभदाश्च भवन्तु ते ॥ ६२ ॥

अलङ्कृताश्च विप्राद्याः सर्वे चायान्तु वै जनाः ।
उत्सवं घोषयेदेवं तत्र सन्धौ पृथक्पृथक् ॥ ६३ ॥

वादकाः सर्ववाद्यांश्च घोषयेयुश्च तत्क्रमात् ।
ग्राममध्ये विमानं चेद्ब्रह्मस्थाने च मध्यमे ॥ ६४ ॥

ब्रह्मणश्च बलिं दत्त्वा भूतादिभ्यो बलिं ददेत् ।
दिग्देवानामथेन्द्रादि प्रादक्षिण्यक्रमेण वै ॥ ६५ ॥

यस्यां दिशि विमानं स्यात्तद्दिक्पूर्वं बलिं ददेत् ।
एवं ग्रामे बहिर्वीथ्यां तत्र सन्धौ बलिं ददेत् ॥ ६६ ॥

प्रदक्षिणं क्रमात्कृत्वा प्रविशेद्देवमन्दिरम् ।
देवालये पुनः सम्यक्प्रदक्षिणमथाचरेत् ॥ ६७ ॥

बलिशेषं समादाय भूतपीठेऽप्युदङ्मुखः ।
भूतानि तृप्यन्त्वित्युक्त्वा भूतेभ्यश्च बलिं ददेत् ॥ ६८ ॥

चक्रस्थाने तु तच्चक्रं पूर्ववत्संनिवेशयेत् ।
प्रदोषे समनुप्राप्ते ध्वजमारोहयेत्पुनः ॥ ६९ ॥

ततः पार्श्वाश्रितं तत्र ध्वजदण्डं समुद्धृतम् ।
क्षालितं वारिणा चैव वंशयष्टियुतं तथा ॥ ७० ॥

ध्वजस्थानेऽवटे तस्मिन् प्रक्षिपेत्तद्भजैस्तथा ।
प्रागग्रमुत्तराग्रं वा ध्वजदण्डं समुद्धृतम् ॥ ७१ ॥

बलिं भुञ्जन्तु नन्दन्तु निन्दन्तु कुजनान् भृशम् ।
गन्धमाल्यैश्च पद्यैश्च गद्यैरन्यैश्च मुख्यतः ॥ ७२ ॥

नगर्यादौ घोषयित्वा विष्णोरुत्सवकर्मणि ।
सुपर्णोऽसि गरुत्मेति ध्वजं स्पृष्ट्वा जपेत्पुनः ॥ ७३ ॥

भूःप्रपथैति मन्त्रेण स्थापयेदवटे ध्वजम् ।
देवाभिमुखमेवैनं गरुडं कल्पयेद् बुधः ॥ ७४ ॥

समुच्छ्रिते ध्वजे तत्र व्याधयोऽप्याधयोऽपि वा ।
भयङ्कराणि भूतानि विनश्यन्ति न संशयः ॥ ७५ ॥

त्रिवेदिसहितं पीठं ध्वजमूले तु कारयेत् ।
पीठोर्ध्वो ध्वजदण्डस्य परितस्तु चतुर्दिशम् ॥ ७६ ॥

तालविस्तारसंयुक्तं वेदीनां च पृथक् पृथक् ।
उत्सेदं विस्तृतं चापि तालमष्टाङ्गुलं तु वा ॥ ७७ ॥

प्रोक्षणैः प्रोक्षयित्वैव सप्तविंशतिविग्रहैः ।
ध्वजे गरुडमभ्यर्च्य मौद्गिकान्नं निवेदयेत् ॥ ७८ ॥

ध्वजस्थगरुडस्याथ मौद्गान्नं यन्निवेदितम् ।
पुत्रार्थं पिण्डमश्नीयाद्या स्त्री भक्तिसमन्विता ॥ ७९ ॥

पुत्रं सा जनयेच्छ्रेष्ठमायुष्मन्तं बलान्वितम् ।
निवेदयेद्यथान्यायं नित्यमेवं समर्चयेत् ॥ ८० ॥

उत्तमं च त्रिसन्ध्यासु हविष्यस्सन्निवेदनम् ।
प्रातर्मध्याह्नयोर्मध्यं मध्याह्ने त्वधमं विदुः ॥ ८१ ॥

ध्वजारोहणमेवं तु उत्सवार्थं तु कारयेत् ।
अथवाऽप्युत्सवस्यादौ दिने तस्मिन् यथाविधि ॥ ८२ ॥

ध्वजस्यारोहणं कृत्वा त्वरितो भक्तिसंयुतः ।
अङ्कुरार्थं मृदं चापि गृहीत्वोत्सवमाचरेत् ॥ ८३ ॥

अथ तीर्थदिनात्पूर्वमेकविंशतिके दिने ।
उत्सवेषु च सर्वेषु ध्वजमारोप्य पूर्ववत् ॥ ८४ ॥

यथोक्तमुत्सवं चापि कारयेदिति केचन ।
तद्ध्वजस्यानुयाता ये जनास्ते पुण्यभागिनः ॥ ८५ ॥

शुभेप्सितास्तथा देवमुत्सवेऽनुसरन्ति ये ।
अज्ञात्वा विधिमेतं वै कर्तारस्सन्ति यत्र वै ॥ ८६ ॥

आधिव्याधिसमायुक्तस्तद्देशश्च भविष्यति ।
तस्माज्ज्ञात्वा विधिं सम्यगाचरन्त्युत्सवं बुधाः ॥ ८७ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे उत्सवार्थध्वजारोहण-
विधिर्नाम चतुःपञ्चाशोऽध्यायः ॥

---

## पञ्चपञ्चाशोऽध्यायः ॥

---

अतः परं प्रवक्ष्यामि विष्णोरुत्सवमुत्तमम् ।
शान्तिदं वर्षदं नित्यमारोग्यं पुष्टिदं शुभम् ॥ १ ॥

राष्ट्राभिवृद्धिदं चैव राज्ञश्च बलवर्धनम् ।
ध्वजमारोप्य पश्चाद्वै सम्भारानपि संभरेत् ॥ २ ॥

रङ्गांश्च शिबिकाश्चापि यन्त्रदेवालयांस्तथा ।
यन्त्रमन्त्रपिकांश्चैव वृक्षयन्त्राणि चैव हि ॥ ३ ॥

भ्रमत्तुरङ्गयन्त्राणि खगवाहनयन्त्रकान् ।
तथा गरुडयन्त्राणि श्वेतच्छत्त्राणि चामरान् ॥ ४ ॥

छत्त्राण्यन्यानि सर्वाणि व्यजनानि च सर्वशः ।
हस्तदीपांस्तथा यन्त्रमालादीपांश्च कारयेत् ॥ ५ ॥

दीपार्थं तु घृतं चापि तैलं वाऽथ समाहरेत् ।
हेमपात्राणि रूप्याणि ताम्रकांस्यमयान्यपि ॥ ६ ॥

मृण्मयानि च पात्राणि यत्नादन्यानि शक्तितः ।
देवालयस्य पुरतो दक्षिणे वाऽथ पूर्ववत् ॥ ७ ॥

दर्शनीयां यथाशक्ति प्रपां सर्वत्र कारयेत् ।
आस्थानमण्टपं कुर्याद्विमानसमविस्तृतम् ॥ ८ ॥

पादहीनमथार्धं वा पादं वा लक्षणान्वितम् ।
वितानैश्च ध्वजैश्चित्रैः स्थूणानां वेष्टनैरपि ॥ ९ ॥

मुक्तादामादिभिः पुष्पैरलङ्कुर्यात्फलैरपि ।
दर्भान् पुष्पाणि गन्धांश्च हविर्द्रव्याणि सर्वशः ॥ १० ॥

विविधानि च वस्त्राणि तथैवाभरणानि च ।
नर्तकान् गायकांश्चापि भक्तानन्यान् बहूनपि ॥ ११ ॥

आनयेत प्रयत्नेन पश्चादुत्सवमारभेत् ।
आलयं सिकताभिश्च मृष्टसिक्तोपलेपनैः ॥ १२ ॥

पल्लवैरलङ्कुर्याद् दर्शनीयं यथा भवेत् ।
तद्द्वारे तोरणैश्चापि कदलीक्रमुकैर्ध्वजैः ॥ १३ ॥

अङ्कुरैः पूर्णकुम्भाद्यैरलङ्कारं च कारयेत् ।
शोधयेद् ग्रामवीथींश्च मृष्टसिक्तोपलेपनैः ॥ १४ ॥

तद्ग्रामे च गृहद्वाराण्यलङ्कुर्याच्च तोरणैः ।
अङ्कुरैः पूर्णकुम्भैश्च कदलीक्रमुकादिभिः ॥ १५ ॥

उत्सवात्त्रिदिनात्पूर्वमङ्कुरानर्पयेत्पुनः ।
उत्सवादिदिने प्राप्ते मध्याह्ने च विशेषतः ॥ १६ ॥

यजमानोऽप्यलङ्कृत्य नववस्त्रादिभिर्गुरुम् ।
पूजयित्वाऽर्चकादींश्च पूजयेच्च स्वशक्तितः ॥ १७ ॥

तानेवमुक्त्वा याचेत यूयं भक्त्या मुदा युताः ।
अमुमुत्सवयज्ञं च कारयध्वं हरेः प्रभोः ॥ १८ ॥

अविघ्नेनैव कृत्वा मे प्रसादः क्रियतामिति ।
कलशैः स्नापयेद्देवं यथाशक्ति यथाविधि ॥ १९ ॥

अथवा केवलैः शुद्धैरुदकैस्स्नापयेद्बुधः ।
तीर्थस्याङ्कुरमुद्दिश्य कुर्यान्मृद्ग्रहणं पुनः ॥ २० ॥

सायाह्ने तत्र देवेशं विष्वक्सेनं च भक्तितः ।
चक्रं च गरुडं चापि सप्तविंशतिविग्रहैः ॥ २१ ॥

अर्चयित्वा विधानेन देवदेवं प्रणम्य च ।
चक्रं च विष्वक्सेनं च वस्त्रमाल्यादिभूषणैः ॥ २२ ॥

अलङ्कृत्यैव तच्चक्रं यानेनैव करेण वा ।
संनयेद्विष्वक्सेनं च पश्चाद्यानेन संनयेत् ॥ २३ ॥

वाद्यघोषणसंयुक्तं छत्रपिञ्छादिसंयुतम् ।
हस्तेन शिरसा वाऽथ नयेन्मृद्ग्रहणाय तौ ॥ २४ ॥

तस्यैवानु खनित्रं च वस्त्रपुष्पैरलङ्कृतम् ।
पालिकाश्छिद्रकुम्भांश्च भक्तैरेव ततो नयेत् ॥ २५ ॥

उदीचीं वाऽप्यथैशानीं प्राचीं वा यदि संव्रजेत् ।
तत्र मृद्ग्रहणं सर्वं सुखायैव नृणां भवेत् ॥ २६ ॥

अन्यासु दिक्षु गच्छेच्चेत्सर्वदुःखाय वै भवेत् ।
ग्रामस्य वास्तुनो बाह्ये गत्वा देशे मनोरमे ॥ २७ ॥

चक्रं च विष्वक्सेनं च प्राङ्मुखं स्थापयेत्पुनः ।
प्रमुखे चोपलिप्यैव दशतालक्रमेण वै ॥ २८ ॥

मेदिनीमूर्ध्ववक्त्रां तामैशान्ये न्यस्तमौलिकाम् ।
नैर्ऋत्ये न्यस्तपादां च कल्पयेत्तद्विधानतः ॥ २९ ॥

एकादशोपचारेण देवीमभ्यर्च्य मन्त्रतः ।
पुण्याहं वाचयेत्तत्र ब्रह्मघोषसमायुतम् ॥ ३० ॥

मेदिनी देवीत्युच्चार्य मेदिन्यां मुखदेशतः ।
तद्बाह्वोः स्तनयोर्मध्ये जठरे वा मृदं हरेत् ॥ ३१ ॥

मुखे चेत्सर्वदोषघ्ना बाह्वोर्बहुसुवर्णदा ।
स्तनयोः कुलवृद्धिस्स्याज्जठरे सर्वसम्पदः ॥ ३२ ॥

भवन्त्येवेत्यधस्ताच्चेत्सर्वनाशाय वै भवेत् ।
उदङ्मुखः खनित्रेण प्राङ्मुखो वाऽथ खानयेत् ॥ ३३ ॥

तालमात्रं व्यपोह्यैव मृदमाहृत्य वै ततः ।
शुद्धपात्रे गृहीत्वैव शिरसा तां वहन् व्रजेत् ॥ ३४ ॥

ग्रामं प्रदक्षिणीकृत्य देवागारं प्रविश्य च ।
स्वस्तिसूक्तं वदन्नेव मृदं सम्यङ् निधापयेत् ॥ ३५ ॥

चक्रं शान्तं यथास्थाने स्थापयेत्पूर्ववद्बुधः ।
तन्मृदा पालिकाद्यास्तु पूरयित्वा यथाविधि ॥ ३६ ॥

तत्तीर्थदिनपूर्वस्मिन्नवमे वाऽथ सप्तमे ।
पञ्चमेऽहनि वा कुर्याद् भक्तियुक्तोऽङ्कुरार्पणम् ॥ ३७ ॥

एवं मृदं गृहीत्वैव रात्रावुत्सवमारभेत् ।
अथोत्सवविधिं वक्ष्ये देवदेवस्य शार्ङ्गिणः ॥ ३८ ॥

उत्सवादिदिने सायं देवेशं तं प्रणम्य च ।
यदि स्यादौत्सवं बिम्बमर्चयित्वा विशेषतः ॥ ३९ ॥

उपदंशादिभिर्युक्तहवींषि द्विगुणानि च ।
निवेदयेत्प्रभूतानि देवानन्यांश्च शक्तितः ॥ ४० ॥

विष्वक्सेनं च चक्रं च गरुडं च तथैव च ।
अर्चयित्वा विशेषेण हविः सम्यङ् निवेदयेत् ॥ ४१ ॥

शक्तिश्चेत्परिवारांस्तु सर्वानपि च पूजयेत् ।
अग्निं तं परिषिच्यैव मूर्तिहोमश्च हूयताम् ॥ ४२ ॥

वैष्णवं विष्णुसूक्तं च पुरुषसूक्तं तथैव च ।
देवस्य मूर्तिमन्त्रैश्च देव्योर्मुन्योस्तथैव च ॥ ४३ ॥

सर्वेषां परिवाराणां मूर्तिमन्त्रैश्च हूयताम् ।
पूर्वोक्तेन विधानेन बलिपात्रे तथैव च ॥ ४४ ॥

विधिनाऽन्नबलिं कुर्यादर्चयेत तथैव च ।
तण्डुलैश्च तथा द्रोणैरर्धैर्वाऽप्याढकैस्तु वा ॥ ४५ ॥

पाचयित्वा बलिं भूतं पात्रे निक्षिप्य पूर्ववत् ।
मसूरमुद्गनिष्पावसक्तुपूपादिभिर्युतम् ॥ ४६ ॥

शिष्येण वाहयित्वा तमाचार्यः पूर्वतो व्रजेत् ।
अग्रे ततादिवाद्यैश्च घोषणं चापि कारयेत् ॥ ४७ ॥

अलङ्कृत्यैव तच्चक्रं गरुडं च ततः परम् ।
विष्वक्सेनं बलिं पश्चात्क्रमेणैव तु संनयेत् ॥ ४८ ॥

छत्रैः पिञ्छैर्वितानाद्यैश्चामराद्यैः समायुतम् ।
धूपैर्दीपैः समायुक्तं बलिदानाय वै व्रजेत् ॥ ४९ ॥

विमाने द्वारपालेभ्यो लोकपालेभ्य एव च ।
सर्वेभ्योऽप्यनपायिभ्यस्तथा चैव बलिं ददेत् ॥ ५० ॥

ग्रामं गत्वा बहिर्वीथ्यां तत्र सन्धौ बलिं ददेत् ।
ध्वजारोहणमार्गेण क्रमात्सन्धौ बलिं ददेत् ॥ ५१ ॥

प्रदक्षिणं बलिं दत्त्वा प्रविशेदालयं पुनः ।
भूतपीठमनुप्राप्य तत्र शेषं बलिं क्षिपेत् ॥ ५२ ॥

विष्वक्सेनं च चक्रं च स्वस्थाने संनिवेश्य च ।
पादौ प्रक्षाल्य चाचम्य तं देवं संप्रणम्य च ॥ ५३ ॥

सौवर्णमुक्ताभरणैर्बहुवर्णाम्बरैरपि ।
पुष्पैश्च बहुभिर्गन्धैरलङ्कारैः स्वशक्तितः ॥ ५४ ॥

अलङ्कृत्योत्सवं बिम्बं दर्शनीयं च सुन्दरम् ।
शकुनसूक्तेन चानीय रथन्तरमिति ब्रुवन् ॥ ५५ ॥

देवमारोपयेद्रङ्गे शिबिकायां रथेऽथवा ।
सौवर्णैरुत्पलैः पुष्पैरलङ्कुर्यात्प्रभां ततः ॥ ५६ ॥

पद्मैर्वा कुमुदैर्वाऽथ पुष्पैरन्यैश्च शक्तितः ।
पुष्पैर्गन्धसमायुक्तैरलङ्कृत्य प्रभामपि ॥ ५७ ॥

प्रभां संयोज्य देवेशं यानेनैव च संनयेत् ।
अश्वा गजा जनास्सैन्या व्रजेयुस्तदनुक्रमात् ॥ ५८ ॥

ध्वजांश्चापि पताकाश्च वहन्तोऽनुव्रजन्ति वै ।
यन्त्रारूढाश्च नृत्यन्त्यो योषितश्च व्रजन्त्यनु ॥ ५९ ॥

वाद्यानां घोषकाः सर्वे घोषयन्तोऽनुयान्तु ते ।
नृत्यन्तो नर्तकाश्चापि गायन्तो गायकास्तथा ॥ ६० ॥

ततोऽनुगच्छेद्देवेशं शार्ङ्गपाणिं खगध्वजम् ।
छत्रैः पिञ्छैर्वितानाद्यैर्भक्तियुक्तः स्वशक्तितः ॥ ६१ ॥

श्वेतच्छत्रैस्तथाऽन्यैश्च हेमाभैर्हरितैरपि ।
नानावर्णैश्च परितश्चोर्ध्वे संछादयेद्धरिम् ॥ ६२ ॥

हेमरक्तसमायुक्तैश्चामरैश्च सितैरपि ।
व्यजनैर्विविधैश्चापि पिञ्छैरन्यैश्च संयुतैः ॥ ६३ ॥

तालवृन्तैश्च सर्वत्र देवेशमुपवीजयेत् ।
राजतानि च हैमानि पात्राणि परितो नयेत् ॥ ६४ ॥

धूपं बहूंश्च दीपांश्च देवस्य परितो नयेत् ।
वीणावेणू तथा सम्यग् वादयेयुश्च सुस्वरम् ॥ ६५ ॥

भक्ता जनाश्च विप्राद्याः स्तोत्रैश्च स्तुतिभिस्तथा ।
स्तुवन्तोऽनुव्रजन्त्वेनं पार्श्वतश्चाप्यलङ्कृताः ॥ ६६ ॥

देवेशं येऽनुसेवन्ते पुण्यलोकमवाप्नुयुः ।
एवमेव क्रमाद्गच्छेत्पूर्वोक्तेन पथा तथा ॥ ६७ ॥

पूर्वोक्तैरपि सर्वैस्तमलङ्कारैः समायुतम् ।
यानस्थमुत्सवं देवं गच्छन्तं च प्रदक्षिणम् ॥ ६८ ॥

स्वेस्वे तत्र गृहाभ्याशे विप्राद्यास्तु मुदाऽन्विताः ।
दीपाङ्कुरोदकुम्भाद्यैः प्रत्युत्थायैव भक्तितः ॥ ६९ ॥

स्ववंश्याश्च नमस्कृत्य पाद्यपुष्पानुलेपनैः ।
पूजयेयुश्च तैर्नित्यं भक्ष्यमामं प्रगृह्य च ॥ ७० ॥

विष्णवे नम इत्युक्त तत्र देवं निवेद्य च ।
आचमनं प्रदायैव मुखवासं निवेदयेत् ॥ ७१ ॥

एवमेव तु तद्ग्रामं कारयेत प्रदक्षिणम् ।
तथा प्रदक्षिणं कृत्वा प्रविशेदालयं पुनः ॥ ७२ ॥

देवस्यालोकनेनैव श्रीरारोग्यं प्रजास्तथा ।
धनधान्यानि सर्वाश्च सम्पदश्च भवन्ति च ॥ ७३ ॥

अशुभानि च सर्वाणि विनश्यन्ति न संशयः ।
अवरोप्याथ यानाच्च देवमादाय पूर्ववत् ॥ ७४ ॥

प्रविश्य मन्दिरं तत्र मण्टपेऽलङ्कृतेऽथवा ।
पीठे संस्थाप्य देवेशं पूजयेदष्टविग्रहैः ॥ ७५ ॥

उत्तमैः कलशैर्देवं चतुर्विंशतिभिः क्रमात् ।
पूर्ववत्स्नापयेदद्भिः केवलैर्मध्यमेऽधमे ॥ ७६ ॥

संस्नाप्य पीठे संस्थाप्य देवं सिंहासनेऽथवा ।
प्लोतवस्त्रोत्तरीयाद्यैर्भूषणैश्च विभूष्य च ॥ ७७ ॥

सुगन्धैरथ माल्यैश्च गन्धैर्देवमलङ्कृतम् ।
आस्थानमण्टपे सम्यगलङ्कारैः समायुतम् ॥ ७८ ॥

देवं संस्थाप्य पाद्याद्यैरर्चयित्वा प्रणम्य च ।
महाहविः प्रभूतं वा पूर्ववत् संनिवेदयेत् ॥ ७९ ॥

अपूपादीनि भक्ष्याणि फलान्यपि निवेदयेत् ।
कर्पूराद्यैर्यथाशक्ति मुखवासं निवेदयेत् ॥ ८० ॥

अथवाऽप्यर्चनापीठे स्थापयित्वा यथाविधि ।
अर्चयित्वा प्रभूतं च हविस्सम्यङ् निवेदयेत् ॥ ८१ ॥

एवमेवोत्सवं कुर्याद्यथावित्तानुसारतः ।
एवं रात्रौ च कृत्वैव द्वितीयाहःप्रभृत्यपि ॥ ८२ ॥

प्रातःसन्ध्यार्चनान्ते च सायमर्चान्त एव च ।
अर्चयित्वा हवींष्येवं निवेद्यैव विशेषतः ॥ ८३ ॥

होमं हुत्वा बलिं दत्त्वा देवस्योत्सवमाचरेत् ।
आदौ रात्रिक्रमेणैव द्विकालं सर्वमाचरेत् ॥ ८४ ॥

एवमेवाचरेन्नित्यं सायं प्रातस्तथोत्सवम् ।
उत्सवे चावताराणां यदीच्छेदुत्सवं बुधः ॥ ८५ ॥

अलङ्कारैर्यथाशक्ति कारयेत स्वशक्तितः ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे प्रथमदिनोत्सवविधि-
र्नाम पञ्चपञ्चाशोऽध्यायः ॥

---

## षट्पञ्चाशोऽध्यायः ॥



तीर्थस्नानदिनात्पूर्वं रात्रौ कर्मेदमुच्यते ।
तद्रात्रौ पूर्ववत्कुर्याद्बलिहोमं तथोत्सवम् ॥ १ ॥

पुनर्देवं च संस्नाप्य तथाऽभ्यर्च्य हवींषि च ।
निवेदयित्वा देवेशं पुण्याहं वाचयेत्तथा ॥ २ ॥

प्रतिष्ठोक्तविधानेन क्रमेणैव तु पञ्च च ।
शयनानि तथाऽऽस्तीर्य पञ्च वस्त्राणि वा पुनः ॥ ३ ॥

बध्वा प्रतिसरां तत्र पूर्ववच्छाययेद्धरिम् ।
तत्तन्मन्त्रेण चक्रादीन् बध्वा प्रतिसरां तथा ॥ ४ ॥

नृत्तैर्गेयैश्च वाद्यैश्च रात्रिशेषं नयेत्पुनः ।
गुरुणा सहितश्शुद्धो यजमानो हविष्यभुक् ॥ ५ ॥

संचिन्त्य शयितं देवं तद्रात्रौ संविशेद्बुधः ।
प्रातः प्रबोध्य देवेशमुच्चैरोङ्कारमुच्चरन् ॥ ६ ॥

चक्रादीनपि तत्पार्श्वे स्थापयेद्द्वारि दिङ्मुखान् ।
तत्र तानर्चयेद्देवान् केवलैरष्टविग्रहैः ॥ ७ ॥

पाद्याद्यैरौत्सवं तद्वदर्ध्यान्तैरर्चयेत्क्रमात् ।
बध्वा प्रतिसरां तस्य हविर्नैव निवेदयेत् ॥ ८ ॥

कौतुकं स्नपनं चान्यदर्चयित्वा विधानतः ।
पूर्ववच्च हविर्नित्यमन्येषां च निवेदयेत् ॥ ९ ॥

तथैव होमं हुत्वा च प्रभूतं बलिमेव च ।
दत्त्वा च पूर्ववद्देवमलङ्कृत्य विशेषतः ॥ १० ॥

देवस्याभिमुखे तत्र गोमयेनोपलिप्य च ।
तत्र पश्चिमतश्चक्रं स्थापयित्वोत्तरे तथा ॥ ११ ॥

विष्वक्सेनं च संस्थाप्य पूजयेदष्टविग्रहैः ।
तत्रैवोलूखलं चापि मुसलं पूर्ववन्न्यसेत् ॥ १२ ॥

अर्चयित्वा विधानेन हरिद्रां तदुलूखले ।
प्रक्षिप्य च हरिद्रां तां स्नपनोक्तविधानतः ॥ १३ ॥

योषिद्भिश्चूर्णयेत्सम्यक् पात्रे तच्चूर्णमाहरेत् ।
उशीरं तण्डुलं चापि चूर्णयित्वा तथैव च ॥ १४ ॥

तच्चूर्णस्य चतुर्भागं तच्चूर्णेनैव मिश्रितम् ।
कलशांश्चतुरो वाऽथ द्वावेकं वाऽथ पूरयेत् ॥ १५ ॥

कलशे धरां सिनीवालीमर्चयेदष्टविग्रहैः ।
कलशान् वेदाहमित्युक्त्वा वस्त्रेण परिवेष्ट्य च ॥ १६ ॥

देवदेवं समभ्यर्च्य पाद्याद्यैर्विग्रहैः पुनः ।
तच्चूर्णं समुपादाय देवमूर्ध्न्यभिषिच्य च ॥ १७ ॥

शिष्टेन कलशस्थेन चक्रवीशामितानपि ।
केवलं चक्ररूपं वा शिष्टेन स्नापयेत्पुनः ॥ १८ ॥

देवदेवाङ्गसंमृष्टं तच्चूर्णं शिरसैव यः ।
वहेत्तस्याशुभा नश्युः पुण्यभागी भवेन्नरः ॥ १९ ॥

अलङ्कृतं तथा देवं यानमारोप्य पूर्ववत् ।
चक्रादींश्च तथा याने हस्तेनैवाथवा नयेत् ॥ २० ॥

कारयेत विधानेन तथा ग्रामप्रदक्षिणम् ।
एवं प्रदक्षिणं कृत्वा तीर्थस्नानाय संव्रजेत् ॥ २१ ॥

सिन्धुं पुण्यनदीमब्धिं नदं वाऽपि सरोऽथवा ।
निर्झरं वा तटाकं वा शुद्धतोयं मनोरमम् ॥ २२ ॥

पर्वकाले समुद्राम्बु पुण्यमुक्तं न चान्यदा ।
एषूक्तेषूत्तरं ग्राह्यं पूर्वालाभे विजानता ॥ २३ ॥

जलाशयं तु तत्पुण्यं विष्ण्वालयसमीपतः ।
गङ्गाजलसमं ज्ञेयं विष्णुपादोपसेवनात् ॥ २४ ॥

स्वच्छं रम्यं विशुद्धं च यत्र स्याच्च बहूदकम् ।
गच्छेद्धनुसहस्राभ्यामर्वागूर्ध्वं न च व्रजेत् ॥ २५ ॥

तीर्थं गत्वैव तत्तीरे प्रपां कृत्वा च शक्तितः ।
अलङ्कृत्य वितानाद्यैर्धूपैर्दीपैरथाङ्कुरैः ॥ २६ ॥

स्थापयेत्तत्र देवेशं चक्रादीन् पूर्वतो न्यसेत् ।
पूर्ववत् कलशान् पञ्च तन्तुना परिवेष्ट्य च ॥ २७ ॥

रत्नोदैरक्षतोदैश्च कुशोदैश्च यवोदकैः ।
चन्दनोदैश्च सम्पूर्णान् कलशान् संप्रगृह्य तान् ॥ २८ ॥

मध्ये प्रागादि परितश्चतुर्दिक्षु च संन्यसेत् ।
एकादशोपचारैश्च कलशानर्चयेत्क्रमात् ॥ २९ ॥

देवदेवं च पाद्याद्यैरर्चयेदष्टविग्रहैः ।
इषेत्वोर्जेत्वादि तथा गायत्रीं वैष्णवीं जपन् ॥ ३० ॥

रत्नोदैः प्रोक्षयेद्देवमक्षतोदैः कुशोदकैः ।
यवोदैश्चन्दनोदैश्च प्रोक्षयित्वा ततः परम् ॥ ३१ ॥

शिष्टैस्तत्कलशोदैस्तु तच्चक्रमभिषेचयेत् ।
देवं प्रणम्य तत्तीर्थे ततश्चक्रं निमज्जयेत् ॥ ३२ ॥

यजमानस्तथाऽन्ये च भक्ताः सर्वे जनास्तथा ।
स्नानं कुर्युस्तदा तीर्थे ध्यायन्तो विष्णुमव्ययम् ॥ ३३ ॥

देवस्य सन्निधौ तत्र स्नाता भक्त्यैव ये जनाः ।
सर्वपापविनिर्मुक्ता विष्णुलोकमवाप्नुयुः ॥ ३४ ॥

ध्यायेन्नारायणं नित्यं स्नानादिषु च कर्मसु ।
इति दक्षादिधर्मज्ञाः प्राहुस्सर्वे तपोधनाः ॥ ३५ ॥

अथवा देवदेवं तं वस्त्रादींश्च विसृज्य च ।
वस्त्रं च परिधाप्यान्यदर्चयित्वा तथैव च ॥ ३६ ॥

पञ्चभिः कलशैर्देवं स्नपयित्वा यथाक्रमम् ।
विष्णुसूक्तेन देवेशं तत्र तीर्थे निमज्जयेत् ॥ ३७ ॥

धौतवस्त्रोत्तरीयाद्यैरलङ्कृत्य तथाऽर्चयेत् ।
याने देवं समारोप्य पूर्ववत्संनयेत्पुनः ॥ ३८ ॥

देवालयं प्रविश्यैव स्थापयेत्स्नपनालये ।
स्नपनोक्तविधानेन कलशैः स्नापयेद्विभुम् ॥ ३९ ॥

नवाम्बरोत्तरीयाद्यैर्भूषणैरभिभूष्य च ।
माल्यैर्गन्धैरलङ्कृत्य नयेदास्थनमण्टपम् ॥ ४० ॥

विष्टरे स्थापयित्वा च देवं पूर्ववदर्चयेत् ।
महाहविः प्रभूतं वा विधिनैव निवेदयेत् ॥ ४१ ॥

विष्णुसूक्तं जपन्नेव प्रणामान् पञ्च चाचरेत् ।
अर्चापीठेऽथवाऽभ्यर्च्य हविर्देवं निवेदयेत् ॥ ४२ ॥

वैष्णवस्यास्य यज्ञस्य यजमानो मुदाऽन्वितः ।
आचार्याद्यर्चकेभ्यश्च परिचर्तृभ्य एव च ॥ ४३ ॥

सर्वेभ्यः कर्मकर्तृभ्यो यथार्हं दक्षिणां ददेत् ।
स्वस्थाने पूर्ववद्देवं स्थापयित्वाऽर्चयेत् क्रमात् ॥ ४४ ॥

तत्तत्स्थाने तथाऽभ्यर्च्य चक्रादींश्च निवेदयेत् ।
सौम्यस्य देवदेवस्य प्रवृत्ते चोत्सवे हरेः ॥ ४५ ॥

अन्यदेवोत्सवं तत्र न कुर्यादिति शासनम् ।
उत्सवं यदि कुर्यात्तु ग्रामे तत्रान्यदैवतम् ॥ ४६ ॥

उत्सवौ निष्फलौ स्यातामशुभाश्च भवन्ति च ।
देवोत्सवे प्रवृत्ते तु मनुष्यस्योत्सवस्तदा ॥ ४७ ॥

तस्मिन् ग्रामे न कर्तव्यः कुर्याच्चेत्स विनश्यति ।
अन्येषां क्रूरदेवानां ग्रामे यत्रोत्सवे कृते ॥ ४८ ॥

सौम्यमूर्तेर्हरेस्तत्र कारयेदुत्सवं पुनः ।
देवोत्सवे हरेर्वृध्या वर्धन्ते सर्वसम्पदः ॥ ४९ ॥

उत्सवोक्तदिनानां तु वक्ष्याम्यत्राधिदैवतम् ।
प्रथमं ब्राह्ममुद्दिष्टं द्वितीयं चार्षकं मतम् ॥ ५० ॥

रौद्रं तृतीयं संप्रोक्तं चतुर्थं वासवं स्मृतम् ।
पञ्चमं सौम्यमाख्यातं वैष्णवं षष्ठमुच्यते ॥ ५१ ॥

सप्तमं सर्वदैवत्यमष्टमं वसुदैवतम् ।
नवमं त्वाष्ट्रकं प्रोक्तं दशमं सौरमुच्यते ॥ ५२ ॥

कौबेरमेकादशमं वायव्यं द्वादशं स्मृतम् ।
त्रयोदशं तु कौमारं वैघ्नं चैव चतुर्दशम् ॥ ५३ ॥

ततः पञ्चदशाहं तु वैष्णवं परिकीर्तितम् ।
तद्दिनाधिपदैवत्यं दिने तस्मिंश्च हूयते ॥ ५४ ॥

एवमेव विधानेन विष्णोरुत्सवमुत्तमम् ।
भक्त्यैव कारयेद्यस्तु सर्वान् कामानवाप्नुयात् ॥ ५५ ॥

तत्र तीर्थदिने रात्रौ देवेशमभिपूज्य च ।
ध्वजे देवं च संपूज्य पूर्ववद्धविषा युतम् ॥ ५६ ॥

प्रभूतं बलिमाहृत्य चक्रादींश्च विनैव तु ।
देवालये च सर्वेभ्यो बलिं क्षिप्त्वा ततः परम् ॥ ५७ ॥

तस्मिन् ग्रामेऽपि सर्वत्र पूर्वोक्तेन क्रमेण च ।
पूर्ववच्च बलिं दद्यात् स्थानेषूक्तेषु मन्त्रवित् ॥ ५८ ॥

चतुष्कोणत्रिकोणेषु द्विकोणेषु च सन्धिषु ।
सर्वत्रापि बलिं दद्यात्तत्तत्स्थानेषु पूर्ववत् ॥ ५९ ॥

मध्ये चापि महास्थाने सर्वदेवालयेषु च ।
चैत्यवृक्षस्य मूले च तटाकसरसां तथा ॥ ६० ॥

तीरे शून्यालये चापि श्मशानेऽपि महापथे ।
अन्यत्रापि विविक्ते च देशे साधारणेऽपि च ॥ ६१ ॥

तत्रस्थेभ्यस्तु भूतेभ्यः सर्वेभ्यश्च बलिं क्षिपेत् ।
सर्वत्रापि बलिं दत्त्वा देवालयमुपाव्रजेत् ॥ ६२ ॥

स्नात्वा देवं प्रणम्यैव ध्वजं तमवरोपयेत् ।
पूर्ववन्नवधा प्रोक्तमुत्सवं च दिनक्रमात् ॥ ६३ ॥

अधमाधममेकाहमुत्सवं संप्रवक्ष्यते ।
एकाहिकोत्सवे सर्वं कुर्यात्तीर्थदिनोक्तवत् ॥ ६४ ॥

अधमान्मध्यमं प्रोक्तमुत्सवं तु दिनद्वयम् ।
अधमादुत्तमं प्रोक्तमुत्सवं तु दिनत्रयम् ॥ ६५ ॥

पञ्चाहमुत्सवं तद्वन्मध्यमादधमं विदुः ।
सप्ताहमुत्सवं यत्तन्मध्यमान्मध्यमं तथा ॥ ६६ ॥

नवाहं च तथा प्रोक्तं मध्यमोत्तममेव वै ।
एकादशाहं संप्रोक्तमुत्तमादधमं बुधैः ॥ ६७ ॥

त्रयोदशाहं संप्रोक्तमुत्तमान्मध्यमं क्रमात् ।
पञ्चदशाहं संप्रोक्तमुत्तमोत्तममुत्सवम् ॥ ६८ ॥

एकाहमधमं तद्वत्सप्ताहं मध्यमं तथा ।
नवाहमुत्तमं चेति प्राहुः केचित्त्रिधोत्सवम् ॥ ६९ ॥

एतेष्वेकं समारभ्य पूर्वोक्तेन विधानतः ।
यथाशक्ति यथाभक्ति चोत्सवं कारयेद्बुधः ॥ ७० ॥

एतेनैवोत्सवेनैव प्रीणाति भगवान् हरिः ।
विष्णोरवभृथार्थं तु कारयेदुत्सवं च यः ॥ ७१ ॥

इह लोके सुखं सर्वं संप्राप्यैव ततः परम् ।
देवैः परिवृतो गच्छेत्तद्विष्णोः परमं पदम् ॥ ७२ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे उत्सवविधिर्नाम षट्पञ्चाशोऽध्यायः ॥

---

## सप्तपञ्चाशोऽध्यायः ॥

---

एकाहिकोत्सवश्चापि पूर्ववत्त्रिविधः स्मृतः ।
तीर्थोत्सवस्तथा चैव शान्तिकोत्सव इत्यपि ॥ १ ॥

भक्त्युत्सवश्चेति तथा त्रिधा भेदश्च कथ्यते ।
जनानां तीर्थदानाय कृतस्तीर्थोत्सवः स्मृतः ॥ २ ॥

क्षुद्रोपद्रवशान्त्यर्थं शान्त्युत्सव उदाहृतः ।
द्रष्टुं भक्त्या कृतो यस्तु भक्त्युत्सव इतीरितः ॥ ३ ॥

भक्त्युत्सवस्य पर्यायो भक्तोत्सव इतीरितः ।
पूर्वोक्तेन क्रमेणैव चोत्सवं सम्यगाचरेत् ॥ ४ ॥

अमावास्या यदा तस्यां श्रवणर्क्षे तथैव च ।
द्वादश्योश्च द्वयोस्तद्वत्पौर्णमास्यां तथैव च ॥ ५ ॥

अन्यस्मिन् पुण्यनक्षत्रे स्वस्य जन्मदिनेऽथवा ।
तस्मात्तद्दिवसात्पूर्वमङ्कुरानर्पयेद्बुधः ॥ ६ ॥

पूर्वेद्युरेव शर्वर्यां रात्रिपूजावसानके ।
देवं प्रणम्य विधिना विशेषेणार्चयेत्तदा ॥ ७ ॥

हवींषि च निवेद्यैव मुखवासं निवेदयेत् ।
शयनानि तथाऽऽस्तीर्य बध्वा प्रतिसरां ततः ॥ ८ ॥

पूर्वोक्तविधिना देवं शाययीत विचक्षणः ।
ततः प्रभाते स्नात्वैव देवमुत्थाप्य पूर्ववत् ॥ ९ ॥

अर्घ्यान्ताचमनान्तैश्च पाद्याद्यैर्वाऽर्चयेद्धरिम् ।
फलानि मुखवासं च यथाशक्ति निवेदयेत् ॥ १० ॥

तीर्थात्पूर्वं तु तं देवं हविर्नैव निवेदयेत् ।
ध्वजारोपणहीनं च तथा भूतबलिं विना ॥ ११ ॥

वस्त्रगन्धादिमाल्यैश्च सर्वैरपि च भूषणैः ।
देवदेवमलङ्कृत्य यानमारोप्य पूर्ववत् ॥ १२ ॥

छत्रैः पिञ्छैर्ध्वजैरन्यैश्चामरादिपरिच्छदैः ।
अलङ्कारैर्युतं देवं नयेद्ग्रामप्रदक्षिणम् ॥ १३ ॥

ग्रामं प्रदक्षिणं कृत्वा तीर्थस्थानं प्रवेश्य च ।
तत्तीर्थतीरे देवेशं स्थापयित्वैव पूर्ववत् ॥ १४ ॥

पाद्याद्यैरर्घ्यपर्यन्तैरर्चयित्वा पुनः प्रभुम् ।
देवस्य पुरतश्चक्रं स्थापयित्वा तमर्चयेत् ॥ १५ ॥

पूर्ववत्कलशान् पञ्च पूरयित्वैव संन्यसेत् ।
तत्तद्देवांस्ततोऽभ्यर्च्य स्थापयेद्धरिमव्ययम् ॥ १६ ॥

शिष्टतोयेन तच्चक्रं स्नापयेत्तदनुक्रमात् ।
तच्चक्रं च पुनस्तीर्थे मज्जयेद्देवसन्निधौ ॥ १७ ॥

तीर्थे सर्वे जनास्तत्र मज्जेयुर्देवसंनिधौ ।
पश्चाद्देवं तथा नीत्वा मन्दिरं संप्रवेशयेत् ॥ १८ ॥

कलशैः स्नापयेद्देवं शुद्धोदैर्वाऽभिषेचयेत् ।
अर्चयित्वा यथाशक्ति हवींष्यपि निवेदयेत् ॥ १९ ॥

एतत्तीर्थोत्सवं प्रोक्तं सर्वपापप्रणाशनम् ।
तीर्थोत्सवं तु मध्याह्ने कारयेत प्रयत्नतः ॥ २० ॥

शान्त्युत्सवं तु कुर्याच्चेत्तद्धोमं च तथैव च ।
प्रभूतं च बलिं दत्त्वा वस्त्राद्यैरपि भूषणैः ॥ २१ ॥

अलङ्कृत्य च देवेशं यानमारोप्य पूर्ववत् ।
सर्वालङ्कारसंयुक्तं ग्रामं कुर्यात्प्रदक्षिणम् ॥ २२ ॥

अलङ्कृत्य च तच्चक्रं देवस्य पुरतो नयेत् ।
प्रदक्षिणं तथा कृत्वा ततो गत्वा जलाशयम् ॥ २३ ॥

स्नपनं मज्जनं तद्वत्कृत्वाऽऽलयमुपाव्रजेत् ।
एवमेव कृतो यस्तु शान्तिकोत्सव उच्यते ॥ २४ ॥

शान्तिकोत्सवमेवं तु पूर्वाह्णे कारयेद्बुधः ।
भक्त्युत्सवं च कुर्याच्चेद्भक्त्या देवं प्रणम्य च ॥ २५ ॥

चक्रेणैव विना देवमर्चयित्वा हवींषि च ।
निवेद्यैव विशेषेण वस्त्रमाल्यादिभूषणैः ॥ २६ ॥

अलङ्कृत्य च देवेशं यानमारोप्य पूर्ववत् ।
ग्रामं प्रदक्षिणं कुर्यात्सर्वालङ्कारसंयुतम् ॥ २७ ॥

पश्चादालयमाविश्य स्नापयित्वा निवेदयेत् ।
ध्वजारोहणहीने च हीने मृद्ग्रहणेऽपि च ॥ २८ ॥

होमे चक्रे विहीने च हीने भूतबलौ तथा ।
भक्तोत्सवे कृते तस्मिन् दोषो नास्तीति गीयते ॥ २९ ॥

भक्त्युत्सवं तु कुर्याच्चेदपराह्णे तु कारयेत् ।
विधिनैव हरेर्भक्त्या विष्णोरुत्सवमाचरेत् ॥ ३० ॥

उत्सवं कारयेद्यस्तु सर्वान् कामानवाप्नुयात् ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे एकाहिकोत्सवविधिर्नाम सप्तपञ्चाशोऽध्यायः ॥

---

## अष्टपञ्चाशोऽध्यायः ॥

अतःपरं प्रवक्ष्यामि शृणुध्वं मुनिसत्तमाः ।
अवतारप्रतिष्ठां च तेषामभ्यर्चनाक्रमान् ॥ १ ॥

मत्स्यः कूर्मो वराहश्च नारसिंहश्च वामनः ।
रामो रामश्च रामश्च कृष्णः कल्कीति ते दश ॥ २ ॥

पूर्वान् पञ्च वरान् प्राहुराविर्भावानिति क्रमात् ।
अपरांस्तेषु पञ्चैव प्रादुर्भावान् वदन्ति च ॥ ३ ॥

आदिमूर्तेस्तु भेदेन बहुधा रूपविस्तरम् ।
पृथक् पृथक् प्रवक्ष्यामि यथा देवश्चकार सः ॥ ४ ॥

पुरा चादियुगे देवो देवनिर्णयतत्परः ।
अनेकयुगपर्यन्तमुद्भूते प्रलये पृथक् ॥ ५ ॥

निमग्ने तु जगत्यस्मिन् तोयं संहर्तुमुद्यतः ।
महामत्स्यमभूत्सर्वमुपसंहृतवान् जलम् ॥ ६ ॥

वेदानपि समुद्धर्तुं मत्स्यरूपोऽभवत्तथा ।
आदावण्डमभूद्यत्तद्धेमरूपं महत्तरम् ॥ ७ ॥

सहस्रयुगपर्यन्तमेकमण्डं व्यवस्थितम् ।
तदण्डचलनं दृष्ट्वाऽचिन्तयद्भगवान् हरिः ॥ ८ ॥

तदण्डभरणार्थाय कूर्मरूपोऽभवत्पुरा ।
एतयोश्च द्वयो रूपं कारयित्वाऽर्चयेत्क्रमात् ॥ ९ ॥

अर्चनाच्चावताराणामादिमूर्त्यर्चनं भवेत् ।
ग्रामे वा नगरे वाऽपि पत्तने खर्वटेऽपि वा ॥ १० ॥

नदीतीरेऽथवा कुर्यात्पर्वते वा वनेऽथवा ।
सेनामुखे च कुटिके तीरे वाऽब्धेस्तथैव च ॥ ११ ॥

एतेषां स्थापनं कुर्यात्प्रशस्ते रमणीयकम् ।
कुम्भाकारे त्रिकूटे वा हस्तिपृष्ठेऽथवा पुनः ॥ १२ ॥

नन्द्यावर्तविमाने वा मण्टपे वाऽथ कारयेत् ।
कर्षणादीनि कर्माणि पूर्वोक्तानि समाचरेत् ॥ १३ ॥

ध्रुवबेरं तु मत्स्यं च कूर्मरूपं च कारयेत् ।
विष्णुं पूर्ववदासीनं स्थितं वाऽपि विधानतः ॥ १४ ॥

नवभेदेष्वथैकेन कौतुकं कारयेद्बुधः ।
मत्स्यं च कूर्मरूपं च कौतुकं न समाचरेत् ॥ १५ ॥

औत्सवं स्नापनं चैव बिम्बं कुर्याच्चतुर्भुजम् ।
एषां च स्थापनामार्गं पूर्ववत्सम्यगाचरेत् ॥ १६ ॥

विशेषं तु प्रवक्ष्यामि तच्छृणुध्वं समाहिताः ।
मत्स्यस्य स्थापनं कुर्याद्विशेषः पञ्चकुण्डके ॥ १७ ॥

हौत्रं तत्र प्रशंस्यैव मूर्त्यावाहनमाचरेत् ।
मत्स्यं विष्णुं तथा भद्रं क्रीडात्मकमिति क्रमात् ॥ १८ ॥

आवाह्य विधिना विद्वान्निरूप्याज्याहुतीर्यजेत् ।
यत्स्वयंसृष्टमित्युक्त्वा शतमष्टोत्तरं यजेत् ॥ १९ ॥

अर्चनं चोत्सवं चैव स्नपनं बलिमेव च ।
पूर्वोक्तेनैव कृत्वा तु तत्तन्मूर्तिभिरर्चयेत् ॥ २० ॥

कूर्मस्य गार्हपत्याग्नौ हौत्रशंसनमाचरेत् ।
अकूपारं च कूर्मं च विष्णुं च वसुधाधरम् ॥ २१ ॥

इत्येवमुक्त्वा चावाह्य निरुप्याज्याहुतीर्यजेत् ।
रायामीशेति मन्त्रेण शतमष्टोत्तरं यजेत् ॥ २२ ॥

अर्चनादीनि कर्माणि पूर्ववत्सम्यगाचरेत् ।
मत्स्यः कूर्मो भवेद्विष्णुस्तस्माद्विष्णोरिव द्वयोः ॥ २३ ॥

प्रतिष्ठां चार्चनं चैव स्नपनं चोत्सवं तथा ।
पूर्वोक्तेन विधानेन तत्सर्वं सम्यगाचरेत् ॥ २४ ॥

वराहस्त्रिविधः प्रोक्तो देवस्याविर्भवः क्रमात् ।
तथैवादिवराहश्च वराहः प्रलयात्मकः ॥ २५ ॥

यज्ञवराह इत्येवं त्रिविधः परिकीर्तितः ।
देवमानुषतिर्यग्भिः स्थावरं जङ्गमानि च ॥ २६ ॥

पुरा सृष्टा यथा सर्वे चत्वारो भेदतः क्रमात् ।
जरायुजाण्डजाश्चैवोद्भिज्जजाः स्वेदजादयः ॥ २७ ॥

एवं प्रवर्तमाने तु महिरत्यन्तपीडिता ।
मग्ना रसालयं साक्षाद्धरिध्यानेन सङ्गता ॥ २८ ॥

रसातलगतां स्मृत्वा तत्समुद्धारणाय च ।
महावराहरूपेण महीमुद्धृतवान् हरिः ॥ २९ ॥

दशतालेन मानेन देवं तत्क्रोडरूपिणम् ।
मुखं वराहरूपं तु किरीटमकुटान्वितम् ॥ ३० ॥

सर्वाभरणसंयुक्तं चतुर्भुजसमायुतम् ।
शङ्खचक्रधरं देवं नीलाम्बुदघनच्छविम् ॥ ३१ ॥

वामं पादं समाकुञ्च्य महीमुद्वाह्य वेगतः ।
दक्षिणं च स्थितं कुर्यान्महीमूरौ समाचरेत् ॥ ३२ ॥

हरेर्दक्षिणहस्ते तु देवीपादौ धृतौ यथा ।
तस्याः कण्ठबहिःपार्श्वे सव्यमाधारवच्चरेत् ॥ ३३ ॥

मुखेन मूर्ध्नि जिघ्रन्तं वराहं तत्र कारयेत् ।
महीं च श्यामवर्णाभां पञ्चतालविधानतः ॥ ३४ ॥

पुष्पाम्बरसमायुक्तां सर्वाभरणभूषिताम् ।
प्राञ्जलीकृतहस्ताभ्यां कुर्वन्तीं वन्दनं हरेः ॥ ३५ ॥

संप्रसारितपादां च महीं तत्र समाचरेत् ।
एवमादिवराहं तु कारयेल्लक्षणान्वितम् ॥ ३६ ॥

अवतारमनुप्राप्तं कल्पान्तप्रलयं विदुः ।
तत्तोयमुपसंहर्तुं वाराहं रूपमास्थितम् ॥ ३७ ॥

वदन्ति तस्मात्प्रलयवराहं तु पुरातनाः ।
कारयेत्पीतवर्णं तु तोयं येनोपसंहृतम् ॥ ३८ ॥

शङ्खचक्रधरं सम्यक् चतुर्भुजधरं हरिम् ।
दक्षिणं चाभयं हस्तं वामं कट्यवलम्बितम् ॥ ३९ ॥

महीं च दक्षिणे कुर्यात्पद्महस्ते च दक्षिणे ।
वामकट्यवलम्बं च सस्यश्यामनिभं तथा ॥ ४० ॥

नीलाम्बरधरं देवं पुष्पाम्बरधरां महीम् ।
सुखासनक्रमेणैवमासीनौ तौ च कारयेत् ॥ ४१ ॥

वामभागे स्थितं कुर्यान्नारदं नवतालतः ।
नारदं रक्तवर्णाभं वीणाहस्तं तु कारयेत् ॥ ४२ ॥

मार्कण्डेयं भृगुं चैव पूजकौ तौ समाहरेत् ।
पुण्यं पीतनिभं कुर्याद्भृगुमग्निनिभं चरेत् ॥ ४३ ॥

एवं प्रलयवाराहो वक्ष्ये यज्ञवराहकम् ।
हिरण्याक्षोऽथ दैत्येन्द्रो बलवान् बलिनां वरः ॥ ४४ ॥

वरेण दर्पो दुर्बुद्धिर्यज्ञविद्वेषकोऽभवत् ।
तद्वधं कृतवान्विष्णुर्नरसूकरमूर्तिमान् ॥ ४५ ॥

हत्वा तु सबलं दैत्यं पश्चाद्यज्ञं व्यवर्धयत् ।
तस्माद्यज्ञवराहस्तु तं च कुर्याद्विधानतः ॥ ४६ ॥

श्वेतं यज्ञवराहं तु दशतालेन मानतः ।
श्रीभूमीसहितं कुर्यात्तद्वर्णैस्तद्विभूषणैः ॥ ४७ ॥

सुखासने समासीनं यज्ञवाराहमव्ययम् ।
यज्ञतीर्थाविति ख्यातौ ऋषी तत्र च पूजकौ ॥ ४८ ॥

यज्ञमग्निनिभं कुर्यात्तीर्थं श्वेतनिभं तथा ।
तत्तद्रूपं प्रकुर्वीत कौतुकं लक्षणान्वितम् ॥ ४९ ॥

त्रयाणां च वराहाणां स्थापनाभेद उच्यते ।
पूर्वोक्तेनैव मार्गेण सर्वं कृत्वा यथाविधि ॥ ५० ॥

सभ्यकुण्डे तथा कुर्यादाघारं वैश्वदैविकम् ।
हौत्रं तत्र प्रशंस्यैव मूर्त्यावाहनमाचरेत् ॥ ५१ ॥

वराहं वरदं विष्णुमुर्वीसन्धारणं तथा ।
वज्रदंष्ट्रिणमित्युक्त्वा देवमादिवराहकम् ॥ ५२ ॥

महीं गां पृथिवीमुर्वीमिति देवीं महीमपि ।
आवाहयेद्यथाऽन्यांस्तु देवान् पूर्ववदाह्वयेत् ॥ ५३ ॥

वराहं प्रलयहृणं भूमीशं विष्णुमित्यपि ।
जगत्रायकमित्युक्त्वा वाराहं प्रलयात्मकम् ॥ ५४ ॥

वाराहं देवरूपं च यज्ञेशं यज्ञवर्धनम् ।
विष्णुं चेति तथा यज्ञं देवं वाराहमाह्वयेत् ॥ ५५ ॥

यज्ञं क्रतुधरं मुख्यं यज्ञाङ्गमिति यज्ञकम् ।
तीर्थं पापहरं चेति वरदं कामरूपिणम् ॥ ५६ ॥

इति तीर्थं समावाह्य देव्यादीनपि पूर्ववत् ।
आवाहनादीन् सर्वांश्च पूर्ववत्कारयेद्बुधः ॥ ५७ ॥

क्ष्मामेकामिति मन्त्रेण यजेदष्टशतं बुधः ।
अर्चनादीनि सर्वाणि पूर्ववत्कारयेत्क्रमात् ॥ ५८ ॥

एवं त्रिविधरूपं तु स्थापयित्वा समर्चयेत् ।
हरिरेव वराहोऽभूत्तस्मात्सर्वं हरेरिव ॥ ५९ ॥

प्रतिष्ठामर्चनं चापि स्नपनं चोत्सवं तथा ।
त्रिविधस्य वराहस्य सर्वं पूर्ववदाचरेत् ॥ ६० ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे मत्स्यकूर्मवराहाणां
स्थापनाविधिर्नामाष्टपञ्चाशोऽध्यायः ॥

---

## एकोनषष्टितमोऽध्यायः ॥

---

नारसिंहो द्विधा प्रोक्तो गिरिजः स्थूणजस्तथा ।
वरेण गर्वितो दैत्यो हिरण्यकशिपुस्तथा ॥ १ ॥

देवैर्वा मानुषैर्वाऽपि मृगैर्जीवैरजीवकैः ।
दिवा रात्रौ च कुत्रापि वधो नैव ममेति च ॥ २ ॥

एवं वरेण गर्वन्तं दैत्यं देवविरोधिनम् ।
वधं कर्तुं कृतोद्योगश्चिन्तयित्वा हरिः प्रभुः ॥ ३ ॥

तच्छोणितपुराद्याख्ये पर्वते शृङ्गकोपरि ।
तद्बाधापीडितैर्देवैर्न्यवेदि च हरिः स्वयम् ॥ ४ ॥

नारसिंहवपुः कृत्वा दिवारात्रं व्यपोह्य च ।
सन्ध्यायां च वधं कुर्याद्भुवङ्गे च नखाङ्कुरैः ॥ ५ ॥

बाह्यमाभ्यन्तरं हित्वा जीवाजीवैर्नखैश्शुभैः ।
एवं दैत्यवधं कृत्वा पर्वते पुनरास्थितः ॥ ६ ॥

ब्रह्मेशाद्यैर्यथा देवैः स्तुतिभिश्शान्तिमागतः ।
हरिर्देवैःस्तवैस्तत्र तदेवं रूपमर्च्यताम् ॥ ७ ॥

इति देवैर्वृतो देवो वरमेतं तु दत्तवान् ।
ततस्तमर्चयेद्भक्त्या विजयश्रीविवृद्धये ॥ ८ ॥

पर्वताकृतिके वाऽपि श्रीप्रतिष्ठितकेऽपि वा ।
नारसिंहं प्रकुर्वीत दशतालेन मानतः ॥ ९ ॥

सिंहासने सुखासीनं श्रीभूमिसहितं हरिम् ।
श्वेतवर्णं हरिं कुर्याच्छ्रियं कनकसन्निभाम् ॥ १० ॥

मेदिनीं श्यामवर्णां च सर्वाभरणभूषिताम् ।
नारसिंहं चतुर्बाहुं शङ्खचक्रधरं परम् ॥ ११ ॥

सव्यं दानकरं कुर्याद्वाममूरुप्रतिष्ठितम् ।
अथवा वामपादं तु प्रसार्यैवासनादधः ॥ १२ ॥

दक्षिणं पादमाकुञ्च्य न्यस्य सिंहासनोर्ध्वतः ।
हस्तं च दक्षिणं जानौ दक्षिणे संप्रसाय च ॥ १३ ॥

संन्यस्य वामं वामोरौ संन्यस्यासीनमेव वा ।
पादौ द्वौ च समाकुञ्च्य न्यस्य सिंहासनोर्ध्वतः ॥ १४ ॥

प्रसार्य हस्तौ द्वौ जान्वोस्तयोरूर्ध्वे निधाय च ।
वस्त्रेण चोरुमाबध्य चासीनं वाऽथ कारयेत् ॥ १५ ॥

भृगुपुण्यौ च पूजार्थं पूजकस्थानमाश्रितौ ।
भृगुश्च रक्तवर्णाभः श्वेताभः पुण्य उच्यते ॥ १६ ॥

ब्रह्मेशावपि वन्दन्तौ दक्षिणोत्तरयोः क्रमात् ।
चतुर्भुजसमायुक्तं नवतालक्रमेण वै ॥ १७ ॥

तत्तद्वर्णसमायुक्तं तत्तच्चिह्नयुतं तथा ।
वाहनं सामवेदं च प्रमुखे संप्रकल्पयेत् ॥ १८ ॥

साम श्यामनिभं कुर्यात्सर्वाभरणभूषितम् ।
भूतीशं नाम गन्धर्वं शेषकास्थानमाश्रितम् ॥ १९ ॥

कारयेद्रक्तवर्णाभं सर्वाभरणभूषितम् ।
श्रीभूमिभ्यां युतं वाऽपि विना वा कारयेद्धरम् ॥ २० ॥

स्थितं वाऽपि समासीनं नारसिंहं समर्चयेत् ।
एवं गिरिज उद्दिष्टः स्थूणजस्संप्रवक्ष्यते ॥ २१ ॥

ततः काले प्रयाते तु हिरण्याख्योऽसुरः पुरा ।
निर्दैवत्यंवरादेव हिरण्याख्यस्तु दानवः ॥ २२ ॥

देवानृषीन्मनुष्यांश्च सदा सर्वानपीडयत् ।
तद्दैत्यस्य वधं कर्तुं क्रोधाविष्टो महाबलः ॥ २३ ॥

स्थूणान्तरप्रविष्टस्सन्नारसिंहवपुर्धभूत् ।
स्थूणजं नारसिंहं च स्थापयेज्जयसिद्धये ॥ २४ ॥

सर्वभीत्यशुभानां च रोगाणां नाशनाय च ।
महापद्मविमाने वा स्वस्तिके भद्रकेऽथवा ॥ २५ ॥

दशतालेन मानेन समासीनं च कारयेत् ।
वामपादं समाकुञ्च्य दक्षिणं संप्रसार्य च ॥ २६ ॥

चतुर्भुजधरं देवं शङ्खचक्रधरं वरम् ।
हस्तं तु दक्षिणं पूर्वं कुर्याद्दानकरं तथा ॥ २७ ॥

वामहस्तं प्रसार्यैव तदूरौ च सुसंन्यसेत् ।
सट्टास्कन्दनसंयुक्तं तीक्ष्णदंष्ट्रं भयानकम् ॥ २८ ॥

शङ्खकुन्देन्दुधवले सर्वाभरणभूषितम् ।
सिंहासने समासीनमुपधानसमायुते ॥ २९ ॥

ब्रह्मेशौ कोपशान्त्यर्थं वन्दन्तौ तौ चतुर्भुजौ ।
कुर्यान्नवार्धतालेन प्राञ्जलीकृत्य सुस्थितौ ॥ ३० ॥

कुण्डिकामक्षमालां च धरन्तं च पितामहम् ।
मृगं च परशुं पाणौ धरन्तं शङ्करं तथा ॥ ३१ ॥

दक्षिणोत्तरयोर्द्वौ च कारयेत विधानतः ।
यज्ञतीर्थौ समाख्यातौ पूजकौ तु समाचरेत् ॥ ३२ ॥

प्रह्लादं दक्षिणे कुर्यात्प्राञ्जलीकृत्य सुस्थितम् ।
उत्तरे लोकपालांश्च भित्तौ देवप्रणामकान् ॥ ३३ ॥

नारसिंहमिदं रूपं पश्चात्स्थापनमुच्यते ।
यद्यद् ध्रुवस्य रूपं तु तत्तद्रूपं तु कौतुकम् ॥ ३४ ॥

सर्वं कृत्वा विधानेन प्रतिष्ठां सम्यगाचरेत् ।
नारसिंहप्रतिष्ठायामग्नावाहवनीयके ॥ ३५ ॥

हौत्रं तत्र प्रशंस्यैव मूर्त्यावाहनमाचरेत् ।
नारसिंहं तपोनाथं हरिं विष्णुं महाबलम् ॥ ३६ ॥

भक्तवत्सलमित्युक्त्वा नारसिंहं समाह्वयेत् ।
श्रियं महीं च पूर्वोक्तौ भृगुपुण्यौ तथैव च ॥ ३७ ॥

ब्रह्मेशानौ समावाह्य धात्रादीन् द्वारपालकान् ।
समं शान्तं सुखं चेति गुरुं सर्वमुदारधीः ॥ ३८ ॥

भूतेशं दिव्यराजानं विष्णुभक्तं महाबलम् ।
इत्येवमुक्त्वा चावाह्य निरूप्याज्याहुतीर्यजेत् ॥ ३९ ॥

योवा नृसिंह इत्युक्त्वा शतमष्टाधिकं यजेत् ।
अर्चनं च तथा मन्त्रैश्शेषं पूर्ववदाचरेत् ॥ ४० ॥

नारसिंहो हरिर्यस्मात्प्रतिष्ठामर्चनादिकम् ।
स्नपनं चोत्सवं चापि सर्वं पूर्ववदाचरेत् ॥ ४१ ॥

वैरोचनसुतोऽप्युग्रो बली च बलिनां वरः ।
सर्वान्देवांश्च जित्वैव देवलोकमुपाव्रजत् ॥ ४२ ॥

देवानिन्द्रादिकांश्चैव निर्वीर्यानकरोद्बलात् ।
तद्बलस्यापहारार्थं जातोऽयं कश्यपस्य तु ॥ ४३ ॥

हरिर्वामनरूपेण छत्री दण्डी च वेदवित् ।
वर्तमाने महायज्ञे बलेर्वैरोचनस्य वै ॥ ४४ ॥

तद्यागशालां संप्राप्य वटुरूपस्सुरेश्वरः ।
कुं देहि त्रिपदं मह्यमित्युक्त्वा तमयाचत ॥ ४५ ॥

बलिश्च तस्मै त्रिपदं प्रादात्तोयेन वै ततः ।
हस्ते तोये पतत्याशु भद्ररूपमवाप्य सः ॥ ४६ ॥

त्रिलोके त्रिपदन्यासात्सर्वलोकानुपादधे ।
देवैस्त्रिविक्रमं रूपं सर्वलोकेषु संदधे ॥ ४७ ॥

त्रिविक्रमस्त्रिधा प्रोक्तः प्रथमश्च द्वितीयकः ।
तृतीयश्चेति तद्रूपं यथेष्टं कारयेद्बुधः ॥ ४८ ॥

सोमच्छन्दविमाने वा दीर्घशालाविमानके ।
कूटे वा गोपुराकारे स्थापनं सम्यगाचरेत् ॥ ४९ ॥

दशतालेन मानेन चाष्टहस्तसमन्वितम् ।
चतुर्भुजं वा देवेशं श्यामलाङ्गं च कारयेत् ॥ ५० ॥

गदाचक्रासिशक्तीश्च शरं शङ्खं च शार्ङ्गकम् ।
हस्तैर्धारयमाणं तु महारूपधरं हरिम् ॥ ५१ ॥

वामपादं प्रसार्यैव दक्षिणेन च सुस्थितम् ।
सर्वाभरणसंयुक्तं हर्षवेगसमन्वितम् ॥ ५२ ॥

एवमष्टभुजं कुर्यादथ वक्ष्ये चतुर्भुजम् ।
चतुर्भुजं वा हस्ताभ्यां शङ्खचक्रधरं परम् ॥ ५३ ॥

हस्तं दक्षिणमादानपरं चान्यं प्रसारितम् ।
स्थितं च दक्षिणं पादं वाममूर्ध्वे प्रसारितम् ॥ ५४ ॥

तत्प्रसारितपादोर्ध्वे हस्तं सम्यक्प्रसारितम् ।
इन्द्रं छत्रधरं सम्यगाकाशे तु प्रकल्पयेत् ॥ ५५ ॥

पार्श्वयोश्च यमं चापि वरुणं पूजकौ तथा ।
जानुमात्रोद्धृते पादे प्रथमस्त्वभिधीयते ॥ ५६ ॥

नाभिमात्रोद्धृते पादे द्वितीयं परिचक्षते ।
पादे ललाटमात्रे तु तृतीयं तु त्रिविक्रमम् ॥ ५७ ॥

उक्तेष्वेतेषु रूपेषु रूपमिष्टं प्रकल्पयेत् ।
त्रिविक्रमस्य ब्रह्माणमूर्ध्वपादं प्रगृह्य च ॥ ५८ ॥

प्रक्षालनपरं कुर्यात् स्रोतोगङ्गां विहायसि ।
प्राञ्जलीकृतहस्तं च नाभेरूर्ध्वशरीरगम् ॥ ५९ ॥

तस्य पादोर्ध्वतः कुर्यान्नमुचिं भ्रममाणकम् ।
स्थितपादं तु वामे च शुक्रं विघ्नकरं तथा ॥ ६० ॥

तदूर्ध्वे गरुडं कुर्याच्छुक्रं मुष्टिप्रहारकम् ।
दक्षिणे तु स्थितं कुर्याद्बटुरूपं तु वामनम् ॥ ६१ ॥

छत्रदण्डधरं पुण्यं शिखाकौपीनवाससम् ।
पार्श्वे बलिं च दातारमञ्जलिभ्यां घटोदकम् ॥ ६२ ॥

सर्वाभरणसंयुक्तं हर्षयुक्तं समाचरेत् ।
नीलाभं जाम्बवन्तं च कारयेद्वानराकृतिम् ॥ ६३ ॥

इन्द्रं श्यामनिभं कुर्याद्यममञ्जनसन्निभम् ।
वरुणं श्यामवर्णं तमादित्यं चाग्निसन्निभम् ॥ ६४ ॥

श्वेतं निशाकरं कुर्याद्ब्रह्माणं पीतवर्णकम् ।
गङ्गां तु श्वेतवर्णाभां नमुचिं श्याममाचरेत् ॥ ६५ ॥

शुक्रं शुक्लनिभं कुर्याद्गरुडं पञ्चवर्णकम् ।
वामनं च तथा श्यामं बलिं कनकसन्निभम् ॥ ६६ ॥

एवं त्रिविधरूपं तु स्वेच्छया कारयेद्बुधः ।
त्रिविक्रमप्रतिष्ठायामन्वाहार्याग्निकुण्डके ॥ ६७ ॥

हौत्रं प्रशंस्य तत्काले मूर्त्यावाहनमाचरेत् ।
त्रिविक्रमं त्रिलोकेशं विष्णुं सर्वधरं त्विति ॥ ६८ ॥

वैकुण्ठं चेति चावाह्य निरूप्याज्याहुतीर्यजेत् ।
वामनं वरदं विष्णुं काश्यपं चादितिप्रियम् ॥ ६९ ॥

अन्येषामपि देवानां तन्मूर्त्यावाहनं चरेत् ।
तथाऽऽकाशस्थदेवानां तत्तद्देवाननुस्मरन् ॥ ७० ॥

तत्तद्देशे तथा पीठे तदुद्दिश्य समर्चयेत् ।
यो वा त्रिमूर्तिरित्युक्त्वा शतमष्टाधिकं यजेत् ॥ ७१ ॥

स्थापनादीनि सर्वाणि विष्णुसूक्तेन कारयेत् ।
अनुक्तमत्र सर्वं तु पूर्वोक्तेन विधानतः ॥ ७२ ॥

प्रतिष्ठामर्चनादीनि स्नपनं चोत्सवं तथा ।
कारयेद्भक्तितः सर्वं हरेस्त्रैविक्रमस्य तु ॥ ७३ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे नारसिंहत्रिविक्रम-
प्रतिष्ठाविधिर्नामैकोनषष्टितमोऽध्यायः ॥

---

## षष्टितमोऽध्यायः ॥

ततः कालेऽप्यतीते तु भूमिर्भारावपीडिता ।
दुरात्मभिश्च बहुभी राजभिर्धरणीश्वरैः ॥ १ ॥

तद्वधाय कृतोद्योगो जमदग्निसुतो हरिः ।
भूत्वाऽवतीर्णो लोकेऽस्मिन् भारनिर्हरणाय वै ॥ २ ॥

परशुं च गृहीत्वैव नृपान् सर्वान् प्रगृह्य च ।
जघान किल सर्वांश्च रामो भीमपराक्रमः ॥ ३ ॥

देवं परशुरामं तं स्थापयेच्छत्रुनाशनम् ।
मालाकारविमाने वाऽप्यङ्गनाकृतिकेऽपि वा ॥ ४ ॥

दशतालेन तं रामं भुजद्वयसमायुतम् ।
दक्षिणे परशुं हस्ते वाममुद्देश्यकं तथा ॥ ५ ॥

रक्तवर्णं प्रकुर्वीत जटामकुटभूषितम् ।
नीलाम्बरधरं देवमेकवीरक्रमेण च ॥ ६ ॥

आसीनं वा स्थितं वाऽपि कारयेत विधानतः ।
तद्रूपं कौतुकं कुर्याद्देवी तत्परितो लिखेत् ॥ ७ ॥

अन्वाहार्ये प्रधानाग्नौ तन्मूर्त्यावाहनं चरेत् ।
राम ऋषिसुतं चेति विष्णुं परशुपाणिनम् ॥ ८ ॥

इत्येवमुक्त्वा चावाह्य निरूप्याज्याहुतीर्यजेत् ।
विष्णुर्वरिष्ठ इत्युक्त्वा सप्तत्येकोत्तरं यजेत् ॥ ९ ॥

शिष्टानि सर्वकर्माणि पूर्ववत्सर्वमाचरेत् ।
प्रतिष्ठामर्चनादीनि स्नपनं चोत्सवं तथा ॥ १० ॥

पूर्वोक्तेन विधानेन सर्वमन्यच्च कारयेत् ।
अथवा प्रादुर्भावेषु रामादिषु च पञ्चसु ॥ ११ ॥

सभ्याग्निं पौण्डरीकाग्निं विनाऽन्यांश्चतुरः क्रमात् ।
अग्नीनाहवनीयादीन् कल्पयेदिति केचन ॥ १२ ॥

राक्षसैर्बहुभिर्मुख्यै रावणादिमहाबलैः ।
देवाः संपीडितास्सर्वे मुनयश्चाखिलास्तथा ॥ १३ ॥

त्रिदिवैर्मुनिभिस्सर्वैः संस्तुतो हरिरव्ययः ।
तद्वधाय कृतोद्योगो मानुषं रूपमास्थितः ॥ १४ ॥

दशरथस्य सुतो भूत्वा सोऽवधीत्तांस्तु राक्षसान् ।
हत्वा दाशरथी रामस्सर्वलोकमपालयत् ॥ १५ ॥

आलये मण्डपे वाऽपि कूटे वाऽपि तथैव च ।
देवं रामं च रक्षार्थं स्थापयेच्च विधानतः ॥ १६ ॥

सार्धाष्टतालमानेन रघुरामं प्रकल्पयेत् ।
द्विभुजं श्यामवर्णं च त्रिभङ्गेन च सुस्थितम् ॥ १७ ॥

शरं दक्षिणहस्तेन चापं वामेन धारिणम् ।
सर्वाभरणसंयुक्तं किरीटमकुटान्वितम् ॥ १८ ॥

पीतवर्णां तथा चैव सर्वाभरणभूषिताम् ।
पद्मं वामेन हस्तेन गृहीत्वा दक्षिणं करम् ॥ १९ ॥

प्रसार्यैव स्थितां देवीं सीतां दक्षिणतस्तथा ।
वामे च लक्ष्मणं कुर्यादष्टतालेन मानतः ॥ २० ॥

कारयेत्तं शरं चापं धारयन्तं स्थितं तथा ।
सर्वाभरणसंयुक्तं रुक्मवर्णं च लक्ष्मणम् ॥ २१ ॥

पिङ्गलाभं हनूमन्तं विज्ञापनपरं कपिम् ।
दक्षिणेन करेणास्यं पश्चादन्येन वाससम् ॥ २२ ॥

ऊरुमध्येऽवकुण्ठ्यैव दीनमूर्ध्वाननं स्थितम् ।
दक्षिणे कपिराजं वा कृत्वा तद्रूपमर्चयेत् ॥ २३ ॥

एवं सायुधमार्गं तु वक्ष्ये तत्र निरायुधम् ।
सिंहासने सुखासीनं देवं देवीं यथाविधि ॥ २४ ॥

वामतो लक्ष्मणं कुर्यात्प्राञ्जलीकृत्य सुस्थितम् ।
दक्षिणे कपिराजं तं मार्ताण्डाभं च सुस्थितम् ॥ २५ ॥

स्थितं च कौतुकं कुर्यादासीनं वाऽपि कारयेत् ।
सायुधे सायुधं तद्वत्कौतुकं च समाचरेत् ॥ २६ ॥

अतः परं प्रवक्ष्यामि स्थापनारम्भमुत्तमम् ।
एकस्मिन् काञ्चने कुम्भे त्रयाणां ध्यानमाचरेत् ॥ २७ ॥

तस्य देवस्य देव्याश्च शयनं त्वेकमुच्यते ।
तद्वेद्यां लक्ष्मणस्यापि शयनं तु पृथग्भवेत् ॥ २८ ॥

दक्षिणाग्नौ प्रधाने तु हौत्रशंसनमाचरेत् ।
रामं दाशरथिं विष्णुं काकुत्स्थमिति चाह्वयेत् ॥ २९ ॥

रामानुजं च सौमित्रिं लक्ष्मणं लक्ष्मीवर्धनम् ।
सीतामयोनिजां चेति लक्ष्मीं वैदेहीमित्यपि ॥ ३० ॥

कपिराजं हनूमन्तं शब्दराशिं महामतिम् ।
इत्यावाह्य विधानेन निरूप्याज्याहुतीर्यजेत् ॥ ३१ ॥

रायामीशेति मन्त्रेण शतमष्टोत्तरं यजेत् ।
शेषाणि सर्वकार्याणि पूर्ववत्कारयेद्बुधः ॥ ३२ ॥

हरिरेव भवेद्रामस्तस्मात्सर्वं हरेरिव ।
प्रतिष्ठामर्चनादीनि स्नपनं चोत्सवं तथा ॥ ३३ ॥

पूर्वोक्तेन विधानेन सर्वमन्यं च कारयेत् ।
एतस्य पौण्डरीकाग्निं सभ्याग्निं च विना क्रमात् ॥ ३४ ॥

अग्नीनाहवनीयादीन् कल्पयेदिति केचन ।
मधुमासे च नक्षत्रे पूर्वपक्षे पुनर्वसौ ॥ ३५ ॥

मध्याह्ने कर्कटे लग्ने जातो रामः स्वयं हरिः ।
सा जयन्तीति विख्याता तस्यां रामस्य भक्तितः ॥ ३६ ॥

सीतालक्ष्मणसंयुक्तं सर्वालङ्कारसंयुतम् ।
यानमारोप्य तद्ग्रामं कारयेत प्रदक्षिणम् ॥ ३७ ॥

देवालयं प्रविश्यैव स्थापयित्वा सहैव तान् ।
महाहविः प्रभूतं वा देवेशाय निवेदयेत् ॥ ३८ ॥

रामस्य देववच्चैव राजवच्च तथैव च ।
उपचारान् विशेषेण कारयेदिति शासनम् ॥ ३९ ॥

सीताया लक्ष्मणस्यापि पृथक् स्यात्स्थापना यदि ।
सीतायाश्च प्रतिष्ठायां लक्ष्मीवत्सर्वमाचरेत् ॥ ४० ॥

लक्ष्मणस्य प्रतिष्ठायां रामवत्सर्वमाचरेत् ।
हरिर्यथैव रामोऽभूत् श्रीश्च सीताऽभवत्तथा ॥ ४१ ॥

पृथक् प्रतिष्ठा श्रीदेव्याः पूर्वं प्रोक्ता तथैव च ।
पृथक् प्रतिष्ठा सीतायास्तथा सर्वं समाचरेत् ॥ ४२ ॥

तस्माद्रामस्य तस्यांशो लक्ष्मणश्चेद्भवेत्ततः ।
हरेरंशांशभागोऽयं लक्ष्मणश्च प्रकीर्तितः ॥ ४३ ॥

विशेषमत्र वक्ष्यामि शयने राघवस्य तु ।
प्राङ्मुख्याश्चैव सीताया ऊरौ (विन्यस्य) मस्तकम् ॥ ४४ ॥

तत्काले लक्ष्मण देवं पाद (संवाहने रतम्) ।
हसन्मुखं राघवस्य पीडयन्तं पदाम्बुजौ ॥ ४५ ॥

नित्ये नैमित्तिके काम्ये स्नपने चोत्सवे तथा ।
शयनं यत्र संप्रोक्तं तत्रैवं विधिरुच्यते ॥ ४६ ॥

मूर्तिमन्त्रो विशेषस्तु सर्वमन्यत्समं भवेत् ।
वायोरंशात्कपिमुख्यो हनूमानभवत्ततः ॥ ४७ ॥

हनूमतः प्रतिष्ठां तु वायोरिव समाचरेत् ।
तृतीयं राममप्येवं यदुश्रेष्ठं महाबलम् ॥ ४८ ॥

बलभद्रं विदुः सोऽपि दैत्यानां वधहेतुना ।
भारावतरणार्थाय भुवो रामस्तथैव च ॥ ४९ ॥

कृष्णोऽपि वसुदेवस्य सुतो भूत्वाऽवतीर्य च ।
हत्वा नरककंसादीन् सर्वान् लोकानपालयत् ॥ ५० ॥

एवं हलधरं रामं तर्तुं संसारसागरम् ।
सोमच्छन्दविमाने तु हस्तिपृष्ठेऽथवा पुनः ॥ ५१ ॥

एकबेरविधानेन कृष्णस्यार्धासने तु वा ।
दशतालेन मानेन श्वेताद्रिशिखरोपमम् ॥ ५२ ॥

द्विभुजं च तथा कुर्यान्मुसलं दक्षिणेन तु ।
हलं वामेन हस्तेन धारयन्तं यथानतम् ॥ ५३ ॥

कुर्यात्सायुधमेवं तु वक्ष्याम्यथ निरायुधम् ।
प्रसार्य दक्षिणं पादं वामं कुञ्चितमाचरेत् ॥ ५४ ॥

सव्यं चाभयहस्तं तु वाममूरौ समाचरेत् ।
तथैव रेवतीं कुर्यान्नीलोत्पलसमप्रभाम् ॥ ५५ ॥

पद्मं दक्षिणहस्तेन गृहीत्वाऽन्यं तथैव च ।
ऊरौ विन्यस्य चासीनां रेवतीं च शुभाननाम् ॥ ५६ ॥

सर्वाभरणसंयुक्तं देवं देवीसमन्वितम् ।
एवं तु कौतुकं कृत्वा स्थापनं सम्यगाचरेत् ॥ ५७ ॥

अग्नावाहवनीये तु हौत्रशंसनमाचरेत् ।
रामं यदुवरं विष्णुं हलायुधमिति क्रमात् ॥ ५८ ॥

रेवतीमिन्दिरां चेति लक्ष्मीं रामप्रियामिति ।
आवाहनादि कृत्वा तु क्ष्मामेकां तु शतं यजेत् ॥ ५९ ॥

हरेरंशाद्भवेद्रामस्तस्मात्सर्वं हरेरिव ।
प्रतिष्ठामर्चनादीनि स्नपनं चोत्सवं तथा ॥ ६० ॥

पूर्वोक्तेन विधानेन कारयेदिति शासनम् ।
अस्यापि पौण्डरीकाग्निं सभ्याग्निं च विना क्रमात् ॥ ६१ ॥

अग्नीनाहवनीयादीन् कारयेदिति केचन ।
सर्वकामं यदीच्छेत्तु कृष्णं सम्यक्समाचरेत् ॥ ६२ ॥

कुम्भाकारविमाने वा कूटे वा गोपुराकृतौ ।
नवतालेन मानेन कृष्णं सम्यक्समाचरेत् ॥ ६३ ॥

श्रीधरं श्यामलाङ्गं च द्विभुजं रक्तवाससम् ।
क्रीडायष्टिधरं कुर्याद्दक्षिणेनैव पाणिना ॥ ६४ ॥

वाममुत्क्रीडनं कृत्वा लीलयैव च सुस्थितम् ।
सर्वाभरणसंयुक्तं सुन्दरं सौम्यलोचनम् ॥ ६५ ॥

रुक्मिणीं दक्षिणे देवीं सत्यभामां च वामतः ।
रक्तपीतनिभे देव्यौ कृष्णं पीताम्बरावृतम् ॥ ६६ ॥

सर्वाभरणसंयुक्तं बाहुमानेन कारयेत् ।
दक्षिणे रुक्मिणीं वाऽथ भूमिं कुर्याच्च वामके ॥ ६७ ॥

वामपार्श्वे स्थितं कुर्याद्गरुडं प्राञ्जलीकृतम् ।
ध्रुवबेरानुरूपेण कौतुकं च समाचरेत् ॥ ६८ ॥

सिंहासने सुखासीनं देवीभ्यां च सहासने ।
पूर्वोक्तेन विधानेन सर्वं कृष्णस्य चाचरेत् ॥ ६९ ॥

नवनीतनटं वाऽथ तथा कालियमर्दनम् ।
पार्थसारथिरूपं वा बिम्बं सम्यक्च कारयेत् ॥ ७० ॥

नृत्यन्तं बालरूपं च सर्वाभरणभूषितम् ।
तथाऽम्बराञ्चलेनैव ग्रन्थियुक्तेन संयुतम् ॥ ७१ ॥

कुञ्चितं दक्षिणं पादं किञ्चिदुद्धृत्य वै पुनः ।
किञ्चित्कुञ्चितवामेन स्थित्वा नृत्यन्तमेव तम् ॥ ७२ ॥

अभयं दक्षिणं हस्तं नवनीतयुतं तु वा ।
वामं प्रसार्य चोत्तानं नवनीतनटं तु वा ॥ ७३ ॥

गोपीं च वामतः कुर्यान्मथ्नन्तीं च महादधि ।
फणानां पञ्चसंयुक्तं कालियस्य शिरोपरि ॥ ७४ ॥

नृत्यरूपं तथा कुर्यात्पुच्छं वामकरे धृतम् ।
एकं चाभयहस्तं च सर्वाभरणभूषितम् ॥ ७५ ॥

पादपार्श्वे तथा पत्नीं नागचूलिकमस्तकाम् ।
प्राञ्जलीकृत्य तां कुर्याद्ग्रिनैवानम्रमूर्धिकाम् ॥ ७६ ॥

पार्थं गाण्डीवसहितं शततूणीरसंयुतम् ।
रथस्थितं तथा कुर्यात्किरीटाङ्गदभूषितम् ॥ ७७ ॥

सव्यमारोप्य हस्तं तु वीक्ष्य देवस्य चाननम् ।
श्यामवर्णं च तं कुर्यात्केतुवानरभूषितम् ॥ ७८ ॥

रथे मुरलिपार्श्वे तु कृष्णमुद्बद्धकुन्तलम् ।
शङ्खं वामकरे कुर्याद्दक्षिणे पाशमेव च ॥ ७९ ॥

फल्गुनस्य मुखं वीक्ष्य किञ्चित्सस्मितहर्षितः ।
एवंरूपं च कृत्वैव तद्रूपं कौतुकं चरेत् ॥ ८० ॥

चतुर्भुजं वा कृत्वा तु स्थापनारम्भमाचरेत् ।
कृष्णरूपमसंख्यातं संख्या वक्तुं न शक्यते ॥ ८१ ॥

स्वेच्छारूपं तु कृत्वा तु तद्रूपे तु समर्चयेत् ।
पौण्डरीके प्रधानाग्नौ हौत्रशंसनमाचरेत् ॥ ८२ ॥

कृष्णं नारायणं पुण्यं त्रिदशाधिपमित्यपि ।
एवमेव विधानेन कृष्णस्यावाहनं स्मृतम् ॥ ८३ ॥

रुक्मिणीं सुन्दरीं देवीं रमामिति तथैव च ।
सत्यभामां सतीं चैव सन्नतीं च क्षमामिति ॥ ८४ ॥

इत्येवमुक्त्वा चावाह्य निरूप्याज्याहुतीर्यजेत् ।
सत्यस्सत्यस्थ इत्युक्त्वा शतमष्टाधिकं यजेत् ॥ ८५ ॥

स्थापनादीनि सर्वाणि पूर्वोक्तेनैव कारयेत् ।
हरिः कृष्णो भवेद्यस्मात्तस्मात्सर्वं हरेरिव ॥ ८६ ॥

प्रतिष्ठाद्यर्चनादीनि स्नपनं चोत्सवं तथा ।
पूर्वोक्तेन विधानेन सर्वमन्यं च कारयेत् ॥ ८७ ॥

अस्यापि पौण्डरीकाग्निं सभ्याग्निं च विना क्रमात् ।
अग्नीनाहवनीयादीन् कल्पयेदिति केचन ॥ ८८ ॥

श्रावणे मासि तस्मिंश्च कृष्णपक्षे विशेषतः ।
अष्टमी रोहिणीयुक्ता जयन्तीति प्रकीर्तिता ॥ ८९ ॥

तत्र स्नात्वोपवासं च कृत्वा कृष्णं च भक्तितः ।
रुक्मिणीसत्यभामाभ्यामलङ्कारैः समायुतम् ॥ ९० ॥

ग्रामप्रदक्षिणं तत्र कारयित्वा यथोचितम् ।
स्नापयित्वा च देवीभ्यामर्चयित्वा यथाक्रमम् ॥ ९१ ॥

महाहविः प्रभूतं वा देवेशाय निवेदयेत् ।
रुक्मिण्यास्सत्यभामायाः पृथक् चेत्स्थापनं भवेत् ॥ ९२ ॥

हरिर्यथैव कृष्णोऽभूद्रुक्मिणी श्रीस्तथाऽभवत् ।
मही च सत्यभामाभूद्देव्यौ देवेन ते ततः ॥ ९३ ॥

पृथक् प्रतिष्ठा श्रीदेव्या यथा प्रोक्ता तथैव च ।
रुक्मिण्यास्स्थापनायां च सर्वं सम्यक् समाचरेत् ॥ ९४ ॥

महीदेव्या यथा प्रोक्ता स्थापनं तु पृथक् तथा ।
सत्यभामाप्रतिष्ठायां सर्वं पूर्ववदाचरेत् ॥ ९५ ॥

अत्रापि मूर्तिमन्त्रैस्तु विशेषोऽन्यत्समं भवेत् ।
युगान्तसमये विष्णुः कल्की चैव भविष्यति ॥ ९६ ॥

खड्गखेटकहस्तस्तु म्लेच्छादीन् स हनिष्यति ।
संहारात्मा स सर्वांश्च दुर्विनीतान् मदोद्धतान् ॥ ९७ ॥

पुनरेकार्णवं कृत्वा वटपत्रे शयिष्यति ।
स्थापयेत्कल्किनं विष्णुमाल्यादिविधिस्तथा ॥ ९८ ॥

पौण्डरीके प्रधानाग्नौ हौत्रशंसनमाचरेत् ।
कल्किनं वररूपं च विष्णुं संहारकात्मकम् ॥ ९९ ॥

इत्येवमुक्त्वा चावाह्य निरूप्याज्याहुतीर्यजेत् ।
धूर्णो वहन्तामित्युक्त्वा शतमष्टाधिकं यजेत् ॥ १०० ॥
प्रतिष्ठामर्चनादीनि पूर्ववत्कारयेद्बुधः ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे परशुरामादिकल्क्यन्त-
प्रतिष्ठाविधिर्नाम षष्टितमोऽध्यायः

## एकषष्टितमोऽध्यायः

अतःपरं प्रवक्ष्यामि वासुदेवविधिं परम् ।
वासुदेवो द्विधा भूतः मानुष्यो दैविकस्त्विति ॥ १ ॥

मानुष्यमद्य वक्ष्यामि दैविकं तदनन्तरम् ।
मानुष्यं परमात्मानं द्विभुजं शङ्खचक्रिणम् ॥ २ ॥

श्यामलाङ्गं च तं कुर्यात्सर्वाभरणभूषितम् ।
रुक्मिणीं श्यामलाङ्गां च रक्तवस्त्रां च दक्षिणे ॥ ३ ॥

पद्मं धृत्वा करे वामे प्रसार्यैव स्थितां शुभाम् ।
दक्षिणे बलभद्रं तु हलं मुसलमायुधम् ॥ ४ ॥

सर्वाभरणसंयुक्तं श्वेतं नीलाम्बरावृतम् ।
तस्य दक्षिणपार्श्वे तु प्रद्युम्नं रक्तसन्निभम् ॥ ५ ॥

पीतकौशेयवसनं किरीटं दिव्यभूषणम् ।
असिं दीर्घक्षुरीयुक्तं वामकट्यवलम्बितम् ॥ ६ ॥

वामपार्श्वेऽनिरुद्धं च प्रवालाग्निसमप्रभम् ।
पुष्पाम्बरधरं कुर्यात्कटकं खड्गमायतम् ॥ ७ ॥

पार्श्वे साम्बं च कृत्वैव नीलाम्बुदसमप्रभम् ।
श्वेताम्बरधरं कुर्याद्दण्डदानकरं तथा ॥ ८ ॥

ब्रह्माणं दक्षिणे कुर्याच्चतुर्भुजसमन्वितम् ।
पूर्वोक्तेनैव कृत्वा तु दशतालेन मानतः ॥ ९ ॥

गरुडं चोत्तरे कुर्यान्नवतालेन मानतः ।
तद्रूपं कौतुकं कुर्यात्सर्वेषां च तथैव च ॥ १० ॥

मध्ये चतुर्भुजं विष्णुमेवं कौतुकमेव वा ।
एवं वै मानुषं रूपं गोपुरे दीर्घशालके ॥ ११ ॥

दैविकं वासुदेवं च प्रवक्ष्यामि यथाक्रमम् ।
सोमच्छन्दविमाने वा ब्रह्मवृत्तेऽथवा पुनः ॥ १२ ॥

चतुर्भुजधरं देवं शङ्खचक्रधरं परम् ।
अभयं दक्षिणे हस्ते वामं कट्यवलम्बितम् ॥ १३ ॥

किरीटादिविभूषाढ्यं भूषणैरपि भूषितम् ।
रक्ताम्बरधरं देवं दशतालेन मानतः ॥ १४ ॥

श्रीभूम्यौ पार्श्वयोर्देव्यौ पूर्ववत्कारयेद्बुधः ।
पूर्वोक्तान् बलभद्रादीन् सायुधान् वा निरायुधान् ॥ १५ ॥

तत्तद्देव्या समायुक्तान् विना वा सम्यगाचरेत् ।
रेवतीं दक्षिणे कुर्यात् बलभद्रस्य पार्श्वतः ॥ १६ ॥

रोहिणीं नीलवर्णां च प्रद्युम्नस्यैव पार्श्वतः ।
अनिरुद्धस्य पार्श्वे तु रामां श्यामां तथैव च ॥ १७ ॥

तस्य साम्बस्य पार्श्वे तु पीतामिन्दुकरीमपि ।
गृहीत्वा पुष्पमेकेन हस्तमन्यं प्रसार्य च ॥ १८ ॥

किरीटाभरणैर्युक्ता देवीस्सर्वांश्च कारयेत् ।
रुक्मिणीं नीलवर्णां च प्रद्युम्नं चैव पार्श्वतः ॥ १९ ॥

अनिरुद्धश्चैव पार्श्वे रामश्चापि तथैव च ।
तस्य रामस्य पार्श्वे तु देवान् सर्वांश्च कारयेत् ॥ २० ॥

एवं दैविकमार्गं तु स्थापनारम्भमाचरेत् ।
पूर्ववत्सर्वहोमेषु जुहुयाच्च विधानतः ॥ २१ ॥

ब्रह्मणः पौण्डरीकाग्निं गरुडस्याहवनीयकम् ।
सभ्ये विष्णुं समुद्दिश्य हौत्रशंसनमाचरेत् ॥ २२ ॥

वासुदेवं यदुवरं विष्णुं च पुरुषोत्तमम् ।
रुक्मिणीं सुन्दरीं देवीं रमामिति समाह्वयेत् ॥ २३ ॥

रामं यदुवरं वीरं हलायुधमिति क्रमात् ।
प्रद्युम्नं च सुरूपाक्षं मन्त्रराशिं महाबलम् ॥ २४ ॥

अनिरुद्धं महान्तं च वैराग्यमिति च क्रमात् ।
सर्वतेजोमयं चैवमनिरुद्धं समाह्वयेत् ॥ २५ ॥

साम्बं सर्वमुखं चेति समुद्रं सागरं तथा ।
ब्रह्माणं गरुडं चेति नाम्ना पूर्ववदाह्वयेत् ॥ २६ ॥

एवं मानुषके प्रोक्तं दैविके तु प्रवक्ष्यते ।
विष्ण्वादिमूर्तिभिर्विष्णोः श्रियो मह्यास्तथैव च ॥ २७ ॥

पूर्ववद्बलभद्रादिदेवतानां विशेषतः ।
निर्वापादीनि कृत्वैव पूर्ववज्जुहुयाद्बुधः ॥ २८ ॥

विशेषं चात्र वक्ष्यामि शृणुध्वं मुनिसत्तमाः ।
सभ्ये च वैष्णवं सूक्तं सर्वहोमे च पौरुषम् ॥ २९ ॥

दक्षिणे विष्णुसूक्तं च गार्हपत्ये तथैव च ।
एकाक्षरादिकं सर्वं त्वावसथ्ये तथैव च ॥ ३० ॥

गायत्रीं वैष्णवीं सम्यग् ब्रह्महोमे तथैव च ।
ब्राह्मं गारुडहोमं च गारुडं च तथा यजेत् ॥ ३१ ॥

तत्तद्धोमे तत्तन्मन्त्रैरेकविंशतिकं तथा ।
तद्देवीमन्त्रसंयुक्तं यजेद्देवं विशेषतः ॥ ३२ ॥

कलशैः स्नापनं कुर्यात्तत्तद्धोमसमीपतः ।
मध्ये दक्षिणपार्श्वे तु क्रमादेवं समाचरेत् ॥ ३३ ॥

एष एव विशेषः स्यात्सर्वं पूर्ववदाचरेत् ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे दैविकमानुष्यवासुदेवप्रतिष्ठाविधिर्नामैकषष्टितमोऽध्यायः ॥

---

# द्विषष्टितमोऽध्यायः



अतःपरं प्रवक्ष्यामि चादिमूर्तिविधिक्रमम् ।
कुम्भाकारे त्रिकूटे वा नन्द्यावर्तेऽथवा पुनः ॥ १ ॥

अनन्तोत्सङ्ग आसीनं प्रवालाग्निसमप्रभम् ।
बेरायामं त्रिधा कृत्वा तत्रैकं पीठमाचरेत् ॥ २ ॥

अनन्तस्य तु संप्रोक्तास्सप्त पञ्च फणास्तु वा ।
अङ्गोपरि फणाः कृत्वा ऊर्ध्वे सञ्छादकाः क्रमात् ॥ ३ ॥

त्रिवृते सर्पदेहोर्ध्वे समासीनं हरिं परम् ।
वामपादं समाकुञ्च्य दक्षिणं संप्रसार्य च ॥ ४ ॥

शङ्खचक्रधरं कुर्यात्सर्वाभरणभूषितम् ।
सर्पदेहोर्ध्वतः पाणिं दक्षिणं संन्यसेत्तथा ॥ ५ ॥

वामं च कुञ्चितं जानुं न्यसेत्सम्यक्प्रसारितम् ।
विधिनैव समासीनमादिमूर्तिं तु कारयेत् ॥ ६ ॥

भृगुपुण्यौ तथा कुर्यात्पूजकौ स्थानमाश्रितौ ।
एवं योगासनं प्रोक्तं वक्ष्यतेऽद्य सुखासनम् ॥ ७ ॥

वामहस्तं तथा वामे जानौ सम्यक्प्रसार्य च ।
हस्तं च दक्षिणं जानौ विन्यसेद्दक्षिणे क्रमात् ॥ ८ ॥

सिंहासने सुखासीनं श्रीभूम्यावपि कारयेत् ।
पूर्वोक्तैर्लक्षणैर्युक्तं सर्वाभरणभूषितम् ॥ ९ ॥

नारसिंहवराहौ द्वौ पूजकौ तु समाचरेत् ।
नवतालक्रमेणैव तत्तद्रूपं प्रकल्पयेत् ॥ १० ॥

प्राञ्जलीकृतहस्तौ तु सर्वाभरणभूषितौ ।
एवं सुखासनं कुर्यात्स्थापनारम्भमाचरेत् ॥ ११ ॥

सभ्याग्नौ च परिस्तीर्य हौत्रं तत्र प्रशंसयेत् ।
शिष्टं तु पूर्ववत्सर्वं कारयेत विधानतः ॥ १२ ॥

पञ्चमूर्तिविधानं तु पूर्वमेव प्रचोदितम् ।
अतः परं प्रवक्ष्यामि चतुर्मूर्तिविधिक्रमम् ॥ १३ ॥

विष्णुमूर्तिं विना मूर्तीश्चतुर्मूर्तीस्तु कारयेत् ।
पूर्वोक्ते च विमाने वै यथोक्ततलसंयुते ॥ १४ ॥

आदिभूमिस्तु सैन्यस्य मध्ये वै नरसिंहकम् ।
अधः प्रागादि परितः पुरुषाद्यास्तु पूर्ववत् ॥ १५ ॥

आसीनास्सुस्थिता वापि चतुर्मूर्तीश्च कारयेत् ।
पञ्चमूर्तिर्यदि भवेदूर्ध्वे वाराह उच्यते ॥ १६ ॥

तृतीये नरसिंहस्तु चतुर्थे शयनं भवेत् ।
पञ्चमे चासनं प्रोक्तं वाराहादेस्तथासनम् ॥ १७ ॥

पुरुषाद्याश्चतुर्दिक्षु तथासीनाः स्थितास्तु वा ।
कर्तुं सप्ततलादूर्ध्वं विमानं न हि शक्यते १८ ॥

सहस्राधिष्ठितग्रामे मध्यमे पञ्चमूर्तिकम् ।
चतुर्मूर्तीस्तु वा कुर्याद्ग्रामवृद्धिकरं भवेत् ॥ १९ ॥

ग्रामादेः पश्चिमे कुर्याच्चतुर्मूर्तीस्तु वा तथा ।
एकमूर्तिस्तु वा कुर्यान्नगरादौ तथैव च ॥ २० ॥

प्रतिष्ठामर्चनादीनि पूर्ववद्विविना चरेत् ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे आदिमूर्तिविधिर्नाम द्विषष्टितमोऽध्यायः ॥

# त्रिषष्टितमोऽध्यायः

अथ गोत्रप्रवरं वक्ष्यामि । विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठ-काश्यपानां सप्तर्षीणामगस्त्याष्टमानामपत्यं गोत्रमुच्यते ।

१. अथ श्रीवत्सानां पञ्चार्षेयः प्रवरो भवति । तेषां भार्गवच्यवनाप्नुवानौर्व-जामदग्न्येति होता वदेत् ।

२. यस्कानां त्र्यार्षेयः—भार्गववैतहव्यसावेदसेति ।

३. (वाध्र्यश्वानाम्)—त्र्यार्षेयः—भार्गववाध्र्यश्वदैवोदासेति ।

४. वैन्यानाम्—त्र्यार्षेयः—भार्गववैन्यपार्थेति ।

५. शुनकानाम्—एकार्षेयः—शौनकेति ।

६. गार्त्समदानाम् एकार्षेयः—गार्त्समदेति ।

७. आङ्गिरसानाम्—त्र्यार्षेयः—आङ्गिरसायास्यगौतमेति ।

८. शरद्वन्तानाम्[1]—त्र्यार्षेयः—आङ्गिरसगौतमश[2]रद्वन्तेति ।

९. कौमण्डगौतमानाम् — पञ्चार्षेयः — आङ्गिरसौच[3]थ्यकाक्षीवतगौतम-कौमण्डेति ।

१०. [4]दीर्घतमानाम् — पञ्चार्षेयः — आङ्गिरसौचथ्यकाक्षीवतगौतमदै[5]र्घ-तमसेति ।

११. [6]कारेणुपालिनाम्—त्र्यार्षेयः—आङ्गिरसगौतमकारेणुपालेति ।

१२. औशनसगौतमानाम्—त्र्यार्षेयः—आङ्गिरसौशनसगौतमेति ।

१३. वामदेवानाम्—त्र्यार्षेयः—आङ्गिरसगौतमवामदेवेति ।

---

1. शारद्वतानाम्—पा.
2. शारद्वतेति—पा.
3. औतथ्य—पा.
4. दीर्घतमसानां. पा.
5. दीर्घतमेति.—पा.
6. कारेणपालि—पा. कारेणुपालानाम्—पा.

१४. भारद्वाजानाम्—त्र्यार्षेयः—आङ्गिरसबार्हस्पत्यभारद्वाजेति ।

१५. रौक्षाणाम् — पञ्चार्षेयः — आङ्गिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति ।

१६. गर्गाणाम्—त्र्यार्षेयः—आङ्गिरसशैन्य [1]गार्ग्येति ।

१७. विष्णुवृद्धानाम्—त्र्यार्षेयः—आङ्गिरसपौरुकुत्स[2]त्रासदस्यवेति ।

१८. [3]कण्वानाम्—त्र्यार्षेयः—आङ्गिरसाजमीढकाण्वेति ।

१९. हारीतानाम्—त्र्यार्षेयः—आङ्गिरसाम्बरीषयौवनाश्वेति ।

२०. साङ्कृत्यानाम्—त्र्यार्षेयः—आङ्गिरसगौरुवीतसाङ्कृत्येति ।

२१. राथीतराणाम्—त्र्यार्षेयः—आङ्गिरसवैरूपराथीतरेति ।

२२. मुद्गलानाम्—त्र्यार्षेयः—आङ्गिरसभार्म्यश्वमौद्गल्येति ।

२३. आत्रेयाणाम्—त्र्यार्षेयः—आत्रेयार्चनानसश्यावश्वेति ।

२४. गाविष्टराणाम्—त्र्यार्षेयः—आत्रेयार्चनानसगाविष्टरेति ।

२५. [4]वाद्भुतकानाम्—त्र्यार्षेयः—आत्रेयार्चनानसवाद्भुतकेति ।

२६. पौर्वातिथीनाम्—त्र्यार्षेयः — आत्रेयार्चनानसपौर्वातिथेति ।

२७. कश्यपानाम्—त्र्यार्षेयः—काश्यपावत्सारनैध्रुवेति ।

२८. रेफाणाम्—त्र्यार्षेयः—काश्यपावत्साररैभ्येति ।

२९. शाण्डिल्यानाम्—त्र्यार्षेयः—काश्यपावत्सारशाण्डिल्येति, काश्यपावत्सारासितेति वा, काश्यपावत्सारदैवलेति वा, शाण्डिल्यावत्सारदैवलेति वा, शाण्डिल्यासितदैवलेति वा ।

३०. लोगाक्षिकाश्यपानाम्—त्र्यार्षेयः । ते तु अहर्वासिष्ठाः नक्तंकाश्यपाः । तेषां—काश्यपावत्सारवासिष्ठेति ।

---

1. गार्गेति—पा.
2. त्रासदस्येति—पा.
3. काण्वानाम्—पा.
4. वाद्भूतकानाम्—पा.
वाग्भुतकानाम्—पा.
वाग्भूतकानाम्—पा.

३१. वासिष्ठानाम्—एकार्षेयः—वासिष्ठेति ।

३२. वासिष्ठकौण्डिन्यानाम्—त्र्यार्षेयः—वासिष्ठमैत्रावरुणकौण्डिन्येति ।

३३. औपमन्यवानाम्—त्र्यार्षेयः—वासिष्ठैन्द्रप्रमदाभरद्वसव्येति ।

३४. [1]वासिष्ठानाम्—त्र्यार्षेयः—वासिष्ठशाक्त्यपाराशर्येति ।

३५. विश्वामित्रकौशिकानाम्—त्र्यार्षेयः—विश्वामित्राष्टकलोहितेति ।

३६. (औदलानाम्)—त्र्यार्षेयः—विश्वामित्रदेवरातौदलेति ।

३७. रैवणानाम्—त्र्यार्षेयः—विश्वामित्ररौत्थकरैवणेति ।

३८. वैश्वामित्रदैवश्रवसानाम् — त्र्यार्षेयः — विश्वामित्रदैवश्रवसदैवतरसेति

३९. आजानाम्—त्र्यार्षेयः—वैश्वामित्रमाधुछन्दसाजेति ।

४०. खातानाम्—त्र्यार्षेयः—वैश्वामित्रकात्याक्षीलेति ।

४१. अघमर्षणकौशिकानाम्— त्र्यार्षेयः—विश्वामित्राघमर्षणकौशिकेति ।

४२. इन्द्रकौशिकानाम्—त्र्यार्षेयः—विश्वामित्रेन्द्रकौशिकेति ।

४३. पौराणाम्—द्व्यार्षेयः—विश्वामित्र[2]पौराणेति ।

४४. अगस्त्यानाम् (इध्मवाहानाम्)—त्र्यार्षेयः—अगस्त्यदार्ढ्यच्युतेध्मवाहेति ।

४५. साम्भवाहानाम्—त्र्यार्षेयः—अगस्त्यदार्ढ्यच्युतसाम्भवाहेति ।

४६. यज्ञवाहानाम्—त्र्यार्षेयः—अगस्त्यदार्ढ्यच्युतयज्ञवाहेति ।

४७. सोमवाहानाम्—त्र्यार्षेयः—अगस्त्यदार्ढ्यच्युतसोमवाहेति । होता वदेत् ।

क्षत्रियाणां चैतदेकेषां त्र्यार्षेयः प्रवरः । मानवैलपौरूरवसेति । वैश्यानां चैके त्र्यार्षेयाः—भालन्दनवात्सप्रिमांकीलेति वा, अन्येषां क्षत्रियाणां वैश्यानां पुरोहितप्रवरो भवति ।

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे गोत्रप्रवरविधिर्नाम

त्रिषष्टितमोऽध्यायः ॥

---

1. पाराशराणामिति स्यात्     2. पौरणेति—पा.

# चतुष्षष्टितमोऽध्यायः



अतःपरं प्रवक्ष्यामि ह्यभिषेकविधिं परम् ।
विष्णोर्नारायणस्यैव देवदेवस्य शार्ङ्गिणः ॥ १ ॥

कृत्वा महाभिषेकं तु सागरान्तां महीमिमाम् ।
प्राप्नुवन्ति हि राजानस्सकलं चायुषं वरम् ॥ २ ॥

इन्द्रादिलोकपालाश्च देवाश्चानेन कर्मणा ।
प्राप्तास्ते लोकपालत्वं हरेरेव प्रसादतः ॥ ३ ॥

पृथुश्च जनकश्चैव मान्धाता नृपतिस्तथा ।
कृत्वा महाभिषेकं तु दीर्घकालमिमां महीम् ॥ ४ ॥

पालयामासुरखिलां प्रेत्य सिद्धिं परां गताः ।
अन्येऽप्यखिलकामांस्तु प्राप्यैवायुः परां गतिम् ॥ ५ ॥

तत्सर्वसाधनं कर्म शृणुतैतत्समाहिताः ।
अयने चोत्तरे चैव शुभर्क्षे श्रवणादिके ॥ ६ ॥

शुभवारे तिथौ शुक्ले स्थिरराशौ समाचरेत् ।
तस्मात्तु दिवसात्पूर्वमङ्कुरानर्पयेत्क्रमात् ॥ ७ ॥

प्रमुखे चोत्तरे कुर्यात्कूटं वाथ प्रपां तु वा ।
हस्तैरादित्यसंख्याकैः ऋत्विवसंख्यैरथापि वा ॥ ८ ॥

विस्तीर्णमिति देवान्तं स्थानं तत्तत्तलोच्छ्रयम् ।
पदान्तरं चतुर्हस्तमुच्छ्रयं च यथोचितम् ॥ ९ ॥

तोरणानि चतुर्दिक्षु तत्र कुर्याद्यथाविधि ।
वितानैश्च समाच्छाद्य स्थूणा वस्त्रेण वेष्टयेत् ॥ १० ॥

मुक्तावलिध्वजैः पुष्पैः पल्लवैर्नागवल्लिभिः ।
कदलीपूर्णकुम्भाद्यैरङ्कुरैर्दर्भमालया ॥ ११ ॥

समन्तात्समलङ्कृत्य भक्त्या शक्त्या विशेषतः ।
लिखेदत्र यथान्यायं भूमिमण्डलमुत्तमम् ॥ १२ ॥

तन्मध्ये च महामेरुं कल्पयेच्छ्लक्ष्णया मृदा ।
मृदङ्गाकृतिहस्तं तु तस्योत्सेधो विधीयते ॥ १३ ॥

विष्टम्भं चैकहस्तं तु पूर्वतः श्वेतवर्णकम् ।
रक्तं दक्षिणतः पीतं पश्चिमे कृष्णमेव च ॥ १४ ॥

उत्तरे तं तु सर्वत्र रत्नाढ्यं हेमभूषितम् ।
लिखेत्पूर्ववदायामं दक्षिणे चोत्तरेऽपि च ॥ १५ ॥

त्रींस्त्रीनद्रिविशेषान्वै विस्तारः षोडशाङ्गुलः ।
हिमाद्रिं श्वेतवर्णं च हेमकूटं च पिङ्गलम् ॥ १६ ॥

निषधं रक्तवर्णं च क्रमशो दक्षिणे लिखेत् ।
नीलाद्रिं नीलवर्णं च श्वेतं श्वेतगिरिं तथा ॥ १७ ॥

शतशृङ्गं च हेमाभं लिखेत्तस्योत्तरे तथा ।
धातुभिर्वर्णयेत्तत्र जम्बूद्वीपमिदं तथा ॥ १८ ॥

लवणाब्ध्यपरे तत्र शाकद्वीपं तु तद्बहिः ।
ततः क्षीरार्णवस्यान्ते कुशद्वीपमतःपरम् ॥ १९ ॥

घृतोदधिः क्रौञ्चद्वीपो दध्यब्धेश्शाल्मलिस्तथा ।
सुरोदधिश्च गोमेधद्वीपश्चेक्षुरसोदधिः ॥ २० ॥

पुष्करद्वीप उद्दिष्टः प्लक्षः शीतार्णवाद्बहिः ।
लोकालोकमहाभूभृत्पावृतं तु ततो बहिः ॥ २१ ॥

इन्द्रादिलोकपालानां दिक्षु लोकान् क्रमान्न्यसेत् ।
पूर्वेद्युरेव सकलं विन्यस्यैव यथाविधि ॥ २२ ॥

वास्तुहोमं ततो हुत्वा पूर्वरात्रौ विशेषतः ।
सैकते स्थण्डिले चैव लोकपालान् समर्चयेत् ॥ २३ ॥

आचार्याद्यैश्च पूर्वोक्तैरभिषेकं च कारयेत् ।
वस्त्रैराभरणाद्यैश्च पूजकान् पूजयेत्क्रमात् ॥ २४ ॥

सन्ध्यायां लोकपालांश्च हविषा दक्षिणादिभिः ।
यथाशक्ति प्रपूज्यैव तस्य तस्यायुधानपि ॥ २५ ॥

सौवर्णानेव सन्दध्याच्छक्तिर्भवति चायुधैः ।
आचार्यः श्रद्धया युक्तो महामेरुं समर्चयेत् ॥ २६ ॥

महामेरुं महीभर्ता देवावासस्तथैव च ।
शैलेन्द्रश्चेति तं विद्वांश्चतुर्मूर्तिक्रमेण वै ॥ २७ ॥

तस्य मूर्धनि देवेशं प्राङ्मुखं क्रोडरूपिणम् ।
आदिवाराहमित्युक्त्वा तथा यज्ञेश्वरं त्विति ॥ २८ ॥

उर्वीसन्धारणं चेति वेदवादमिति क्रमात् ।
मेरुमध्ये ततः सूर्यमतः प्राच्यां चतुर्मुखम् ॥ २९ ॥

उत्तरे भूमिदेवीं च जम्बूशाखां च दक्षिणे ।
सुखशीतघनच्छायां सङ्कल्प्यैव समर्चयेत् ॥ ३० ॥

संघोप्य कौतुकं बद्धा चाधिवास्य यथाविधि ।
कलशैर्दशभिर्द्वाभ्यां पञ्चगव्यादिपूरितैः ॥ ३१ ॥

अभिषिच्य च देवेशं तत्स्थाने स्थापयेत्क्रमात् ।
मेरोस्तु पश्चिमे कुण्डमौपासनविधानतः ॥ ३२ ॥

कृत्वा तत्र निधायाग्निं हुत्वाघारं यथाविधि ।
परिषिच्य जुहोत्याज्यं मन्त्रैरेतैरनुक्रमात् ॥ ३३ ॥

आदिवाराहाय स्वाहा यज्ञेश्वराय स्वाहा उर्वीसन्धारणाय स्वाहा वेदरूपाय स्वाहा विष्णवे स्वाहा पुरुषाय स्वाहा सत्याय स्वाहा अच्युताय स्वाहा अनिरुद्धाय स्वहा वासुदेवाय स्वाहा सङ्कर्षणाय स्वाहा प्रद्युम्नाय स्वाहा अनिरुद्धाय स्वाहा ब्रह्मणे स्वाहा चतुर्मुखाय स्वाहा हिरण्यगर्भाय स्वाहा प्रजापतये स्वाहा मार्कण्डेयाय स्वाहा महामुनये स्वाहा लोकचक्षुषे स्वाहा सहस्रांशवे स्वाहा मेदिन्यै स्वाहा उर्व्यै स्वाहा इन्द्राय स्वाहा शचीपतये स्वाहा पुरुहूताय स्वाहा पुरन्दराय स्वाहा सहस्राक्षाय स्वाहा प्रेताधिपतये स्वाहा वरुणाय स्वाहा अम्बुनाथाय स्वाहा सोमाय स्वाहा द्विजराजाय स्वाहा अग्नये स्वाहा हव्यमुखाय स्वाहा निर्ऋतये स्वाहा रक्षोधिपतये स्वाहा हेमकूटाय स्वाहा नीलाय स्वाहा श्वेतशैलाय स्वाहा शतशृङ्गाय स्वाहा महाव्याहृतये स्वाहा गन्धमादनाय स्वाहा जम्बूद्वीपाय स्वाहा लवणार्णवाय स्वाहा शाकद्वीपाय स्वाहा क्षीरार्णवाय स्वाहा कुशद्वीपाय स्वाहा अमृतार्णवाय स्वाहा क्रौञ्चद्वीपाय स्वाहा दधिमहोदधये स्वाहा शाल्मलीद्वीपाय स्वाहा सुरोदधये स्वाहा गोमेधद्वीपाय स्वाहा इक्षुरसार्णवाय स्वाहा पुष्करद्वीपाय स्वाहा शीतोदधये स्वाहा लोकालोकाय स्वाहा भूलोकाय स्वाहा भुवर्लोकाय स्वाहा सुवर्लोकाय स्वाहा जनोलोकाय स्वाहा तपोलोकाय स्वाहा सत्यलोकाय स्वाहा ब्रह्मलोकाय स्वाहा वसुलोकाय स्वाहा रुद्रलोकाय स्वाहा आदित्यलोकाय स्वाहा नागलोकाय स्वाहा विष्णुलोकाय स्वाहा अतलाय स्वाहा सुतलाय स्वाहा वितलाय स्वाहा प्रतलाय स्वाहा धातकीतलाय स्वाहा विद्रूपतलाय स्वाहा सम्फुल्लाग्रतलाय स्वाहा महातलाय स्वाहा अनन्ताय स्वाहा दिग्गजेभ्यः स्वाहा कपिलाय स्वाहेति ॥

एवं हुत्वा यथान्यायं जुहुयात्पारमात्मिकम् ।
हुत्वा पुरुषसूक्तं च विष्णुसूक्तं च वैष्णवम् ॥ ३४ ॥

अष्टाविंशति हुत्वा तु महाव्याहृतिसंयुतम् ।
इन्द्रादिलोकपालानां दिशां होमं च हूयते ॥ ३५ ॥

अष्टौ वा कलशा ग्राह्याः षोडशप्रस्थसंयुताः ।
सर्वौषध्युदकं चैव सर्वपुष्पोदकं तथा ॥ ३६ ॥

सर्वरत्नोदकं चैव सर्वधान्योदकं तथा ।
सर्वतीर्थोदकं चैव सर्वगन्धोदकं तथा ॥ ३७ ॥

अक्षतोदकमुद्दिष्टं कुशदर्भोदकं तथा ।
मेरोरुत्तरपार्श्वे तु विन्यसेत्कलशान् क्रमात् ॥ ३८ ॥

मध्ये मौलिं प्रतिष्ठाप्य धान्यपीठे विधानतः ।
जातरूपमयायेति मकुटाय तथैव च ॥ ३९ ॥

गणाधिपतयेत्युक्त्वा नन्तायेति च क्रमात् ।
पुष्पादिभिस्समभ्यर्च्य षड्विग्रहविधानतः ॥ ४० ॥

अष्टभिः कलशैर्मौलिं संस्थाप्य च विधानतः ।
अम्बरं छादयेत्तत्र चामरैरुपवीजयेत् ॥ ४१ ॥

अभिषेकान्त उद्धृत्य जयशब्दसमन्वितम् ।
कनिक्रदादिकं जप्त्वा देवपार्श्वे निधापयेत् ॥ ४२ ॥

देवदेवं च पाद्याद्यैरर्चयेदष्टविग्रहैः ।
पीताम्बरधरं विष्णुं कौस्तुभोद्भासितं परम् ॥ ४३ ॥

श्रीवत्सलक्षणोरस्कं सर्वदेवसमावृतम् ।
हृदि सञ्चिन्त्य मनसा प्रणवात्मानमव्ययम् ॥ ४४ ॥

यजमानः स्वयं मौलिमुद्धृत्य च समाहितः ।
आचार्यहस्ते सन्दद्याद्देवेशं मनसा स्मरन् ॥ ४५ ॥

आचार्योऽपि प्रसन्नात्मा ध्यात्वा तं परमं हरिम् ।
विष्णुसूक्तं च जप्त्वैव जपेदेकाक्षरादिकम् ॥ ४६ ॥

ध्रुवसूक्तं ततो जप्त्वा भूतो भूतेष्विति ब्रुवन् ।
ध्रुवे वा कौतुकादौ वा मकुटानि यथार्हतः ॥ ४७ ॥

पूजयेद्देवदेवं तं चत्वारः स्थापकाः क्रमात् ।
चतुर्दिक्षु जपेयुस्ते तत्र सूक्तं ध्रुवाह्वयम् ॥ ४८ ॥

पुरुषुसूक्तं च जप्त्वैव जपेदेकाक्षरादिकम् ।
विष्णुसूक्तं जपेयुस्ते चतुर्दिक्षु समन्विताः ॥ ४९ ॥

देवदेवं समभ्यर्च्य पूर्वोक्तेन विधानतः ।
पायसं कृसरं गौल्यं यावकं च निवेदयेत् ॥ ५० ॥

अन्तहोमं च हुत्वा तु प्रणामान् पञ्च चाचरेत् ।
भक्त्या यः कुरुते विष्णोरभिषेकं विधानतः ॥ ५१ ॥

काम्यं च चक्रवर्तित्वं प्राप्य निष्कण्टकां महीम् ।
चतुस्सागरपर्यन्तां प्राप्नोत्येव विशेषतः ॥ ५२ ॥

अर्घ्यान्तं कारयेद्यस्तु भक्त्या च परया युतः ।
विष्णुलोकं समासाद्य विष्णुवन्मोदते चिरम् ॥ ५३ ॥

एतेन विधिना विष्णोरालये तस्य सन्निधौ ।
अभिषेकं वरं राज्ञा कारयेदिति शासनम् ॥ ५४ ॥

श्रियो देव्याश्च भूदेव्या देवदेवस्य चोपरि ।
राजा तस्य प्रसादेन भूराज्यं श्रियमाप्नुयात् ॥ ५५ ॥

अनेन तत्प्रसादेन तदा सम्पदमाप्नुयात् ।
इह लोके सुखान् भुक्त्वा अन्ते मोक्षं समाप्नुयात् ॥ ५६ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे महाभिषेकविधिर्नाम चतुष्षष्टितमोऽध्यायः ॥

---

## पञ्चषष्टितमोऽध्यायः

---

अतःपरं प्रवक्ष्यामि विमानादिपृथक्फलम् ।
शिलाभिरिष्टकाभिर्वा यः कुर्यादालयं हरेः ॥ १ ॥

अन्ते विमानमारुह्य दिव्यं कामचरं वरम् ।
दिव्यगन्धसमायुक्तं सर्वकामफलप्रदम् ॥ २ ॥

गन्धर्वैरप्सरोभिश्च स्तूयमानो मुदान्वितः ।
दशभिः कुलजैः पूर्वैरपरैर्दशभिर्युतः ॥ ३ ॥

सर्वान् लोकानतीत्यैव विष्णुलोके महीयते ।
शक्तश्शिलाविमानं तत्कृत्वा तत्फलमाप्नुयात् ॥ ४ ॥

कृत्वेष्टकाविमानं तदशक्तस्तत्फलं लभेत् ।
कारयेद्यो विमाने च ध्रुवबेरं च शक्तितः ॥ ५ ॥

सौवर्णं दिव्यमारुह्य विमानं शुभदर्शनम् ।
गन्धर्वैरप्सरोभिश्च भूतैः परिवृतस्तथा ॥ ६ ॥

विष्णुलोकं स गत्वैव विष्णोः सारूप्यमाप्नुयात् ।
शक्तितः कौतुकादीनां बिम्बानां च विधानतः ॥ ७ ॥

तथा विमानमारुह्य गत्वा सारूप्यमाप्नुयात् ।
प्रतिष्ठां कारयेद्यस्तु विधिनैव सदक्षिणाम् ॥ ८ ॥

सोऽपि दिव्यविमानं तदारुह्यैव सुरैर्वृतः ।
भूतैरपि वृतो गच्छेद्गन्धर्वाद्यैरभिष्टुतः ॥ ९ ॥

विष्णुलोकमवाप्यैव विहृत्याभूतसंप्लवम् ।
ज्ञानयोगेन देवस्य सायुज्यं समवाप्नुयात् ॥ १० ॥

राज्यार्थी सार्वभौमः स्याद्राज्यमाप्नोत्यकण्टकम् ।
विमानादौ च बेरे च जीर्णे भेदादिसंयुते ॥ ११ ॥

यो नवीकरणं कुर्याल्लभेतामौलिकं फलम् ।
देवालयः कृतो येन ध्रुवबेरं तु येन वै ॥ १२ ॥

कौतुकादि कृतं येन प्रतिष्ठां कारयेत यः ।
नवकर्म कृतं येन त्रयाणां च समं फलम् ॥ १३ ॥

समग्रं फलमेतेषां भोगदाता समाप्नुयात् ।
प्राकारं गोपुराद्यं च कूटं मण्टपमेव च ॥ १४ ॥

अन्तरावरणं चैव तथा चास्थानमण्टपम् ।
भक्त्या यः कारयेत्सोऽपि सामीप्यं फलमश्नुते ॥ १५ ॥

एतेषां च नवीकर्ता तत्कर्तृफलमाप्नुयात् ।
पुष्पारामप्रदाता च विष्णुसालोक्यमाप्नुयात् ॥ १६ ॥

कुर्याच्च दीर्घिकां कूपं तटाकं वाल्याश्रयम् ।
त्रिसप्तकुलजैर्युक्तो वारुणं लोकमाप्नुयात् ॥ १७ ॥

देवालयाश्रितान् यत्र वृक्षांश्च वकुलादिकान् ।
वर्धयेत्सोऽपि देहान्ते सोमलोके महीयते ॥ १८ ॥

तत्तद्द्रव्यप्रदातॄणां तत्तत्कर्मकृतामपि ।
पृथक्फलं प्रवक्ष्यामि सर्वेषां च यथाक्रमम् ॥ १९ ॥

आलयस्याङ्गणे यस्तु भक्त्या तद्गतमानसः ।
तृणान्युद्धरते वापि यस्तु शल्यान् व्यपोहति ॥ २०

समीकरणं च यः कुर्यान्मार्जन्योन्मार्जनं चरेत् ।
योऽद्भिरभ्युक्षणं कुर्याद्यः कुर्यादुपलेपनम् ॥ २१ ॥

सिकतां विकिरेद्यस्तु महापातकिनोऽपि वा ।
सर्वपापैः प्रमुच्यैव विष्णुलोकमवाप्नुयात् ॥ २२ ॥

भक्त्या प्रदक्षिणं कुर्याद्यस्तु विष्ण्वालये नरः ।
सायं प्रातश्च देवेशं दृष्ट्वैवाथ विचिन्त्य वा ॥ २३ ॥

प्रणामं चैव यः कुर्यात्सर्वयज्ञफलं लभेत् ।
प्रणामद्विगुणं प्रोक्तं पूर्वस्मादपरं क्रमात् ॥ २४ ॥

ध्यानमावाहनं कुर्यात्सर्वान् कामानवाप्नुयात् ।
हरेरासनदानेन सर्वलोकसुखं भवेत् ॥ २५ ॥

स्वागतेनानुमानेन सर्वैरभिमतो भवेत् ।
पाद्याचमनदानेन बाह्याभ्यन्तरयोश्शुचिः ॥ २६ ॥

नित्यं दैविकपुष्पाणि यो भक्त्या विष्णवे ददेत् ।
सूर्यकोटिप्रतीकाशं विमानमधिरुह्य सः ॥ २७ ॥

विष्णुलोकं स गत्वैव विष्णुवन्मोदते चिरम् ।
देवं तु पुष्पमालाभिरलङ्कुर्याच्च यो नरः ॥ २८ ॥

अनन्तमिति संप्रोक्तं फलं तस्य विशेषतः ।
पुष्पेऽधिकसुगन्धे च अश्वमेधाधिकं फलम् ॥ २९

पुष्पार्पणं तु यः कुर्यात्कुर्याद्गन्धस्य भक्तितः ।
तयोश्चापि फलं विन्द्याद्दशचान्द्रायणेषु यत् ॥ ३० ॥

सुगन्धं चन्दनाद्यं च शक्तः कर्पूरसंयुतम् ।
यः समालेपयेद्देवं लोकं संमोदमाप्नुयात् ॥ ३१ ॥

चन्दनागरुकोष्ठाद्यैर्धूपं दद्याच्च यो नरः ।
सूर्यलोकं स गत्वैव सूर्यवन्मोदते चिरम् ॥ ३२ ॥

घृततैलप्रदानेन सर्वदानफलं लभेत् ।
विधिनार्घ्यं च यो दद्याद्विष्णवे मधुपर्कवत् ॥ ३३ ॥

चन्द्रलोकं स गत्वैव चन्द्रवन्मोदते चिरम् ।
सुगन्धतोयधूपादीन् शक्तः कर्पूरवर्तिकाम् ॥ ३४ ॥

दीपं भक्त्यैव यो दद्यादविच्छिन्नं यथा भवेत् ।
ज्ञानैश्वर्यगुणोपेतो वैष्णवेष्वधिको भवेत् ॥ ३५ ॥

अन्ते ज्योतिषमायाति दीपदानान्न संशयः ।
सन्ध्यादीपप्रदो यश्च स्नानतोयं च यो ददेत् ॥ ३६ ॥

वारुणं लोकमासाद्य पूज्यतां वरुणो यथा ।
प्लोतवस्त्रोत्तरीयार्थं शुद्धानि च मृदूनि च ॥ ३७ ॥

वासांसि दद्यात्स श्रीमान् कौबेरं लोकमेति सः ।
सौवर्णाभरणान्येव मुक्तामणियुतानि च ॥ ३८ ॥

यो दद्याद्विष्णवे भक्त्या भूलोकस्याद्भुतः पतिः ।
राज्यं श्रियं च भुक्त्वान्ते विष्णुलोकं स गच्छति ॥ ३९ ॥

यज्ञोपवीतं त्रिवृतं शक्तो हैमं च यो ददेत् ।
द्विजोत्तमः स्याद्विज्ञानं ब्रह्मलोकमियान्नरः ॥ ४० ॥

देवदेवस्य विष्णोस्तु हविर्दानेन यत्फलम् ।
हविष्पाकविधाने तु सर्वं पूर्वं प्रचोदितम् ॥ ४१ ॥

सुगन्धं स्वादु शुद्धं च पानीयं यो ददेद्धरेः ।
हविर्दानफलस्यार्धं फलं सम्यक् स गच्छति ॥ ४२ ॥

अपूपानि विधानेन सुपक्वानि च यो ददेत् ।
हविर्दानफलं यच्च तत्फलं च स गच्छति ॥ ४३ ॥

कदल्या नारिकेलस्य चूतस्य पनसस्य च ।
फलानि च सुपक्वानि भक्त्या शुद्धानि यो ददेत् ॥ ४४ ॥

हविर्दानचतुर्भागफलं सोऽपि समाप्नुयात् ।
कर्पूरैलालवङ्गैश्च शक्तो जातिफलैर्युतम् ॥ ४५ ॥

मातुलुङ्गफलैश्शुद्धैस्सुपक्वैश्च युतं तु वा ।
ताम्बूलं क्रमुकैर्युक्तं मुखवासं च यो ददेत् ॥ ४६ ॥

सर्वैश्वर्यमवाप्यैव विष्णुलोकं स गच्छति ।
विधिना बलिमाराध्य कारयेद्यः प्रदक्षिणम् ॥ ४७ ॥

नित्योत्सवं विधानेन कर्तुरात्यन्तिकं फलम् ।
बलं श्रियं च भुक्त्वान्ते विष्णुलोके विराजते ॥ ४८ ॥

बलिशेषं तु यो भुङ्क्ते सोऽपि यज्ञफलं लभेत् ।
विष्णोः पादाब्जजातं यो जलं शिरसि धारयेत् ॥ ४९ ॥

तस्य कायगतं पापं सद्य एव विनश्यति ।
देवस्य मण्टपं कुर्यादथ पुष्पैः प्रपां तु वा ॥ ५० ॥

सर्वैश्वर्यमवाप्यैव नित्यपुष्पफलं लभेत् ।
सुवर्णै रजतैर्वापि ताम्रेणैवाथ कुत्रचित् ॥ ५१ ॥

प्रतिष्ठां कारयेद्यस्तु रामकृष्णादिनामपि ।
न भजेन्मानुषं देहं दैविकं कायमाप्नुयात् ॥ ५२ ॥

सायुज्यादीनवाप्नोति इष्टद्रव्यं विशेषतः ।
हविष्पात्रं च सौवर्णं राजतं ताम्रमेव च ॥ ५३ ॥

कांस्यं वाप्यथवा दद्यादर्घ्यपात्राणि पञ्च च ।
तथा पानीयपात्रं च बलिपालं च यो ददेत् ॥ ५४ ॥

करकान् कलशान्कुम्भान्सौवर्णादीनि शक्तितः ।
अर्चनार्थानि पात्राणि तथैवान्यान् परिच्छदान् ॥ ५५ ॥

सौवर्णानेव यो दद्यात् सायुज्यं स भजेत्पदम् ।
राजतान्यपि यो दद्यात्सामीप्यं फलमश्नुते ॥ ५६ ॥

दद्यात्ताम्रं तु कांस्यं वा सालोक्यं सोऽपि गच्छति ।
हविस्स्थालीप्रदानेन हविर्दानार्धमश्नुते ॥ ५७ ॥




घण्टानादप्रदानेन सत्कीर्तिं लभते नरः ।
धूपाधारप्रदानेन धूपदानफलं लभेत् ॥ ५८ ॥

दीपाधारं तु यो दद्यात्सोऽपि दीपफलं लभेत् ।
दर्पणं चापि यो दद्यात्तत्फलं परमेति सः ॥ ५९ ॥

श्वेतं वितानं रक्तं वा कृष्णं वा पीतमेव वा ।
क्षौमेणापि दुकूलेन वस्त्रेणान्येन वा कृताम् ॥ ६० ॥

यो दद्यादथवा खट्वां सतल्पां सोपधानगाम् ।
इन्द्रलोकमवाप्नोति इन्द्रवन्मोदते चिरम् ॥ ६१ ॥

श्वेतच्छत्रं स्वर्णकृतं मुक्तादामावलम्बितम् ।
हैमं दण्डं च यो दद्याद्विष्णुलोके स पूज्यते ॥ ६२ ॥

राज्यकामी तु राजा स्यात्सार्वभौमश्च भूतले ।
चित्रध्वजानि यो दद्यान्नानावर्णयुतानि च ॥ ६३ ॥

सर्ववर्णाधिको भूत्वा कुलकेतुर्भविष्यति ।
अन्ते चोर्ध्वानि लोकानि पुण्यानि स तु गच्छति ॥ ६४ ॥

मयूरच्छत्रदाता तु वारुणं लोकमाप्नुयात् ।
चामरं हेमदण्डं च व्यजनं रत्नभूषितम् ॥ ६५ ॥

वेत्रं च हैमदण्डं च शक्त्या भक्त्या च यो ददेत् ।
श्रद्धयापि हरेश्चैव इन्द्रलोके महीयते ॥ ६६ ॥

यदि कामयते राज्यं प्राप्नोत्यखिलमेदिनीम् ।
मयूरव्यजनं तद्वद्रुक्मदण्डं च शक्तितः ॥ ६७ ॥

भक्त्यैव यो हरेर्दद्याद्वायुलोके महीयते ।
विमानं हेमसंछन्नं विष्णोर्यः कारयेद्बुधः ॥ ६८ ॥

अशक्यं तत्फलं वक्तुं सर्वैर्वर्षशतैरपि ।
सौवर्णं विष्णुरूपं तु यो भक्त्यैव तु कारयेत् ॥ ६९ ॥

तस्यापि तत्फलं सर्वमनन्तमिति चोदितम् ।
मण्टपं वा प्रपां वापि रत्नयुक्तोपशोभितम् ॥ ७० ॥

हैमलम्बसमायुक्तं हैमस्तम्भसमन्वितम् ।
कल्पयेद्विष्णुलोके च विष्णुवन्मोदते चिरम् ॥ ७१ ॥

हैमं सिंहासनं श्रेष्ठं यो भक्त्यैव हरेर्ददेत् ।
सिंहासनं तथास्थाय महेन्द्रस्य पदं व्रजेत् ॥ ७२ ॥

देवाय शिबिकां हैमां शृङ्गादीन्यश्च कारयेत् ।
हैमं यानं तथारुह्य विष्णुलोकं स गच्छति ॥ ७३ ॥

अशक्तो दारुणा वापि रङ्गादीन् शिबिकां तु वा ।
सिंहासनं वा यो दद्यात्सोऽपि विष्णुपुरं व्रजेत् ॥ ७४ ॥

दद्यात्पयस्विनीं गां च सर्वदानफलं लभेत् ।
यश्च कांस्यमयीं घण्टां हृद्यध्वनियुतां ददेत् ॥ ७५ ॥

हृद्यवाक् सुस्वरो हृद्यवाक्पटुर्हि भवेन्नरः ।
सस्यसम्पत्करीं भूमिं यो दद्याद्विष्णवे मुदा ॥ ७६ ॥

ऐन्द्रं च पदमाप्नोति देवैरपि सुपूजितम् ।
शङ्खभेर्यादिदाता तु शक्रलोके सुपूज्यते ॥ ७७ ॥

अप्सरोनृत्तगीताद्यैर्वाद्यैरपि सुघोषणैः ।
वीणावेणुनिनादेन शक्त्या यः पूजयेद्धरिम् ॥ ७८ ॥

भुक्त्वात्र महदैश्वर्यं विष्णुलोके सुपूज्यते ।
अच्युतं प्रत्युपस्थाय पूर्वोक्तफलमश्नुते ॥ ७९ ॥

विमानानां तु सर्वेषां प्राप्यते च महत्फलम् ।
यद्यद्द्रव्यं मुदा युक्तो भक्त्या दद्याच्च विष्णवे ॥ ८० ॥

तस्य द्रव्यस्य संवृद्धिमनन्तां प्राप्य मोदते ।
यद्यत्कामाच्च यो दद्यात्तत्सर्वं च लभेत सः ॥ ८१ ॥

यद्यत्कर्म तदर्थं स्यात्परिचर्या च तस्य या ।
तस्योपचारं यत्कर्म भक्त्या यः कुरुते च यत् ॥ ८२ ॥

सर्वयज्ञफलं प्राप्य सामीप्यं फलमाप्नुयात् ।
विष्णोः कथास्तु सङ्कीर्त्य स्तोत्रैः स्तुत्वा च वैष्णवैः ॥ ८३ ॥

श्रुत्वा भक्त्या हरिं ध्यायन् विष्णुलोके महीयते ।
सौम्यान्पुण्यानिमान् विष्णोश्चतुरोऽप्यर्चनाविधीन् ॥ ८४ ॥

श्रावयेद्यो बुधो भक्त्या तथा यः शृणुयाद्बुधः ।
सर्वपापविनिर्मुक्तो वैष्णवं पदमाप्नुयात् ॥ ८५ ॥

येन द्रव्येण देवेशं स्नापयेद्यस्तु भक्तितः ।
तद्द्रव्यं वर्धते तस्य नश्यन्त्येवाशुभास्तथा ॥ ८६ ॥

तथा ग्रामस्य राष्ट्रस्य सन्ति तद्द्रव्यसम्पदः ।
अशुभाश्च विनश्यन्ति शुभास्तस्य भवन्ति च ॥ ८७ ॥

मृद्भिस्संस्थाप्यते भूमिस्सस्यसम्पत्करी भवेत् ।
सर्वत्र पूजनादेव सर्वत्र स्थिरमाप्नुयात् ॥ ८८ ॥

धान्यैस्संस्नापनात्तत्र धान्यवृद्धिरनश्वरा ।
अङ्कुरैरर्चनादेव प्रजाजालं च वर्धते ॥ ८९ ॥

मङ्गलैः पूजनात्सर्वमङ्गलानि भवन्ति च ।
स्नापनात्पञ्चगव्यैश्च पापा नश्यन्ति सर्वशः ॥ ९० ॥

घृतेन स्नापनात्सामवेदाध्ययनजं फलम् ।
मधुना स्नापनादत्र ऋग्वेदाध्ययनात्फलम् ॥ ९१ ॥

दधिसंस्नापनादत्र यजुर्वेदफलं लभेत् ।
क्षीरसंस्नापनाद्विष्णोरथर्वाध्ययनजं फलम् ॥ ९२ ॥

गव्यैः संस्नापनाद्गावः क्षीरवत्यो भवन्ति च ।
गन्धोदकस्नापनेन सुखं भवति सर्वथा ॥ ९३ ॥

अक्षतोदकदानेनाक्षरवन्तो भवन्ति च ।
फलोदकप्रदानेन विनश्यन्त्यशुभास्तथा ॥ ९४ ॥

स्नापनात्तु कुशोदेन ब्रह्मवर्चस्विता भवेत् ।
रत्नोदस्नपनाद्विष्णो रत्नरुक्मविवर्धनम् ॥ ९५ ॥

जप्योदकप्रदानेन सर्वजप्यफलं लभेत् ।
फलन्त्योषधयस्सर्वास्सर्वौषध्युदकेन तु ॥ ९६ ॥

बहुपुण्यफलं याति पुण्यपुष्पार्चनेन तु ।
श्रीवेष्टनादिचूर्णेन दीर्घायुष्यं भवेन्नृणाम् ॥ ९७ ॥

कषायोद्वर्तनादेव सारूप्यं फलमाप्नुयात् ।
तीर्थोदस्नापनादेव तत्तीर्थस्य फलं लभेत् ॥ ९८ ॥

वनौषधिभिः संस्पर्शादारोग्यं सततं ध्रुवम् ।
हरिद्राचूर्णदानेन सर्वभोगानवाप्नुयात् ॥ ९९ ॥

स्नापनात्सर्वगन्धैश्च श्रीर्भवत्यचला ततः ।
मार्जनान्मूलगन्धैश्च कुलमेधेत नित्यशः ॥ १०० ॥

धातुभिस्समलङ्काराद्धातुनेत्रादिकं शुभम् ।
भवेद्यत्नात्ततो द्रव्यैरेभिस्संस्नापयेद्धरिम् ॥ १०१ ॥

एवं यः स्नापनं विष्णोः कारयेद्भक्तिसंयुतः ।
पूर्वोक्तानि फलान्येवमनुभूय चिरं सुखम् ॥ १०२ ॥

अन्ते विमानमारुह्य हैमं देवैस्समावृतः ।
किन्नरैरप्सरोभिश्च नृत्तगीतैश्च पूजितः ॥ १०३ ॥

भूतैः परिवृतो गच्छेद्गन्धर्वैस्सिद्धचारणैः ।
यक्षविद्याधरैश्चैव स्तूयमानो मुदाऽन्वितः ॥ १०४ ॥

सर्वलोकात्परं पुण्यं वैकुण्ठं लोकमाप्नुयात् ।
देवदेवस्य विष्णोस्तु स्नपनं परमं नरः ॥ १०५ ॥

भक्त्या यश्चापि सेवेत सर्वपापैः प्रमुच्यते ।
देवेशस्योत्सवं विष्णोः पूर्वोक्तेन विधानतः ॥ १०६ ॥

सर्वालङ्कारसंयुक्तं कारयेद्यस्तु भक्तिमान् ।
प्रजावृद्धिं श्रियं सम्यग्भूमिभोगान् बहूनपि ॥ १०७ ॥
पत्नीवृद्धिं च भृत्यांश्च लब्ध्वा लोके चिरं भुवि ।
सुखं भुक्त्वा च पश्चात्तु सर्वयज्ञफलं तथा ॥ १०८ ॥
सर्वदानफलं लब्ध्वा वैकुण्ठं लोकमाप्नुयात् ।
उत्सवं यस्तु सेवेत सर्वयज्ञफलं लभेत् ॥ १०९ ॥
संपत्कामी श्रियं भक्त्या भृगुवारेषु चार्चनैः ।
पुष्पदानसुगन्धैश्च तुलसीकुङ्कुमादिभिः ॥ ११० ॥
पायसापूपताम्बूलनारिकेलफलादिभिः ।
यो भक्त्या पूजयेल्लक्ष्मीं सर्वक्षत्रियवन्दितः ॥ १११ ॥
प्रजावान्पशुमान्भूमौ सर्वसौभाग्यमाप्नुयात् ।
इह लोके चिरं भुक्त्वा देहान्ते मोक्षभाग्भवेत् ॥ ११२ ॥
वैखानसेन सूत्रेण निषेकादिक्रियान्वितम् ।
विद्वांसं ब्राह्मणं वापि निरक्षरमथापि वा ॥ ११३ ॥
दृष्ट्वा यः प्रणमेद्भक्त्या तस्य मुक्तिः करे स्थिता ।
वैखानसं पाञ्चरात्रं वैष्णवं द्विविधं मतम् ॥ ११४ ॥
पूर्वं वैखानसं प्रोक्तमपरं तान्त्रिकं मतम् ।
वैदिकं विखनःप्रोक्तं शास्त्रं वैखानसं स्मृतम् ॥ ११५ ॥
वैखानसावतारेण भगवान् सर्वेश्वरो हरिः ।
शास्त्रं वैखानसं प्राह जीवानां मुक्तिहेतवे ॥ ११६ ॥
वैखानसं च श्रीशास्त्रं प्राहुरेकायनाभिधम् ।
शास्त्रेणैकायनाख्येन अर्चितेऽत्र हरौ पुरा ॥ ११७ ॥

सर्वे श्रीहरिसान्निध्यं गता वै जीवकोटयः ।
न स्वर्गो नापि नरको न जन्ममरणे तथा ॥ ११८ ॥

श्रीशास्त्रस्यैव रक्षार्थं पूजनार्थं तथापदि ।
पाञ्चरात्रं पुनः प्राह शास्त्रं वैष्णवमुत्तमम् ॥ ११९ ॥

वैखानसं पाञ्चरात्रं मुख्यं गौणं समर्चने ।
मुख्यं वैदिकमुद्दिष्टं गौणं वै तान्त्रिकं स्मृतम् ॥ १२० ॥

ग्रामादिषु च मुख्यं स्याद्गौणं चैव वनादिषु ।
मुख्ये गौणं न कुर्वीत गौणे मुख्यं समाचरेत् ॥ १२१ ॥

गौणे मुख्यं प्रकुर्वीत मुख्यं गौणं न चाचरेत् ।
वैखानसेन सूत्रेण निषेकादिक्रियान्विताः ॥ १२२ ॥

ब्राह्मणा वैष्णवाः प्रोक्ताः सौम्याः परमसात्त्विकाः ।
पाञ्चरात्रविधानेन तप्तचक्राङ्किता भुवि ॥ १२३ ॥

बोधायनादिसूत्रोक्तनिषेकादिक्रियान्विताः ।
आग्नेया वैष्णवाः प्रोक्तास्तथा कात्यायनादयः ॥ १२४ ॥

अवैखानससूत्रोक्तश्रौतस्मार्तक्रियान्विताः ।
वैष्णवास्तामसाः प्रोक्ताः पाञ्चरात्राधिकारिणः ॥ १२५ ॥

हृदये परमात्मा तु तेजोमूर्तिरिव स्थितः ।
एतद्दीपशिखारूपमूर्ध्वपुण्ड्रं प्रशस्यते ॥ १२६ ॥

ऊर्ध्वपुण्ड्रधरः कुर्यादर्चनादीन्विशेषतः ।
हस्तेन दक्षिणेनैव चन्दनाद्यैश्च भक्तितः ॥ १२७ ॥

नमो नारायणायेति चतुरङ्गुलमात्रकम् ।
तन्मूलेऽङ्गुलविस्तारं दीपज्वालोपमं शुभम् ॥ १२८ ॥

ललाटे हृदये कण्ठे बाह्वोः कुक्षौ च पार्श्वयोः ।
अंसद्वये पृष्ठभागे कण्ठपृष्ठे तथैव च ॥ १२९ ॥

तत्र पुण्ड्रं च कर्तव्यं ध्यायन्नेव हरिं परम् ।
द्वादशाक्षरमन्त्रेण पुण्ड्राणि द्वादशापि वा ॥ १३० ॥

द्वादशापि क्रमेणैव नाम्ना वै केशवादिना ।
उच्चार्यैव नमोन्तं तु कुर्यादष्टाक्षरेण वा ॥ १३१ ॥

ऊर्ध्वपुण्ड्राङ्कितं दृष्ट्वा सर्वपापैः प्रमुच्यते ।
दृष्टमात्रे तु तस्मिंस्तु नमस्कुर्याच्च यो नरः ॥ १३२ ॥

जन्मप्रभृति यत्पापं कृतं तेन विनश्यति ।
ऊर्ध्वपुण्ड्रे कृते भक्त्या श्रीरारोग्यं तथैव च ॥ १३३ ॥

आयुष्यं कुलवृद्धिश्च भविष्यति परत्र च ।
भक्त्या यः कुरुते नित्यं नित्यसायुज्यमाप्नुयात् ॥ १३४ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे विमानादिफलविचारो नाम पञ्चषष्टितमोऽध्यायः ॥

---

## षट्षष्टितमोऽध्यायः

अतःपरं प्रवक्ष्यामि भूपरीक्षादिकर्मणि ।
हीनादिषु च दोषेषु प्रायश्चित्तं यथाविधि ॥ १ ॥

प्रायश्चित्ते कृते दोषा नश्यन्त्येव न संशयः ।
न्यूनातिरिक्ते सर्वत्र प्रायश्चित्तं विधीयते ॥ २ ॥

प्रायश्चित्तं न कुर्याच्चेत्तद्ग्रामयजमानयोः ।
दुर्भिक्षव्याधिचोराद्यैर्विनाशश्च भविष्यति ॥ ३ ॥

तथा राष्ट्रस्य राज्ञश्च दोषा वै सम्भवन्ति च ।
तस्मात्सर्वप्रयत्नेन प्रायश्चित्तं यजेद्बुधः ॥ ४ ॥

अकाले भूपरीक्षायां कर्षकैर्बीजवापकैः ।
क्रियाहीने विपर्यासे दोषयुक्ते तु सर्वशः ॥ ५ ॥

यथोक्तहोमद्विगुणं हुत्वा देवं समर्चयेत् ।
उक्तवृक्षस्य चालाभे हलादीनां यथाक्रमम् ॥ ६ ॥

वृक्षाधिपतिमभ्यर्च्य शक्तितो दक्षिणां ददेत् ।
वैष्णवं भूमिदैवत्यं यजेत्तत्र विधानतः ॥ ७ ॥

उक्तप्रमाणहीने तु हलादीनां यथाक्रमम् ।
प्राजापत्यं तथा याम्यं रौद्रं भौतिकसंयुतम् ॥ ८ ॥

आदावन्ते च जुहुयाद्व्याहृत्यन्तं च वैष्णवम् ।
भेदे छेदे तथा तेषां रज्जुच्छेदे तथैव च ॥ ९ ॥

वृषयोरङ्गहीने च पद्माग्नौ वैष्णवं यजेत् ।
ब्राह्मं च गारुडं चैव प्राजापत्यं सभौतिकम् ॥ १० ॥

महाव्याहृतिभिर्हुत्वा कापिलेन घृतेन वै ।
देवेशमर्चयित्वा तु रौप्यं च गुरवे ददेत् ॥ ११ ॥

आर्षं च रौद्रमन्त्रं च तद्दैवत्यसमन्वितम् ।
तद्भूमेः कर्षणाकाले व्रणयुक्ते प्रमादतः ॥ १२ ॥

विष्णुसूक्तं च हुत्वा तु पौरुषं सूक्तमेव च ।
आश्रावितादि जुहुयान्मिन्दाहुतिसमन्वितम् ॥ १३ ॥

निष्काधिकसुवर्णं तु दक्षिणां गुरवे ददेत् ।
सुषुप्ते रोहिते वापि भ्रमिते दुर्धरेऽथवा ॥ १४ ॥
पतिते रुदिते वापि बलीवर्दे विवर्जयेत् ।
पद्माग्नौ विष्णुगायत्र्या सहस्रं जुहुयात्ततः ॥ १५ ॥
कपालमस्थि केशं वा नखदन्तं तुषं तु वा ।
भस्मपाषाणशल्यादि तत्काले दृश्यते यदि ॥ १६ ॥
अपहाय च सर्वत्र आपोहिष्ठेति मन्त्रतः ।
पञ्चगव्यैस्समभ्युक्ष्य वास्तुहोमं यजेत्पुनः ॥ १७ ॥
तत्कर्षणविहीने च हीने बीजादिनापने ।
सद्यः कर्तुमशक्तस्य कालवापनहीनतः ॥ १८ ॥
अब्जाग्नौ रात्रिसूक्तेन विष्णुसूक्तेन वैष्णवैः ।
तथा गोदानसूक्तेन विच्छिन्नैश्च यथाक्रमम् ॥ १९ ॥
हुत्वा तद्बीजदानं च कृत्वा संशोध्य तां भुवम् ।
पूर्ववत्कर्षणं कृत्वा दूर्वादीनि तृणानि च ॥ २० ॥
पलालानि च तद्भूमौ सर्वत्रापि विकीर्य च ।
बहुगास्तत्र चानीय गोभ्यस्तानि निवेदयेत् ॥ २१ ॥
तत्काल एव सर्वाणि गुरुं प्रति निवेदयेत् ।
बीजानां वापनं कृत्वा प्रमादे चान्तरे यदि ॥ २२ ॥
उप्तबीजेषु वन्ध्यत्वादप्ररोहिषु तेषु च ।
अनिवेदिते गवां सस्ये तस्मिन्नष्टे तथैव च ॥ २३ ॥
प्रायश्चित्तं तु पूर्वोक्तं हुत्वा तत्र तृणानि च ।
पूर्ववद्गास्समानीय ताभ्यस्तानि निवेदयेत् ॥ २४ ॥

आद्यं देवं समुद्दिश्य गृहीता यदि चेद्धरा ।
तां भुवं च तदन्येषां न गृह्णीयात्कदाचन ॥ २५ ॥

अन्यदीयां प्रगृह्णीयात्सर्वेशार्थं विनश्यति ।
विष्वक्सेनार्चने हीने तद्धोमं च सहस्रकम् ॥ २६ ॥

तिलसर्षपमिश्रेण जुहुयाच्चरुणा क्रमात् ।
शक्तस्सामृतमारुह्य कारयेद्धारकं विना ॥ २७ ॥

तरुणालयहीने तु सर्वं निष्फलमुच्यते ।
तस्मात्सर्वत्र यत्नेन प्रायश्चित्तं यजेत्क्रमात् ॥ २८ ॥

अब्जाग्नावब्जपुष्पैश्च घृताक्तैश्च सुहूयताम् ।
रात्रिसूक्तं च जुहुयात्पारमात्मिकमेव च ॥ २९ ॥

ईकारादिसमायुक्तं शान्त्यर्थं जुहुयाद्बुधः ।
वृषभांश्च यथाशक्त्या दक्षिणां च ददेत्पुनः ॥ ३० ॥

बालालयार्चनं कुर्यात् पश्चात्कर्म समाचरेत् ।
अलाभे हैमबिम्बानां लब्धबिम्बं समाहरेत् ॥ ३१ ॥

अलाभे नाम रूपं वा बिम्बमुद्दिश्य वार्चयेत् ।
सहस्रं वैष्णवं हुत्वा विधिना स्थापयेत्पुनः ॥ ३२ ॥

वास्तुहोमविहीने तु होमं तत्पाञ्चभौतिकम् ।
वैष्णवं चैव जुहुयान्महाव्याहृतिसंयुतम् ॥ ३३ ॥

पुण्याहे तु विहीने च विप्रान् भक्त्यैव पूजयेत् ।
कपालास्थ्यादिसंदृष्टे ब्रह्मपद्मावटे तथा ॥ ३४ ॥

वैष्णवं भूमिदैवत्यं ब्राह्मं हुत्वा शताष्टकम् ।
खनित्वाप्यत्र वै कुर्याद्ब्रह्मपद्मावटक्रियाः ॥ ३५ ॥

वैष्णवं भूमिदैवत्यं प्राजापत्यं च हूयते ।
घटसूचीप्रभिन्ने च जनानां भयसंकुले ॥ ३६ ॥

कलहे रुधिरस्रावे वैष्वक्सेनं यजेत् क्रमात् ।
गारुडं वैष्णवं चैव ब्राह्ममैन्द्रं च हूयते ॥ ३७ ॥

रात्रिसूक्तं च हुत्वा तु प्राजापत्यं च हूयते ।
वामावर्ते जले तस्मिन् पद्मावर्तावटे यदि ॥ ३८ ॥

वारुणं तत्र होतव्यं वायव्यं भूमिदैवतम् ।
सङ्कुलं चेत्तदा वारि ब्राह्मं हुत्वा सवारुणम् ॥ ३९ ॥

स्पन्दने चलने चैव विच्छिन्नं तत्र वै यजेत् ।
वारुणं वैष्वक्सेनं च होतव्यमिति शासनम् ॥ ४० ॥

पद्मे गर्तोत्तरे तस्मिन्पार्श्वस्थे च विदिक्स्थिते ।
स्यन्दने तत्र कौटिल्ये परिमाणे च भेदने ॥ ४१ ॥

ब्राह्मं तथैव होमं च वारुणं भार्गवं यजेत् ।
स्फुटिते च तथा पद्मे ब्राह्ममप्यार्षसंयुतम् ॥ ४२ ॥

शङ्कुस्थापनहीने तु परिषद्धोममाचरेत् ।
आरभ्य मुख्यमार्गं तु तद्गौणं कारयेद्यदि ॥ ४३ ॥

अनुमान्य च तं देवं शान्तिं हुत्वा यथाक्रमम् ।
दक्षिणां च ददेद्देवं भक्त्याभ्यर्च्य निवेदयेत् ॥ ४४ ॥

आरब्धं तु यथापूर्वं तथैव पुनराचरेत् ।
आद्येष्टकक्रियायां तु न्यूने मन्त्रविपर्यये ॥ ४५ ॥

इष्टकाग्रे शिलाग्रे च विपर्यासे तथैव च ।
रत्नन्यासविहीने च सर्वदैवत्यपूर्वकम् ॥ ४६ ॥

वैष्णवं विष्णुसूक्तं च पुरुषसूक्तं तथैव च ।
मिन्दाहुतिं महीसूक्तं विच्छिन्नं जुहुयात्क्रमात् ॥ ४७ ॥

पूर्वोक्तेन विधानेन कारयेदिति शासनम् ।
विमाने प्रस्तरे तस्मिन्नलङ्कारे च सर्वशः ॥ ४८ ॥

हीने चाङ्गे विमाने तु प्रतिबन्धविपर्यये ।
द्वारस्याभ्यन्तरस्यापि भित्तौ हीनाधिके तथा ॥ ४९ ॥

न्यक्षादीनां चतुर्णां च चतुर्होमं विधीयते ।
चतुर्मध्ये पौण्डरीकमब्जहोमं समाचरेत् ॥ ५० ॥

रात्रिसूक्तं च जुहुयात्पौरुषं सूक्तमेव च ।
सहस्राहुतिपर्यन्तं यथोक्तं कारयेद्बुधः ॥ ५१ ॥

स्वस्ति चैवेह स्वाहेति प्रजापतय इत्यपि ।
अग्निर्धीमतये स्वाहा आदित्येभ्य इति ब्रुवन् ॥ ५२ ॥

विश्वेभ्यो देवेभ्यश्चेति मरुद्गणेभ्य इत्यपि ।
भूरग्नये चेत्युक्त्वा तु भुवो वायव इत्यपि ॥ ५३ ॥

सुवरादित्याय इत्युक्त्वा भूर्भुवस्सुवरित्यपि ।
एतैर्मन्त्रैश्च दशभिश्शतशो जुहुयात्क्रमात् ॥ ५४ ॥

सहस्राहुतिमित्येवं वदन्ति मुनिसत्तमाः ।
गर्भन्यासक्रियाहीने कालातीते विपर्यये ॥ ५५ ॥

वैष्णवं भूमिदैवत्यं श्रीदैवत्यं तथैव च ।
विष्णुसूक्तं च जुहुयात्पौरुषं सूक्तमेव च ॥ ५६ ॥

मिन्दाहुतीश्च विच्छिन्नं महीसूक्तं यजेत्पुनः ।
यथोक्तेन विधानेन गर्भं सम्यग्विधाय च ॥ ५७ ॥

सूर्धेष्टकाया न्यूने च कालातीते विपर्यये ।
आद्येष्टकायां यत्प्रोक्तं प्रायश्चित्तं सुहूयताम् ॥ ५८ ॥
अङ्गहोमं च हुत्वैव पूर्वोक्तविधिनाचरेत् ।
सुधायाश्च क्रियाहीने वर्णलेपविपर्यये ॥ ५९ ॥
सहस्राहुतिमब्जाग्नौ जुहुयाद्वैष्णवं पुनः ।
अग्न्युल्काशनिधूमाद्यैर्दोषयुक्ते च मन्दिरे ॥ ६० ॥
ईकारादींश्च हुत्वा तु पारमात्मिकमेव च ।
मिन्दाहुतिं च जुहुयाद्विच्छिन्नेन समायुतम् ॥ ६१ ॥
ब्राह्मणान् भोजयित्वा तु गुरवे दक्षिणां ददेत् ।
नवीकरणं तु यः कुर्याद्यथायोग्येन वस्तुना ॥ ६२ ॥
भित्तिहीने तथा हीने कपोते कूटशालके ।
शिखरे स्थूपिकायां तु महादोषो भविष्यति ॥ ६३ ॥
जुहुयात्तस्य शान्त्यर्थं विष्णुसूक्तं तथैव च ।
विमानस्याङ्गहोमं च हुत्वा पौरुषमेव च ॥ ६४ ॥
सहस्राहुतिकं हुत्वा गुरवे दक्षिणां ददेत् ।
वल्लीकर्म ततः कुर्याच्छिल्पिभिः कर्मवित्तमैः॥ ६५ ॥
वृक्षवल्लीतृणादौ तु प्ररूढे तु विमानके ।
हुत्वा वृक्षाधिदैवत्यं गुरवे दक्षिणां ददेत् ॥ ६६ ॥
उद्धृत्य शिल्पिना पश्चान्नवीकरणमाचरेत् ।
दारुग्रहणकाले तु विपरीतं भवेद्यदि ॥ ६७ ॥
स्नात्वा स्नानविधानेन यजमानयुतो गुरुः ।
अब्जाग्नौ रात्रिसूक्तं तु विश्वजित्सूक्तमेव च ॥ ६८ ॥

विष्णुसूक्तसमायुक्तं वैष्णवं जुहुयात्क्रमात् ।
विमाने ध्रुवबेरं तु प्रतिष्ठाप्य ततःपरम् ॥ ६९ ॥

ध्रुवबेरे तथा हीने मासातीते तु बुद्धिमान् ।
स्वायम्भुवाग्निं सन्धाय विष्णुसूक्तं यजेद्बुधः ॥ ७० ॥

विच्छिन्नं चैव हुत्वा तु मिन्दाहुत्या च हूयते ।
सप्त इध्मांश्च जुहुयाद्देवं चैवानुमान्य च ॥ ७१ ॥

भूमिदानं ततः कृत्वा तत्तत्कर्म समाचरेत् ।
द्वितीये पूर्ववद्धुत्वा दक्षिणां च ददेच्छुभाम् ॥ ७२ ॥

तृतीये त्रिगुणं कुर्याद्देवं संवत्सरान्तकम् ।
सहस्राहुति हुत्वा तु विष्णुसूक्तसमन्वितम् ॥ ७३ ॥

सहस्रभोजनं कृत्वा गुरवे दक्षिणां ददेत् ।
संवत्सरमतीते तु पौण्डरीकं तु कारयेत् ॥ ७४ ॥

प्राच्यामाहवनीयं तु अन्वाहार्यं तु दक्षिणे ।
प्रतीच्यां गार्हपत्यं तु आवसथ्यं तथोत्तरे ॥ ७५ ॥

आघारं पूर्ववत्कृत्वा सहस्राहुति वैष्णवम् ।
विष्णुसूक्तं च जुहुयात्तद्धोमे च तथाष्टकम् ॥ ७६ ॥

दिग्दैवत्यं च हुत्वा तु दक्षिणां च ददेत्तथा ।
विप्राणां भोजनं कृत्वा दक्षिणां च स्वशक्तितः ॥ ७७ ॥

द्वितीये द्विगुणं कुर्यात्तृतीये त्रिगुणं चरेत् ।
एवं तु वर्धयित्वा तु द्वादशाब्दं प्रति प्रति ॥ ७८ ॥

द्वादशाब्दे व्यतीते तु कर्षणादीनि कारयेत् ।
स्वायम्भुवाग्निमध्ये तु यद्देवादि सुहूयते ॥ ७९ ॥

पञ्चवारुणसंयुक्तं जुहुयात्पारमात्मिकम् ।
ईकारादीनि हुत्वा तु अङ्गहोमं ततःपरम् ॥ ८० ॥

जुहुयात्पौरुषं सूक्तं विष्णुसूक्तमतःपरम् ।
एवं हुत्वैव शान्त्यर्थं ब्राह्मणान् भोजयेत्पुनः ॥ ८१ ॥

पञ्चनिष्कं सुवर्णं च दद्यादाचार्यदक्षिणाम् ।
वास्तुहोमं ततो हुत्वा पुण्याहं वाचयेत्ततः ॥ ८२ ॥

भुवङ्गे च पतङ्गे च कवाटे बोधिकोत्तरे ।
एतत्स्थूणान्तरादौ च दोषयुक्ते विशेषतः ॥ ८३ ॥

प्रमाणहीने वृद्धे च जीर्णे हीने च तत्त्यजेत् ।
अन्यं सङ्गृह्य विधिना प्रमाणं च सुयोजयेत् ॥ ८४ ॥

आपोहिष्ठादिभिः प्रोक्ष्य वैष्णवं जुहुयाच्छतम् ।
पूर्वं यथाप्रमाणं तु तत्प्रमाणेन योजयेत् ॥ ८५ ॥

प्रोक्तदारोरलाभे तु दारुमन्यं च याज्ञिकम् ।
गृहीत्वा पूर्ववच्चैव तद्दैवत्यं च हूयते ॥ ८६ ॥

विष्णुसूक्तं च हुत्वा तु वैष्णवं जुहुयाच्छतम् ।
रत्नानामप्यलाभे तु परिषिच्य च पावकम् ॥ ८७ ॥

अग्नेर्दक्षिणतः पार्श्वे रत्नेशं विष्णुमर्चयेत् ।
अग्नीषोमीयं हुत्वैव गृहीत्वैवामृताश्मकम् ॥ ८८ ॥

तत्तद्द्रव्यमिति ध्यात्वा तत्तन्मन्त्रमुदीरयन् ।
पूर्वोक्तेन विधानेन रत्नन्यासं करोति वै ॥ ८९ ॥

रत्नेषु तेषु सर्वत्र हीने चैकाङ्गुलीयकान् ।
हेम्ना वा रजतेनाथ ताम्रेणैवापि कारयेत् ॥ ९० ॥

शूलं विपर्ययेणैव स्थापयेद्यदि नश्यति ।
देवालयादुत्तरतः पूर्वोक्तं होममाचरेत् ॥ ९१ ॥

हुत्वा तु पौरुषं सूक्तं दक्षिणां च ददेत्पुनः ।
यथोक्तेन विधानेन शूलं कृत्वा विचक्षणः ॥ ९२ ॥

अलाभे सर्वबीजानां यवं प्रतिनिधिं हरेत् ।
अलाभे सर्वधातूनां पारदं च समाहरेत् ॥ ९३ ॥

आत्मसूक्तं च हुत्वा तु श्रीसूक्तं च सुहूयते ।
विष्णुसूक्तं च हुत्वा तु पश्चात्कर्म समाचरेत् ॥ ९४ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे भूपरीक्षादिप्रायश्चित्तविधिर्नाम षट्षष्टितमोऽध्यायः ॥

---

## सप्तषष्टितमोऽध्यायः

आलयस्य विपर्यासेऽप्यथ बेरविपर्यये ।
शूलदारुविपर्यासे कल्पनादि विपर्यये ॥ १ ॥

ब्राह्मं च विष्णुसूक्तं च गारुडं सौम्यमेव च ।
प्राजापत्यं च रौद्रं च सहस्रं जुहुयात्क्रमात् ॥ २ ॥

पूर्वोक्तेनैव मार्गेण कारयेत्तद्विधानतः ।
शिलाया वाथ दारोर्वा मुखं पार्श्वं तथैव च ॥ ३ ॥

दृष्टिमूर्ध्वमधस्सम्यग्ज्ञात्वैव स्थापयेद्बुधः ।
अज्ञानात्तु विपर्यासं देवरूपं कृतं यदि ॥ ४ ॥

स्थापितं तु तदज्ञानादाभिचारिकमुच्यते ।
राष्ट्रस्य यजमानस्य राज्ञो दोषो भवेन्महान् ॥ ५ ॥

प्रजापीडा भवेत्क्षिप्रं व्याधिर्मरणमेव च ।
तस्मात्सर्वप्रयत्नेन क्षिप्रं शान्तिं च कारयेत् ॥ ६ ॥

आलयस्योत्तरे कुर्यादब्जाग्निं च सलक्षणम् ।
हुत्वा तु पौरुषं सूक्तमतोदेवादि वैष्णवम् ॥ ७ ॥

ईकारादींश्च जुहुयादङ्गहोममतःपरम् ।
पञ्चवारुणसंयुक्तं जयाभ्यातानसंयुतम् ॥ ८ ॥

परिषद्देवतानां च क्रमान्मन्त्रैस्सुहूयताम् ।
पूर्ववद्विधिना कृत्वा स्थापयेत्तद्विचक्षणः ॥ ९ ॥

उपबाह्वोः प्रकोष्ठे च हस्ते हस्ततले तथा ।
ऊर्वोस्तथैव जङ्घायां पादे पादतले तथा ॥ १० ॥

तथैव पार्श्वदण्डे च कक्षवक्षःस्थलेऽपि च ।
दारोः प्रमाणं हीनं च अधिकं च न चाचरेत् ॥ ११ ॥

साङ्गोपाङ्गेषु सर्वत्र हीनं चैकाङ्गुलं तथा ।
हेम्ना वा रजतेनापि ताम्रेणैवाथ पूरयेत् ॥ १२ ॥

शूलं विपर्ययेणैव स्थापयेद्यदि नश्यति ।
देवालयादुत्तरतः पूर्वोक्तं होममाचरेत् ॥ १३ ॥

हुत्वैव पौरुषं सूक्तं दक्षिणां च ददेत्पुनः ।
यथोक्तेन विधानेन शूलं कृत्वा विचक्षणः ॥ १४ ॥

ब्राह्मणान् भोजयित्वा तु पूर्ववत्स्थापयेत्क्रमात् ।
यजमानविपर्यासे चैन्द्रं रौद्रं यजेत्तथा ॥ १५ ॥

आचार्यस्य विपर्यासे मुनीनां होममाचरेत् ।
आचार्यऋत्विजां तत्र भर्त्सने शपने तथा ॥ १६ ॥

हनने च तथा रौद्रं वैष्णवं च यजेद्बुधः ।
तानुपास्यानुमान्यैव पश्चात्कर्म समाचरेत् ॥ १७ ॥

गुरोश्च यजमानस्य कलहः संभवेद्यदि ।
वैष्णवं ब्रह्मदैवत्यं भौतिकं जुहुयात्ततः ॥ १८ ॥

सुवर्णपशुभूम्यादीन् दत्त्वा तमनुमान्य च ।
प्रसन्ने तु गुरौ तस्मिन् पश्चाच्छेषं समाचरेत् ॥ १९ ॥

पक्षिश्वानर्हपश्वाद्यैः कपिसूकरमूषकैः ।
दूषितां मृत्तिकां चेत्तु त्यक्त्वान्यां विधिना हरेत् ॥ २० ॥

भूदैवत्यं च हुत्वा तु पारमात्मिकसंयुतम् ।
ईकारादींस्ततो हुत्वा यद्देवादिसमन्वितम् ॥ २१ ॥

एवं कृत्वा विधानेन मृत्संस्कारं समाचरेत् ।
मृदां स्नेहस्य चूर्णस्य कषायाद्यौषधस्य च ॥ २२ ॥

न्यूने संस्कारहीने च प्रयोगस्य विपर्यये ।
रज्जुबन्धेऽष्टबन्धे च शर्करालेपने तथा ॥ २३ ॥

न्यूने विपर्यये हीने प्रयोगस्य विपर्यये ।
वैष्णवं पौरुषं चैव पाञ्चभौतिकसंयुतम् ॥ २४ ॥

ब्राह्ममैन्द्रं त्रयस्त्रिंशद्देवताभ्यश्च हूयते ।
पूर्वोक्तेन विधानेन तत्तत्कर्म समाचरेत् ॥ २५ ॥

वर्णव्यतिक्रमे चैव प्राजापत्यं सपौरुषम् ।
अर्धचित्रं न कुर्वीत लोहजं मृण्मयं तथा ॥ २६ ॥

दारवं च तथा बेरमाभिचारिकमेव च ।
स्थापितं च विसृज्यान्यं बेरं सङ्गृह्य यत्नतः ॥ २७ ॥

अब्जाग्निमध्ये जुहुयाद्ब्रह्मसूक्तं सवैष्णवम् ।
विच्छिन्नं चैव हुत्वा तु यजेन्मिन्दाहुतिं पुनः ॥ २८ ॥

ब्राह्मणान् भोजयित्वा तु दक्षिणां तु ददेद्गुरोः ।
पूर्वोक्तेन विधानेन स्थापयेदिति शासनम् ॥ २९ ॥

शैलजं मणिबिम्बं च अर्धचित्रं न दोषकृत् ।
शैलजं ध्रुवबेरं च वर्णयुक्तं च कारयेत् ॥ ३० ॥

वस्त्रमाभरणं पद्मं किरीटं शङ्खचक्रकौ ।
उपवीतं प्रलम्बं च श्रीवत्सं कुण्डलद्वयम् ॥ ३१ ॥

एवमाद्यैश्च संयुक्तं बिम्बं कुर्याद्विशेषतः ।
एतैर्हीनं यदि स्याच्चेत्पुनरेतैस्समायुतम् ॥ ३२ ॥

कारयित्वैव जुहुयाद्वैष्णवं ब्राह्मसंयुतम् ।
ऐन्द्रं च विष्णुसूक्तं च सौरं सौम्यसमायुतम् ॥ ३३ ॥

हुत्वा च पौरुषं सूक्तं ब्राह्मणान् भोजयेत्पुनः ।
पूर्वोक्तविधिना सम्यक् पुनः स्थापनमाचरेत् ॥ ३४ ॥

बेरे तु कृत्रिमं वर्णमज्ञानाल्लेपयेद्यदि ।
निर्यासेन कपित्थस्य युक्ताद्भिः क्षालयेत्पुनः ॥ ३५ ॥

प्लोतवस्त्रेण संमृज्य पौण्डरीके सुहूयते ।
तस्माद्वैश्वानरं सूक्तं विष्णुसूक्तसमन्वितम् ॥ ३६ ॥

ब्राह्मं च वैष्णवं हुत्वा जयाद्यैश्च सुहूयते ।
तस्यानुसारवर्णांश्च लेपयेच्च विधानतः ॥ ३७ ॥

तथाक्षिमोचने हीने कालातीते प्रमादतः ।
भूतादीनां च दैवत्यं यद्देवादि च हूयते ॥ ३८ ॥

ईकारादींस्ततो हुत्वा पारमात्मिकसंयुतैः ।
पूर्वोक्तेन क्रमेणैव प्रायश्चित्तं यजेद्बुधः ॥ ३९ ॥

ध्रुवं तु कौतुकं वापि स्थापितं तु शिलामयम् ।
वर्णयुक्तं पुनः कुर्यात्तद्धीने कोपकृद्धरिः ॥ ४० ॥

वर्णे विवर्णे सम्प्राप्ते पीठं कृत्वा तु मध्यमे ।
यावद्वर्णस्य संयोगस्तावत्कालं तु पूजयेत् ॥ ४१ ॥

पीठे वा कौतुके वापि विष्णुसूक्तं सवैष्णवम् ।
ब्राह्मं च वैष्णवं हुत्वा जयाद्यैश्च सुहूयताम् ॥ ४२ ॥

ईकारादींस्ततो हुत्वा पारमात्मिकसंयुतम् ।
अष्टाशीतिं ततो हुत्वा वर्णयुक्तं पुनश्चरेत् ॥ ४३ ॥

अक्षिमोचनहीने च अष्टाशीतिं समाहुनेत् ।
पूर्वोक्तेन क्रमेणैव प्रायश्चित्तं यजेद्बुधः ॥ ४४ ॥

पूर्ववद्विधिना सम्यगक्षिमोचनमाचरेत् ।
कर्षणादिप्रतिष्ठायां हीने न्यूने विपर्यये ॥ ४५ ॥

तस्य सर्वस्य शान्त्यर्थमक्ष्युन्मेषणपूर्वकम् ।
सौरं च पौण्डरीकाग्नौ कापिलेन घृतेन वै ॥ ४६ ॥

विष्णुसूक्तं च जुहुयात्पौरुषं सूक्तमेव च ।
यद्देवादींस्ततो हुत्वा पारमात्मिकमेव च ॥ ४७ ॥

ईकारादींश्च जुहुयादष्टाशीतिमतःपरम् ।
प्राजापत्यं तथा सौम्यमैन्द्रमाग्नेयमेव च ॥ ४८ ॥

सौरं सौम्यं च जुहुयादङ्गहोमं सवैष्णवम् ।
महाव्याहृतिभिर्हुत्वा परिषिच्य च पावकम् ॥ ४९ ॥

हीनक्रियासु सर्वासु प्रायश्चित्तमिदं स्मृतम् ।
ब्राह्मणान् भोजयित्वा तु दक्षिणां गुरवे ददेत् ॥ ५० ॥

पुण्याहं वाचयित्वा तु स्वस्तिघोषसमन्वितम् ।
क्रियाहीने तु सर्वत्र प्रायश्चित्तमिदं भवेत् ॥ ५१ ॥

गवादिदक्षिणां दत्त्वा पश्चात्कर्म समारभेत् ।
इष्टकाभिस्सुधाभिर्वा कण्टकक्रिमिसंयुतैः ॥ ५२ ॥

अन्यैश्च काष्ठैर्मृद्भिश्च असन्मृद्भिश्च दूषितैः ।
दूषिताभिश्शिलाभिर्वा दोषयुक्तैश्च दारुभिः ॥ ५३ ॥

कालायसैश्च पाषाणैश्चूर्णैर्मृद्भिः समायुतम् ।
लशुनैश्च शणैरन्यैरयुक्तैर्यैश्च कैश्च वा ॥ ५४ ॥

संयुक्तं तु कृते बेरे कृते पक्वेऽथ मृण्मये ।
पैशाचैरासुरैर्द्रव्यैरतिरक्तमृदैव वा ॥ ५५ ॥

अतिकृष्णमृदा वापि बेरे दोषसमायुते ।
अशूले रज्जुहीने च मृद्धीने चाप्रमाणतः ॥ ५६ ॥

अथवा शर्कराहीने वस्त्रहीने तथैव च ।
कृशे स्थूले च दीर्घे च ह्रस्वे चानुक्तवर्णगे ॥ ५७ ॥

सुधयैव कृते बेरे तथैवेष्टकया कृते ।
अन्यानुक्तकृते वापि कृत्तिमाभरणान्विते ॥ ५८ ॥
एतैर्दोषैस्समायुक्ते महाबेरे कृतेऽपि च ।
आभिचारिकमित्युक्तं सर्वनाशस्तदा भवेत् ॥ ५९ ॥

प्रतिष्ठितं चेदज्ञानाद्यजमानो विनश्यति ।
प्रजापीडा भवेन्नित्यं व्याधिश्च मरणं भवेत् ॥ ६० ॥

युद्धं घोरं भयं चैव बाधास्सर्वा भवन्ति च ।
तस्मात्सर्वप्रयत्नेन क्षिप्रं शान्तिं च कारयेत् ॥ ६१ ॥

आलयस्योत्तरे कुर्यादब्जाग्निं च सलक्षणम् ।
अग्निं प्रज्वाल्य विधिना परिषिच्य ततः क्रमात् ॥ ६२ ॥

पारमात्मिकमोंकारानष्टाशीत्यङ्गहोमकम् ।
ब्रह्मसूक्तसमायुक्तं श्रीसूक्तेन समायुतम् ॥ ६३ ॥

दुर्गासूक्तं च जुहुयाद्विष्णुसूक्तमतःपरम् ।
पुरुषसूक्तं च हुत्वैव विश्वजित्सूक्तमेव च ॥ ६४ ॥

प्राजापत्यं च सौम्यं च ब्राह्ममाग्नेयमेव च ।
सौम्यं सौरसमायुक्तं वैष्णवं जुहुयाद्बुधः ॥ ६५ ॥

एवं हुत्वा महाशान्तिं समस्तदुरितापहम् ।
ब्राह्मणान् भोजयित्वा तु दक्षिणां तु ददेत्पुनः ॥ ६६ ॥

ऋत्विजः पूजयित्वैव वस्त्राभरणकुण्डलैः ।
आचार्यं पूजयित्वैवं स्वर्णनिष्कत्रयं ददेत् ॥६७ ॥

बालालये च देवेशं प्रतिष्ठाप्य विधानतः ।
बेरं तु दोषयुक्तं चेद्वर्जयेत्तं प्रयत्नतः ॥ ६८ ॥

सलक्षणं च कृत्वा तु स्थापयेत्पूर्ववत्क्रमात् ।
शिलाग्रहणवद्धुत्वा दारुजं चेद्ध्रुवं पुनः ॥ ६९ ॥

हुत्वा चाग्नौ महाशान्तिं पश्चात्कर्म समाचरेत् ।
कृत्वा यथोक्तं तत्कर्म पश्चात्कर्म समापयेत् ॥ ७० ॥

समाप्तेरथ तद्बिम्बे छिन्ने भिन्ने प्रमादतः ।
महादोषो भवेत्तत्र तद्ग्रामयजमानयोः ॥ ७१ ॥

कुर्यात्तस्य महाशान्तिमब्जाग्नौ वै विशेषतः ।
विच्छिन्नं चैव हुत्वा तु ब्राह्मणान् भोजयेत्पुनः ॥ ७२ ॥

दक्षिणां गुरवे दद्यात्पूर्ववत्सर्वमाचरेत् ।
आर्द्राद्यनुक्तनक्षत्रे चरराशौ च निन्दिते ॥ ७३ ॥

उल्काशन्योश्च पाते च दिग्दाहे पांसुवर्षके ।
वर्षधारातिसम्पाते चन्द्रसूर्योपरागयोः ॥ ७४ ॥

चैत्यवृक्षनिपाते च भूमिकम्पदिने तथा ।
दोषयुक्ते च नक्षत्रे शर्वर्यां वा तथैव च ॥ ७५ ॥

स्थापितं चेत्तदज्ञानात्पूर्ववद्धोममाचरेत् ।
सहस्राहुतिमिष्ट्वैव सहस्रं वैष्णवं च वै ॥ ७६ ॥

परिषद्देवतानां च तत्तन्मन्त्रैश्च हूयते ।
आचार्यस्थापकादीनां शक्तितो दक्षिणां ददेत् ॥ ७७ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे आलयादिविपर्यास-
प्रायश्चित्तविधिर्नाम सप्तषष्टितमोऽध्यायः ॥

---

## अष्टषष्टितमोऽध्यायः ॥

आयसैश्चारकूटैश्च त्रपुलोहैश्च मिश्रितैः ।
कौतुकं च कृतं चेत्तदाभिचारिकमुच्यते ॥ १ ॥

अज्ञानात् स्थापिते चैव सर्वं चाशु विनश्यति ।
तद्विसृज्य च पद्माग्नौ मन्त्रैः परिषदामपि ॥ २ ॥

पौरुषं वैष्णवं सूक्तं ब्रह्मसूक्तं च हूयते ।
श्रीसूक्तं च महीसूक्तं व्याहृत्यन्तं च हूयते ॥ ३ ॥

दक्षिणां च ततो दद्याद्ब्राह्मणान् भोजयेत्ततः ।
सलक्षणं च तत्कृत्वा कौतुकं स्थापयेद्बुधः ॥ ४ ॥

ध्रुवबेरं तु यद्रूपं तद्रूपं कौतुकं भवेत् ।
आसनं स्थानकं चाथ शयनं चाथ कौतुकम् ॥ ५ ॥

आसने स्थानकं वापि शयाने स्थानकासने ।
अन्यथा स्थापिते चास्मिन्नज्ञानेन विपर्यये ॥ ६ ॥

त्रयस्त्रिंशान् गणान् हुत्वा वैष्णं सौरसमन्वितम् ।
गारुडं वैष्वक्सेनं च पाञ्चभौतिकसंयुतम् ॥ ७ ॥

दुर्गासूक्तं विष्णुसूक्तं श्रीसूक्तं पौरुषं यजेत् ।
दक्षिणां च ततो दद्याद्ब्राह्मणान्भोजयेत्ततः ॥ ८ ॥

पुण्याहं वाचयित्वा तु यथोक्तं कौतुकं तथा ।
पूर्वोक्तविधिना सम्यक्प्रतिष्ठां कारयेद्बुधः ॥ ९ ॥

पौराणिके विमाने तु यथापूर्वं तथैव च ।
अन्यरूपं न कर्तव्यं कृत्वा तु स विनश्यति ॥ १० ॥

अन्यथा तु प्रतिष्ठा चेदब्जाग्नौ होममाचरेत् ।
विष्णुसूक्तं च जुहुयात्पौरुषं सूक्तमेव च ॥ ११ ॥

एवं हुत्वा विधानेन दक्षिणां च ददेत्पुनः ।
यथा पूर्वं तथा सम्यक् प्रतिष्ठामाचरेद्बुधः ॥ १२ ॥

सुवर्णादन्यलोहेन मिश्रलोहेन कौतुकम् ।
कृत्वा तत्स्थापितं चेत्तु महादोषो भविष्यति ॥ १३ ॥

आलयाद्दक्षिणे कुर्यादब्जकुण्डं सलक्षणम् ।
ब्राह्मं च सौरसौम्ये च आग्नेयं गारुडं यजेत् ॥ १४ ॥

हुत्वा पुरुषसूक्तं च विष्णुसूक्तं च हूयते ।
ईंकारादींश्च हुत्वा तु तद्बिम्बं च विसृज्य च ॥ १५ ॥

कारयेदुक्तलोहेन विधिना स्थापयेत्पुनः ।
लोहजं त्वर्चनाबिम्बं पूर्वं यत्तत्प्रतिष्ठितम् ॥ १६ ॥

त्यक्त्वान्यत्स्थापयेद्यत्तदाभिचारिकमुच्यते ।
दिग्देवतानामष्टानां प्रत्येकं होममाचरेत् ॥ १७ ॥

पुरुषसूक्तं च हुत्वा तु विष्णुसूक्तमतःपरम् ।
श्रीसूक्तं चैव जुहुयाद्दुर्गासूक्तं च वैष्णवम् ॥ १८ ॥

अङ्गहोमं ततो हुत्वा विश्वजित्सूक्तमेव च ।
एवं हुत्वा विधानेन शक्तितो दक्षिणां ददेत् ॥ १९ ॥

पूर्वं तद्बिम्बमादाय स्थापयेत्तद्विचक्षणः ।
स्फुटिते च विवर्णे च उक्तलक्षणवर्जिते ॥ २० ॥

जर्ज्झरैरपि संयुक्तेऽप्यन्तस्सुषिरसंयुते ।
एवं दोषसमायुक्ते कौतुके स्नपनेऽपि वा ॥ २१ ॥

अन्यद्बिम्बं समादाय प्रायश्चित्तं सुहूयताम् ।
इष्ट्वा च पौरुषं सूक्तं विष्णुसूक्तं च वैष्णवम् ॥ २२ ॥

यद्देवादि च हुत्वैव ब्राह्ममैन्द्रं च हूयताम् ।
वायव्यं गारुडं हुत्वा वैष्णवं च शताष्टकम् ॥ २३ ॥

महाव्याहृतिभिर्हुत्वा पूर्ववत्स्थापयेत्पुनः ।
कानकं राजतं ताम्रं शैलजं दारवं तथा ॥ २४ ॥

मुख्यं विहाय गौणं तु स्थापितं चेत्प्रमादतः ।
आलयस्योत्तरे पार्श्वे पौण्डरीके विधानतः ॥ २५ ॥

विष्णुसूक्तं दुर्गासूक्तं सूक्तं तत्पौरुषं यजेत् ।
ब्रह्मसूक्तं च हुत्वा तु रुद्रसूक्तं तथैव च ॥ २६ ॥

होमं चाहवनीयाग्नौ क्रमेणैव सुहूयताम् ।
वैष्णवं च ततो हुत्वा व्याहृत्या च समायुतम् ॥ २७ ॥

महाव्याहृतिसंयुक्तं तद्धोमं च शताष्टकम् ।
हुत्वैव विधिना सम्यक्स्थापयेदिति शासनम् ॥ २८ ॥

मधूच्छिष्टक्रियाहीने प्रायश्चित्तं यजेत्क्रमात् ।
ब्राह्मं सौरं च सौम्यं च सारस्वतसमन्वितम् ॥ २९ ॥

प्राजापत्यं च जुहुयादाग्नेयं चैव हूयते ।
वैष्णवं चैव जुहुयान्महाव्याहृतिसंयुतम् ॥ ३० ॥

ब्राह्मणान् भोजयित्वा तु गुरवे दक्षिणां ददेत् ।
पुंशिलाभिस्तु पुरुषं स्त्रियः स्त्रीभिस्तु कारयेत् ॥ ३१ ॥

स्त्रीभिर्नपुंसकैर्वाथ ध्रुवबेरं कृतं यदि ।
आभिचारिकमित्युक्तं तेन सर्वं विनश्यति ॥ ३२ ॥

स्थापितं च परित्यक्त्वा बेरमन्यं समाहरेत् ।
नपुंसकशिलाबेरं देवीयुक्तं परित्यजेत् ॥ ३३ ॥

त्यक्त्वा चान्यत्समादाय प्रायश्चित्तं यजेद्बुधः ।
यथोक्तशिलया बेरं प्रगृह्य च विधानतः ॥ ३४ ॥

पञ्चाग्नीन्साधयित्वा तु पौण्डरीकाग्निसंयुतान् ।
आघारं पूर्ववत्कृत्वा तानग्नीन् परिषिच्य च ॥ ३५ ॥

पारमात्मिकसंयुक्तमीङ्कारादि च हूयते ।
अष्टाशीतिं च हुत्वैव जयादि जुहुयात्पुनः ॥ ३६ ॥

रात्रिसूक्तं च जुहुयाद्विश्वजित्सूक्तमेव च ।
ब्राह्ममन्त्रं च हुत्वा तु विष्णुसूक्तं च हूयते ॥ ३७ ॥

पुरुषसूक्तं रौद्रं च दुर्गासूक्तमतःपरम् ।
जुहुयात्तत्क्रमेणैव सर्वहोमे शताष्टकम् ॥ ३८ ॥

पद्महोमं च जुहुयात्पाञ्चभौतिकसंयुतम् ।
पुण्याहं वाचयित्वैव ब्राह्मणान् भोजयेत्ततः ॥ ३९ ॥

गवादिभूमिदानं च कृत्वा चात्र विधानतः ।
वस्त्रोत्तरीयाभरणैर्हेमपुष्पाङ्गुलीयकैः ॥ ४० ॥

कुण्डलाभरणैरन्यैराचार्यं पूजयेत्ततः ।
एवं कृत्वा महाशान्तिं पश्चात्स्थापनमाचरेत् ॥ ४१ ॥

एकमेव विधिं वक्ष्ये प्रायश्चित्तं तदुत्तमम् ।
ननु चैव शिला दृष्ट्वा सिराविवरवर्जिताः ॥ ४२ ॥

ग्रन्थियुक्तास्सगर्भाश्च रूक्षाश्छिन्नाश्च वर्जिताः ।
स्फुटिता वक्रजास्तास्ता अधिकास्स्थूलमूर्तयः ॥ ४३ ॥

मृदवो लघवश्चैव लघुशब्दविवर्जिताः ।
शिलाजेषु च दोषेषु सर्वत्रैष विधिस्स्मृतः ॥ ४४ ॥

शैलजं मृण्मयं वाथ दारवं ताम्रमेव च ।
विमाने स्थापितं पूर्वं ध्रुवबेरं ततः परम् ॥ ४५ ॥

आदायान्यविमाने तु स्थापयेन्न कदाचन ।
अन्यत्र स्थापितं चेत्तु महाशान्तिं च हूयताम् ॥ ४६ ॥

तस्मादादाय तद्बिम्बं पूर्ववत्स्थापयेद्बुधः ।
अविधिकमलक्षण्यमयुक्तं चाप्रयोजकम् ॥ ४७ ॥

विरूपं वा विवर्णं वाप्यन्यद्दूषणसंयुतम् ।
तत्त्यक्त्वा विधिना कृत्वा लक्षणेन समायुतम् ॥ ४८ ॥

तदालये प्रतिष्ठाप्य शान्तिहोमं च हूयते ।
आलयाद्दक्षिणे कुर्यादब्जाग्निं च सलक्षणम् ॥ ४९ ॥

आधारं पूर्ववत्कुर्यादग्निं प्रज्वाल्य पूर्ववत् ।
अङ्गहोमं ततो हुत्वा तद्दैवत्यसमन्वितम् ॥ ५० ॥

तदालयगतानां च सर्वेषां चैव हूयते ।
व्याहृतिं तत्र जुहुयाद्विष्णुसूक्तसमन्वितम् ॥ ५१ ॥

ब्राह्मं पुरुषसूक्तं च वैष्णवं च सुहूयताम् ।
पद्महोमं च कर्तव्यं पारमात्मिकसंयुतम् ॥ ५२ ॥

एवमेव च हुत्वा तु दक्षिणां च ददेत्पुनः ।
ब्राह्मणान् भोजयित्वा तु पश्चात्स्थापनमाचरेत् ॥ ५३ ॥

कर्तुः स्मृतियुतं यत्र तत्रैवैष विधिक्रमः ।
दैविके चालये चार्षे क्षेत्रे नैष विधिर्भवेत् ॥ ५४ ॥

अविधिकमलक्षण्यमप्रमाणं न दोषकृत् ।
तस्मात्सर्वप्रयत्नेन यथा पूर्वं तथाचरेत् ॥ ५५ ॥

अन्यथा चेन्महादोष इति पूर्वजशासनम् ।
एकस्मिन्नालये बिम्बं स्थापितं कौतुकं तथा ॥ ५६ ॥

अन्यत्र स्थापितं चेत्तदज्ञानाद्वा प्रमादतः ।
व्याधिदुर्भिक्षपीडाद्यैर्विनाशं च भवेत्ततः ॥ ५७ ॥

क्षिप्रं शान्तिं ततः कुर्याद्दक्षिणादिसमन्वितम् ।
आलयादुत्तरे तद्वदब्जाग्निं च समाहरेत् ॥ ५८ ॥

आघारं पूर्ववत्कृत्वा वैष्णवं जुहुयाद्बुधः ।
तद्दैवत्यं च जुहुयात्परिषद्देवतान्वितम् ॥ ५९ ॥

ब्रह्मसूक्तेन संयुक्तं रुद्रसूक्तसमन्वितम् ।
पारमात्मिकमींकाराद्यष्टाशीत्यङ्गहोमकम् ॥ ६० ॥

रात्रिसूक्तं च जुहुयाद्विश्वजित्सूक्तमेव च ।
ब्राह्मणान् भोजयेत्पश्चाद्दक्षिणां च ददेत्पुनः ॥ ६१ ॥

आचार्यं पूजयित्वा तु पूर्वस्थाने तथैव च ।
पूर्वोक्तविधिना पश्चात्स्थापनं सम्यगाचरेत् ॥ ६२ ॥

ग्रामादीनां विनाशे च नाशे देवालयस्य च ।
पूर्वं तत्रार्चितं बिम्बमर्चाहीनं भवेद्यदि ॥ ६३ ॥

अन्यथा स्थापयित्वा तमर्चयेत्तु महत्फलम् ।
तेषां च संकुले बिम्बं नयेदन्यालये ततः ॥ ६४ ॥

चोरशत्रुभयाद्वापि आनयेत तथैव च ।
यावत्तदर्चनं युक्तं तावत्कालं च लौकिकम् ॥ ६५ ॥

प्रधानस्थानादन्यत्र यथालाभं समर्चयेत् ।
राजा राष्ट्रान्तरं जित्वा स्वबलादाहृतं यदि ॥ ६६ ॥

राष्ट्रान्तरस्थं देवेशं राज्यानीतं च यद्भवेत् ।
ध्रुवं चेदालयं कृत्वा तद्यागविधिना बुधः ॥ ६७ ॥

स्थापयेत्तत्र विधिना पूर्वोक्तेन विचक्षणः ।
लोहजं रत्नजं वाथ स्थापितं तु विधानतः ॥ ६८ ॥

कौतुकं बिम्बमप्यत्र स्थापयेदर्चयेद्बुधः ।
स्नापनादीनि च तथा स्थापयेदिति शासनम् ॥ ६९ ॥

भये तत्र विमुक्ते तु समानीय च तत्पुरीम् ।
पूर्वोक्तविधिना विद्वान् पुनः स्थापनमाचरेत् ॥ ७० ॥

बेरे तु लक्ष्मतो हीनं यद्यत्तत्फलमुच्यते ।
दक्षिणावनते मृत्युः पश्चिमे चार्थनाशनम् ॥ ७१ ॥

उत्तरे धनधान्यर्द्धिः कुलवृद्धिश्च पूर्वतः ।
कुक्षिच्छिद्रे तु दुर्भिक्षमुरश्छिद्रे धनक्षयः ॥ ७२ ॥

कृशे दीर्घे कृशत्वं स्यात्पार्श्वहीने सुहृत्क्षयः ।
कटीहीने पुत्रनाश उरो भार्याविनाशनम् ॥ ७३ ॥

जङ्घादोषो वाहनानां विनाशमुपपद्यते ।
मुखे च मुकुटे दोषैर्द्रव्यभोगायुषां क्षयः ॥ ७४ ॥

सर्वोपाङ्गविहीने तु सर्वनाशमवाप्नुयात् ।
प्रमाणे परिहीने तु देशग्रामविनाशकृत् ॥ ७५ ॥

पादगुल्फेषु दोषेण पादहानिस्तथैव च ।
कर्णनासाविहीने तु कर्णनासाविनाशकृत् ॥ ७६ ॥

भुजयोश्चक्रशङ्खौ च विहीनौ तु विनाशकौ ।
एते दोषास्समाख्याताः प्रतिमायां यथा तथा ॥ ७७ ॥

आलयाद्दक्षिणे पार्श्वे पौण्डरीकाग्निकुण्डके ।
आधारं पूर्ववत्कृत्वा चाग्निं प्रज्वाल्य मन्त्रतः ॥ ७८ ॥

पारमात्मिकर्मोंकारमष्टाशीतिश्च हूयते ।
तत्तद्दैवत्यं जुहुयात्सहस्रं चाष्टसंयुतम् ॥ ७९ ॥

ब्राह्मणान् भोजयित्वा च दक्षिणां च ददेत्पुनः ।
तत्तल्लक्षणसम्पूर्णं कारयित्वा यथाविधि ॥ ८० ॥

सलक्षणं कृतं बेरं विधिना स्थापयेद्यदि ।
ब्राह्मिकं मध्यमे स्थाने दैविकं तदनन्तरम् ॥ ८१ ॥

मानुषं दैविकान्तर्ये पैशाचं भित्तिपार्श्वतः ।
ब्रह्मस्थाने स्थापितं चेद्ब्रह्मक्षतविनाशनम् ॥ ८२ ॥

मानुष्ये न रमेद्देवः पैशाचे सर्वनाशनम् ।
मानुष्ये किञ्चिदाश्रित्य दैविके स्थानकं भवेत् ॥ ८३ ॥

पूर्वस्मिन्नेव संप्रोक्तं स्थानकासनयोस्स्थितिः ।
दैवमानुषभागाभ्यां शयनं च विशेषतः ॥ ८४ ॥

सुस्थितं विधिवत्स्थाप्य सुदृढं दक्षिणोन्नतम् ।
ऊर्ध्वदृष्टिमधोदृष्टिं नाचरेत्तिर्यगीरितम् ॥ ८५ ॥

लीनं छिन्नं तथाऽव्यक्तं स्थापयेन्न च धर्मवित् ।
ऋजुदृष्टिं सौम्यदृष्टिं स्थापयेदिति शासनम् ॥ ८६ ॥

एतेषामन्यथा चेत्तु शान्तिं तत्रैव कारयेत् ।
आलयात्पश्चिमे कुर्यादब्जाग्निं च सलक्षणम् ॥ ८७ ॥

आघारं पूर्ववत्कुर्यादग्निं प्रज्वाल्य मन्त्रतः ।
वैष्णवं चैव जुहुयात्तद्दैवत्यं शताष्टकम् ॥ ८८ ॥

ईकारादीनि हुत्वा तु चाष्टाशीतिस्तु हूयते ।
ब्राह्मणान् भोजयित्वा तु आचार्यं पूजयेत्तदा ॥ ८९ ॥

सलक्षणं च हुत्वा तु विधिना स्थापयेत्पुनः ।
ध्रुवस्य कौतुकस्यापि यथोक्तं पीठमाचरेत् ॥ ९० ॥

अधिके व्याधिपीडा स्याद्धीने च मरणं ध्रुवम् ।
समं चेद् धनधान्यादिपुत्रपौत्रविवर्धनम् ॥ ९१ ॥

अन्यथा स्थापितं चेत्तु प्रायश्चित्तं यजेत्पुनः ।
तद्दैवत्यं च जुहुयात्सहस्रं चाष्टसंयुतम् ॥ ९२ ॥

तदालयगतानां च सर्वेषां चैव हूयते ।
ब्राह्मणान् भोजयित्वा तु दक्षिणां च ददेत्पुनः ॥ ९३ ॥

सलक्षणं तथा पीठं कारयेत विचक्षणः ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे कौतुकद्रव्यप्रायश्चित्तविधिर्नामाष्टषष्टितमोऽध्यायः ॥

---

## एकोनसप्ततितमोऽध्यायः

अतःपरं प्रतिष्ठायां प्रायश्चित्तं वदाम्यहम् ।
आचार्येणाप्यनुक्तेन स्थापकाद्यैरचोदितैः ॥ १ ॥

यथोक्तगुणहीनैस्तैरुक्तदोषयुतैस्तथा ।
प्रतिष्ठायां कृतायां च प्रायश्चित्तं समाचरेत् ॥ २ ॥

पौण्डरीकाग्निमादाय परिषिच्य च पावकम् ।
त्रिरात्रं तु महाशान्तिं हुत्वा तद्दोषशान्तये ॥ ३ ॥

पुनः प्रतिष्ठा कर्तव्या यथोक्तविधिना ततः ।
आचार्यं कर्षणाकाले यथोक्तं वरयेद्बुधः ॥ ४ ॥

कर्षणादिप्रतिष्ठान्तं कर्म तेनैव कारयेत् ।
ऊर्ध्वेऽपि तत्र कर्तव्यं सर्वं तेनैव कारयेत् ॥ ५ ॥

स्थाने तु देवदेवस्य वृतश्शिष्येण यः पुरा ।
स्थानाचार्यमिति प्राहुर्विष्णवर्चाशास्त्रपारगम् ॥ ६ ॥

वैखानसेन सूत्रेण निषेकादिक्रियान्वितम् ।
पूर्वोक्तलक्षणैर्युक्तं ब्राह्मणं मुनिपुङ्गवाः ॥ ७ ॥

तस्याभावे तु युक्तांस्तु पुत्रानेव यथाक्रमम् ।
तदभावे तु शिष्येण तच्छिष्येणापि कारयेत् ॥ ८ ॥

तत्पुत्रादावयुक्ते तु तदनुज्ञातपूर्वकम् ।
तदन्यं युक्तमाचार्यं वरयेत्पूर्ववत्सुधीः ॥ ९ ॥

अन्यथा यजमानस्य ग्रामस्य च विपद्भवेत् ।
पौण्डरीकाग्निमादाय परिषिच्य च पावकम् ॥ १० ॥

हुत्वैव तु महाशान्तिं यथोक्तं कारयेत्पुनः ।
नक्षत्रे दोषयुक्ते च राशौ दोषसमायुते ॥ ११ ॥

प्रतिष्ठायां कृतायां च पुनः स्थापनमाचरेत् ।
अक्षिमोचनहीने च तथा चैवाधिवासने ॥ १२ ॥

कुर्यात्पुनः प्रतिष्ठां तु पूर्वोक्तेन विधानतः ।
बहुद्रव्येषु हीनेषु क्रियासु च बहुष्वपि ॥ १३ ॥

बहुष्वपि विपर्यासे मन्त्रहीने बहुष्वपि ।
कुम्भपूजाविहीने च ध्यानहीने विपर्यये ॥ १४ ॥

स्नपने च विहीने च हीने च शयने तथा ।
हौत्रशंसनहीने च देवाह्वाने तथैव च ॥ १५ ॥

प्रधानहोमे हीने च विपर्यासेषु तेषु च ।
उद्देशत्यागहीने च देवस्योत्थापने तथा ॥ १६ ॥

हीने त्रिषवणस्नाने तत्क्रियायां विपर्यये ।
रत्नादिन्यासहीने च पीठे वै कौतुकस्य च ॥ १७ ॥

आचार्यबुद्धिद्वेषे च प्रतिष्ठायां विशेषतः ।
यथोक्तेनैव मार्गेण प्रतिष्ठां पुनराचरेत् ॥ १८ ॥

तस्मिन् काले महोत्पाते दुर्निमित्तादिदर्शने ।
शिवास्वरादिदोषेषु दृष्टेष्वन्येषु चैव हि ॥ १९ ॥

एवं महाप्रतिष्ठायामुक्तदोषे विशेषतः ।
पुनः प्रतिष्ठा कर्तव्या तस्य दोषस्य शान्तये ॥ २० ॥

तस्यां पुनः प्रतिष्ठायां विशेषश्च प्रवक्ष्यते ।
अक्ष्युन्मेषाधिवासौ द्वौ रत्नादिन्यासमेव च ॥ २१ ॥

एतान् पुनः प्रतिष्ठायां नाचरेदिति शासनम् ।
अक्ष्युन्मोचनहीने तु कृत्वा चैवाक्षिमोचनम् ॥ २२ ॥

अधिवासनहीने तु पुनः कृत्वाधिवासनम् ।
रत्नादिन्यासहीने तु तान्न्यस्यत तथा च वै ॥ २३ ॥

पञ्चाग्नीनेव सभ्यादीन् कल्पयेत यथाविधि ।
पूर्वोक्तविधिना तेषु जुहुयादग्निषु क्रमात् ॥ २४ ॥

सभ्याग्निं पौण्डरीकाग्निमग्नी द्वाविति केचन ।
एष एव विशेषस्तु शेषं पूर्ववदाचरेत् ॥ २५ ॥

लघुदोषे पृथक् तस्य प्रायश्चित्तं प्रवक्ष्यते ।
प्रमाणे यागशालायाः प्रोक्ते न्यूने विपर्यये ॥ २६ ॥

शय्यावेद्यास्तथा चैव ह्यलङ्कारविवर्जने ।
अन्यदेव कृतं चापि माने न्यूनेऽधिके तथा ॥ २७ ॥

जुहुयाद्भूमिदैवत्यं होमं देशाधिपस्य च ।
वैष्णवं विष्णुसूक्तं च पुरुषसूक्तसमन्वितम् ॥ २८ ॥

हुत्वा पश्चात्प्रकुर्वीत पश्चादन्नाद्यमेव च ।
यज्ञोपस्कारमन्त्राणां द्रव्याणां च विपर्यये ॥ २९ ॥

आग्नेयं ब्रह्मसूक्तं च जुहुयाद्दक्षिणां ददेत् ।
शिलया दारुलोहैर्वा लोष्टैर्वाथेष्टकादिभिः ॥ ३० ॥

कुर्याच्चेदग्निकुण्डं तु वैष्णवं भौतिकं यजेत् ।
जुहुयात्सावित्र्या तत्र यावच्छक्तया यथाक्रमम् ॥ ३१ ॥

हीनाधिकेन मानेन कृतं चेदग्निकुण्डकम् ।
ब्राह्मं सौम्यं तथाग्नेयमादित्यं जुहुयात्क्रमात् ॥ ३२ ॥

पूर्वोक्तेन विधानेन मथित्वा जातवेदसम् ।
पुनस्तदग्नेर्नाशे तु मथित्वाग्निं प्रगृह्य च ॥ ३३ ॥

आग्नेयं चरुणा हुत्वा गृह्णीयात्तं हुताशनम् ।
परिस्तरणकूर्चादिसम्भाराणां च सर्वशः ॥ ३४ ॥

आज्यस्थाल्यादिपात्राणां स्रुवादीनां तथैव च ।
प्रमाणहीने न्यूने च होमे होमे प्रति प्रति ॥ ३५ ॥

मिन्दाहुतिं च सावित्रीं व्याहुतीर्जुहुयात्क्रमात् ।
स्थाल्यामाज्ये चरौ वाथ मक्षिकायाः क्रिमेरपि ॥ ३६ ॥

रोम्णः पिपीलिकादेश्च पतने तद्व्यपोह्य च ।
भव्यमन्यत्समादाय प्राजापत्यं यजेत्ततः ॥ ३७ ॥

आग्नेयं वैष्णवं चैव जुहुयात्तस्य शान्तये ।
अन्यालाभे तु तद्दोषं व्यपोह्यैव प्रयत्नतः ॥ ३८ ॥

दर्भैरुद्दीप्य चोत्पूय प्रायश्चित्तं च पूर्ववत् ।
जुहुयात्तद्विशुद्ध्यथ पुनरुत्पूय चाहरेत् ॥ ३९ ॥

तत्राघारेण ते तस्मिन्नग्नावनुगतेऽपि च ।
अयं ते योनिरित्युक्त्वा समिध्यारोप्य भस्म तत् ॥ ४० ॥

लौकिकाग्नौ निधायोर्ध्वे समिधं तां निधाय च ।
उज्ज्वाल्य परिषिच्याग्निं विच्छिन्नं जुहुयात्पुनः ॥ ४१ ॥

मिन्दाहुती वैष्णवं च व्याहृतीर्जुहुयात्क्रमात् ।
एवमग्निं च संसाध्य शेषं तज्जुहुयात्तथा ॥ ४२ ॥

जले तदंशे पतिते तदाज्ये पतिते जले ।
आग्नेयं वैष्णवं चापि व्याहृत्यन्तं यजेद्बुधः ॥ ४३ ॥

दर्भाणां परिधीनां च हीने पुष्पे तथैव च ।
समिद्धीनेऽक्षतैर्हीने वैष्णवं व्याहृतीर्यजेत् ॥ ४४ ॥

परिस्तरणदर्भाणां परिधीनां तथैव च ।
ऊर्ध्वाग्रे समिधौ तद्वदग्निना रहितेऽपि च ॥ ४५ ॥

नाशे भेदे तथा छिन्ने पुनस्तद्वत्प्रयुज्य च ।
महाव्याहृतिभिर्हुत्वा मिन्दाहुत्या च हूयते ॥ ४६ ॥

आग्नेयं वैष्णवं चापि व्याहृत्यन्तं यजेद्बुधः ।
पार्श्वेऽग्नौ ज्वलिते तस्मिन्समिदाज्ये चरौ हुते ॥ ४७ ॥

तत्तद्दिग्देवताहोमं जुहुयादुपलक्ष्य च ।
वायव्यं वैष्णवं हुत्वा पुनस्तेन च हूयते ॥ ४८ ॥

विशेषेऽनुक्ते सर्वत्र तत्राज्येन यजेद्बुधः ।
आज्यं तु सर्वदैवत्यं सर्वमाज्ये प्रतिष्ठितम् ॥ ४९ ॥

सर्वेषामेव देवानामाज्यं प्रियतरं भवेत् ।
आज्येन मिश्रितं सर्वं हव्यं शुद्धं प्रियं भवेत् ॥ ५० ॥

आज्याभावे च साज्येन चरुणा होममाचरेत् ।
सर्वेषामेव होमानां कापिलं घृतमाहरेत् ॥ ५१ ॥

अलाभेऽन्यगवां वाथ घृतं यत्नात्समाहरेत् ।
तैलादिस्नेहमिश्रेण जलमिश्रघृतेन वा ॥ ५२ ॥

आज्येन माहिषेणाथ जुहुयाच्चेत्प्रमादतः ।
सर्वाग्निषु हुतं सर्वं गृह्णीयुरसुरादयः ॥ ५३ ॥

तद्दोषशमनार्थाय कापिलेन घृतेन वै ।
तत्तन्मन्त्रं सुहोतव्यं सद्रव्यं चार्षसंयुतम् ॥ ५४ ॥

उक्तमन्त्रेण हुत्वान्ते व्याहृत्या जुहुयाद्बुधः ।
उक्तद्रव्यस्य हीने च कापिलेन घृतेन वै ॥ ५५ ॥

देवेशं मनसा ध्यात्वा वैष्णवं विंशतिर्यजेत् ।
क्रियाहीने विपर्यासे होमे मन्त्रस्य संकरे ॥ ५६ ॥

अग्निं विष्णुं प्रणम्यैव वैष्णवं व्याहृतीर्यजेत् ।
सर्वहोमसमाप्तौ तु सूक्तं वैश्वानरं जपेत् ॥ ५७ ॥

यज्ञकर्मणि सर्वत्र न्यूने हीने विपर्यये ।
प्रायश्चित्तं विशेषेण यस्य नोक्तं तु तत्र वै ॥ ५८ ॥

वैष्णवं विष्णुसूक्तं तत्पौरुषं सूक्तमेव च ।
शंनो मित्रेति शान्तिं च जप्त्वा सूक्तं च पौरुषम् ॥ ५९ ॥

वैष्णवं विष्णुसूक्तं च जपेद् ध्यायन् हरिं परम् ।
वैष्णवेनैव होमेन वैष्णवेन जपेन च ॥ ६० ॥

सर्वयज्ञेषु यन्न्यूनं सर्वं पूर्णं भवेत्ततः ।
यन्मूर्तिमेवं यज्ञस्य विष्णुरित्याह च श्रुतिः ॥ ६१ ॥

अविज्ञाते चान्यदोषे प्रायश्चित्तमिदं स्मृतम् ।
रत्नानामप्यलाभे तु रुक्मं प्रतिनिधिं क्षिपेत् ॥ ६२ ॥

धातूनां पारदं तत्र बीजानां यवमेव च ।
तद्द्रव्यं मनसा ध्यात्वा क्षिप्त्वा तन्मन्त्रमुच्चरन् ॥ ६३ ॥

रत्नादिविष्णुसूक्तं च वैष्णवं च यजेत्ततः ।
प्रायश्चित्तं च धातूनां दिग्दैवत्यं सवैष्णवम् ॥ ६४ ॥

प्रायश्चित्तं यवानां तु वायव्यं वैष्णवं तथा ।
त्रयाणां मन्त्रसूक्तं तु प्रत्येकं विंशतिर्यजेत् ॥ ६५ ॥

वस्त्रे लक्षणहीने च दोषे छिन्नादिभिर्युते ।
त्यक्त्वा चान्यत्प्रयुज्यैव श्रीमन्त्रैर्वैष्णवैर्यजेत् ॥ ६६ ॥

अलाभे खण्डजादीनां प्रत्येकं वस्त्रमेव वा ।
तत्तत्प्रतिनिधिं ध्यात्वा शयनान्यास्तरेत्क्रमात् ॥ ६७ ॥

वैष्णवं भूमिदैवत्यं श्रीदैवत्यं शतं यजेत् ।
प्रमाणहीने न्यूने च तोरणानां पृथक् पृथक् ॥ ६८ ॥

तद्द्वाराधिपदैवत्यं प्रत्येकं विंशतिर्यजेत् ।
दर्भमालाविहीनं चेदृषिमन्त्रं च वैष्णवम् ॥ ६९ ॥

कुम्भे प्रमाणहीने च स्फोटकालादिसंयुते ।
वस्त्रयुग्मे च रत्नेषु यथोक्तेष्वायुधादिषु ॥ ७० ॥

सौवर्णादिषु हीनेषु न स्याद्देवस्य सन्निधिः ।
तस्मात्स्वर्णान्युपादाय पुनः क्षिप्त्वा प्रयत्नतः ॥ ७१ ॥

जुहुयात्पौरुषं सूक्तं विष्णुसूक्तं च वैष्णवम् ।
पृथगेव त्रयस्त्रिंशन्मुनिमन्त्रं तु विंशकम् ॥ ७२ ॥

ब्राह्मं चैव त्रयस्त्रिंशदाग्नेयं च दशैव तु ।
पारमात्मिकमोंकाराद्यष्टाशीतिश्च हूयते ॥ ७३ ॥

ब्राह्मणान् भोजयित्वा च दक्षिणां गुरवे ददेत् ।
ऐहिकामुष्मिकं श्रेयो भुक्त्वा निःश्रेयसं व्रजेत् ॥ ७४ ॥

कुम्भे च साधिते भिन्ने प्रमादात्पतितेऽथवा ।
राष्ट्रस्य यजमानस्य राज्ञो दोषो महान् भवेत् ॥ ७५ ॥

प्रजापीडा भवेत्क्षिप्रं व्याधिश्च मरणं तथा ।
तद्दोषशमनार्थाय प्रायश्चित्तं समाचरेत् ॥ ७६ ॥

वैष्णवं शतशो हुत्वा ब्राह्मं च शतशो यजेत् ।
शतशः पौरुषं सूक्तं विष्णुसूक्तं तथा यजेत् ॥ ७७ ॥

आर्षकं च त्रयस्त्रिंशदाग्नेयं विंशतिर्यजेत् ।
पञ्चविंशतिगा दत्त्वा पश्चाद्विप्रांश्च भोजयेत् ॥ ७८ ॥

अन्यं कुम्भं गृहीत्वैव पूर्ववत्स्थापयेद्बुधः ।
श्वानकुक्कुटवाराहाद्यस्पृश्यैः पतितैरपि ॥ ७९ ॥

साधिते तत्र संस्पृष्टे तत्कुम्भं संव्यपोह्य च ।
अन्यं कुम्भं गृहीत्वैव पूर्ववत्स्थापयेद्बुधः ॥ ८० ॥

वैष्णवं ब्राह्मसंयुक्तं सौरमाग्नेयसंयुतम् ।
घृतेन पौरुषं सूक्तं विष्णुसूक्तमतःपरम् ॥ ८१ ॥

अब्जाग्निमध्ये जुहुयात्प्रत्येकं च शताष्टकम् ।
चतुर्दशैव गा दत्त्वा पश्चाद्विप्रान् सुपूजयेत् ॥ ८२ ॥

अस्पृश्यस्पर्शने बिम्बे शोधयित्वा यथाविधि ।
कलशैः स्नापयेद्बिम्बं स्नपनोक्तक्रमेण वै ॥ ८३ ॥

पूर्वोक्तेन क्रमेणैव प्रायश्चित्तं जुहोति च ।
श्वानकुक्कुटकाकाद्यैर्होमे स्पृष्टे तथैव च ॥ ८४ ॥

अस्पृश्यैरपि संस्पृष्टे शोधयित्वा व्यपोह्य च ।
कुण्डं सलक्षणं कृत्वा चाघारं जुहुयात्क्रमात् ॥ ८५ ॥

आग्नेयं शतशो हुत्वा वैष्णवं शतशो यजेत् ।
मूलहोमं शतं हुत्वा जुहुयात्पञ्चवारुणम् ॥ ८६ ॥

निष्कमेकं च दत्त्वैव विप्रानपि च भोजयेत् ।
स्रुगादीनामलाभे तु जुहुयाद्वै स्रुवेण वा ॥ ८७ ॥

तद्रूपमिति तं ध्यात्वा तत्तन्मन्त्रेण हूयते ।
आर्षकं वैष्णवं ब्राह्मं प्रायश्चित्तं यजेत्ततः ॥ ८८ ॥

अलाभे समिधां तत्र पालाशीस्समिधो हरेत् ।
आश्वत्थीर्वा समाहृत्य तां तां ध्यात्वा सुहूयताम ॥ ८९ ॥

आग्नेयं वैष्णवं तत्र प्रायश्चित्तं यजेद्बुधः ।
दर्भान् कुशांश्च समिधो मासातीतान्विवर्जयेत् ॥ ९० ॥

अज्ञानादर्थलोभाद्वा मोहाद्वा बुद्धिपूर्वकम् ।
गृहीत्वा तैः कृतं कर्म तत्सर्वं विफलं भवेत् ॥ ९१ ॥

तद्दोषशमनार्थाय वारुणं वैष्णवं तथा ।
ब्राह्मं सौम्यं तथा ज्ञेयम् आदित्यं जुहुयात्क्रमात् ॥ ९२ ॥

अजस्य महिषस्याथ दधि क्षीरं न चाहरेत् ।
गृहीतं चेत्तदज्ञानाद्वैष्णवं ब्राह्मसंयुतम् ॥ ९३ ॥

आग्नेयं सौरसंयुक्तं व्याहृत्यन्तं पृथग्यजेत् ।
नद्यां वाप्यां तथा कुल्ये तटाके वा शुचिस्थले ॥ ९४ ॥

अग्निकुण्डं समुद्दिश्य मृदं वा सिकतास्तु वा ।
शुद्धामेवाहरेत्तेषां तीरे शुद्धानथाहरेत् ॥ ९५ ॥

तदन्यत्र गृहीतायां वारुणं वैष्णवं यजेत् ।
जन्तुकण्टकसंयुक्तं लेपदोषयुतं तु वा ॥ ९६ ॥

सार्द्रं सधूमं दुर्गन्धमिन्धनं प्रक्षिपेद्यदि ।
तत्त्यक्त्वान्यत्समादाय शुद्धमग्नौ क्षिपेत्तथा ॥ ९७ ॥

आग्नेयं वैष्णवं चापि व्याहृत्यन्तं सुहूयताम् ।
प्रमादाद्यागशालायां द्रव्ये वस्त्रादिकेऽपि वा ॥ ९८ ॥

प्रपादौ वापि श्वभ्रे च देवार्थं कल्पिते पुनः ।
अन्यस्मिन् तत्र दग्धे च द्रव्येऽनुक्ते च सर्वशः ॥ ९९ ॥

वैष्णवं ब्राह्मसंयुक्तं सौरमाग्नेयसंयुतम् ।
आज्येनाग्नौ सुहोतव्यं प्रत्येकं चैकविंशतिः ॥ १०० ॥

शयने शाययेद्देवमुत्थाप्यैवाप्रमादतः ।
वैष्णवैर्दैव्योर्मन्त्रैश्च चतुष्कृत्वो यजेत्पुनः ॥ १०१ ॥

शयनं कल्पयित्वैव शाययीत तथा पुनः ।
तत्काले देवमादाय प्रतिष्ठामाचरेद्बुधः ॥ १०२ ॥

आचार्यस्थापकादीनामृत्विजां च प्रमादतः ।
भर्त्सनं शपनं वापि हननं वा कृतं यदि ॥ १०३ ॥

येनकेन महान् दोषः प्रायश्चित्तं विधीयते ।
पौरुषं वैष्णवं ब्राह्मं सूक्तं सारस्वतं यजेत् ॥ १०४ ॥

आचार्यस्यर्त्विजां तत्र यथोक्तं दक्षिणां ददेत् ।
न दद्याद्यदि ते सर्वे यदि तत्फलमाप्नुयुः ॥ १०५ ॥

हन्त्यल्पदक्षिणो यज्ञः यजमानं न संशयः ।
वैष्णवं मुनिमन्त्रं च शतमष्टोत्तरं यजेत् ॥ १०६ ॥

यथोक्तदक्षिणां तेभ्यो यत्नादेव ददेत्ततः ।
पञ्चमूर्तिप्रतिष्ठायां तद्द्वाराभिमुखे तथा ॥ १०७ ॥

मण्टपं वा प्रपां वाथ कृत्वा पूर्वोक्तमार्गतः ।
अग्निकुण्डानि तत्रैव शयनं तत्र कारयेत् ॥ १०८ ॥

तत्तद्धोमस्सुहोतव्यः यथोक्तविधिना ततः ।
प्रत्येकं स्नपनादीनि सर्वाणि च समाचरेत् ॥ १०९ ॥

अज्ञानात्स्नपनादीनि न पृथक् चेत्समाचरेत् ।
तत्तद्धोमे सुहोतव्यं तत्तन्मन्त्रसहस्रकम् ॥ ११० ॥

क्रियायाश्च विपर्यासे मन्त्राणां सङ्करेऽपि च ।
बिम्बानां च विपर्यासे ऋत्विजां च विपर्यये ॥ १११ ॥

आचार्याणां विपर्यासे नक्षत्रे दोषसंयुते ।
सर्वेष्वपि च दोषेषु प्रायश्चित्तं च पूर्ववत् ॥ ११२ ॥

शान्तिरित्येव निर्दिष्टा सर्वत्रापि च वैष्णवैः ।
आश्रावितार्द्यैर्हुत्वा च मिन्दाहुतिसमायुतैः ॥ ११३ ॥

नारायणाय विद्मेति शन्नोमित्रश्शमित्यपि ।
विष्णोर्नुकाद्यैर्जुहुयात्तत्तद्दोषस्य शान्तये ॥ ११४ ॥

महादोषेषु सर्वत्र महाशान्तिर्विधीयते ।
पौरुषं जुहुयात्सूक्तं विष्णुसूक्तमतःपरम् ॥ ११५ ॥

रुद्रसूक्तं ततो हुत्वा विश्वजित्सूक्तसंयुतम् ।
पारमात्मिकसंयुक्तर्मांकारादींस्तथैव च ॥ ११६ ॥

अष्टाशीतिं ततो हुत्वा श्रीसूक्तं जुहुयात्पुनः ।
रात्रिसूक्तं ततो हुत्वा सूक्तं सारस्वतं यजेत् ॥ ११७ ॥

जुहुयात्सर्वदैवत्यं पञ्चवारुणसंयुतम् ।
मूलहोमं ततो हुत्वा धात्रादीन् जुहुयात्क्रमात् ॥ ११८ ॥

नमोवाचे समुच्चार्य शन्नो वात इतीर्य च ।
नारायणाय विद्मेति तथा षड्भिश्च वैष्णवैः ॥ ११९ ॥

जुहोत्येनां महाशान्तिं समस्तदुरितापहाम् ।
सर्वदोषोपशमनं सर्वकर्मसमृद्धिदम् ॥ १२० ॥

सर्वस्मिंश्च महादोषे महाशान्तिं जुहोति वै ।
अङ्कुरार्पणकादूर्ध्वं स्थापनादिवसादधः ॥ १२१ ॥

यथाशक्त्या प्रकुर्वीत ब्राह्मणानां च भोजनम् ।
अन्नदानेन दोषाश्च सर्वे शान्तिं प्रयान्ति वै ॥ १२२ ॥

आचार्यमृत्विजश्चापि वस्त्राभरणकुण्डलैः ।
पूजयेत्तान्विधानेन नमस्कृत्य स्वदैववत् ॥ १२३ ॥

अपूजितैः कृतं यद्यत्तत्तत्कर्मासुरं भवेत् ।
यजमानो महाव्याधियुक्तस्सन् संप्रणश्यति ॥ १२४ ॥

सम्पूज्य तान्प्रयत्नेन परमं पदमाप्नुयात् ।
इह लोके भवेत्पुत्रधनधान्यसमृद्धिमान् ॥ १२५ ॥

यद्यद्द्रव्यं ध्रुवं रूपं तत्तद्द्रव्येण वै तदा ।
यथोक्तेन विधानेन परिवारांश्च कल्पयेत् ॥ १२६ ॥

गरुडस्य च शान्तस्य विघ्नेशानन्तयोरपि ।
दुर्गायाश्च सरस्वत्याश्शैलबेरं न दोषकृत् ॥ १२७ ॥

अन्यथान्यांस्तु कुर्याच्चेदाभिचारिकमुच्यते ।
तद्दोषस्य च शान्त्यर्थं प्रायश्चित्तं मुहूयताम् ॥ १२८ ॥

ब्राह्मं सौरं च सौम्यं तदाग्नेयं गारुडं तथा ।
तद्दैवत्यं च जुहुयादङ्गहोमं च हूयते ॥ १२९ ॥

पारमात्मिकमन्त्रैश्च जयादींश्च यथाक्रमम् ।
अभ्यातानान्राष्ट्रभृतः श्रीसूक्तेन च संयुतम् ॥ १३० ॥

दुर्गासूक्तं च जुहुयादींकारादींस्तथैव च ।
ब्राह्मणान् भोजयित्वा तु दक्षिणां च ददेत्पुनः ॥ १३१ ॥

स्थापयेत्कौतुकादींश्च ध्रुवबेरानुरूपकान् ।
दारवं शैलजं वाथ ताम्रजं राजतं तु वा ॥ १३२ ॥

सौवर्णं वाथ तद्बिम्बमन्यमुद्दिश्य कल्पितम् ।
विमाने स्थापितं बिम्बं नान्यत्र स्थापयेत्पुनः ॥ १३३ ॥

स्थापितं चेत्तदज्ञानान्महादोषो भविष्यति ।
क्षिप्रं तस्मान्महाशान्तिं हुत्वा दक्षिणया युतम् ॥ १३४ ॥

तत्तद्बिम्बं समादाय पूर्वत्र स्थापयेत्तथा ।
राष्ट्रान्तराद्विनिर्जित्य राज्ञा बिम्बं समाहृतम् ॥ १३५ ॥

तद्बिम्बं च समुद्दिश्य स्वराष्ट्रे सुमनोहरे ।
विमानं परिकल्प्यैव पूर्वोक्तेन क्रमेण वै ॥ १३६ ॥

प्रतिष्ठाप्यार्चनादीनि कारयेत विधानतः ।
तस्य श्रीर्विजयः कीर्तिर्भविष्यति न संशयः ॥ १३७ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे प्रतिष्ठाप्रायश्चित्तविधिर्नामैकोन-सप्ततितमोऽध्यायः ॥

---

## सप्ततितमोऽध्यायः ॥

---

अथ नित्यार्चनायाश्च प्रायश्चित्तं प्रवक्ष्यते ।
प्रातरर्कोदयात्पूर्वं प्रमादादालयस्य च ॥ १ ॥

कवाटोद्घाटने हीने शीघ्रमुद्घाटयेत्तथा ।
नित्याग्नौ वाथ चुल्ल्यां वा चरुं साज्यं प्रगृह्य च ॥ २ ॥

सौरं द्वाराधिदैवत्यं वैष्णवं च यजेत्ततः ।
द्रव्याणामपि सर्वेषामाधावमधिकं स्मृतम् ॥ ३ ॥

तदाधावं गृहीत्वैव देवस्यार्चनमाचरेत् ।
निर्माल्यशोधने हीने हीने चाभ्युक्षणे तथा ॥ ४ ॥

वारुणं वैष्वक्सेनं च वैष्णवं च यजेत्ततः ।
अशक्तावभिषेकस्य देवेशं संप्रणम्य च ॥ ५ ॥

कुशोदकैस्समभ्युक्ष्य पूर्ववस्त्रं विसृज्य च ।
धौतेनैवान्यवस्त्रेण देवेशं परिधापयेत् ॥ ६ ॥

प्रातःस्नानविहीने तु वारुणं वैष्णवं यजेत् ।
ध्रुवबेरस्य दोषे च न्यस्तपुष्पाणि यानि वै ॥ ७ ॥

प्रातःकाले व्यपोह्यैव सद्यः पुष्पाणि संन्यसेत् ।
ध्रुवबेरस्य देवस्य तत्तन्नित्यार्चनं भवेत् ॥ ८ ॥

पुष्पन्यासे च हीने च कालातीते पुनस्तथा ।
पुष्पन्यासं च कृत्वैव प्रायश्चित्तनिमित्ततः ॥ ९ ॥

विष्णुगायत्र्या सम्यग्दशकृत्वो यजेद्बुधः ।
ब्रह्मादिद्वारदेवांश्च समभ्यर्च्यार्चयेद्धरिम् ॥ १० ॥

अर्चायां ध्यानहीने तु विष्णुसूक्तं यजेद्बुधः ।
ध्यात्वा सम्यक्तथा देवं पुनरर्चनमाचरेत् ॥ ११ ॥

नवभेदेष्वथैकस्मिन् कल्पितेऽप्यर्चने तथा ।
आसनाद्युपचारेषु भिन्नं तद्विग्रहं प्रति ॥ १२ ॥

वैष्णव विष्णुगायत्रीं जुहुयात्तदनुस्मरन् ।
देवदेवं च भक्त्यैव ध्यायेद्विष्णुं सनातनम् ॥ १३ ॥

हविर्हीने तु तद्ग्रामे जनास्सर्वे तथैव च ।
पीड्यन्ते क्षुत्पिपासाद्यैः यजमानो नृपस्तथा ॥ १४ ॥

तस्मात्प्रयत्नतो देवं हविस्सम्यङ्निवेदयेत् ।
हविर्हीने तदा ब्राह्मं प्राजापत्यं सवैष्णवम् ॥ १५ ॥

विष्णुसूक्तं यजित्वैव हविस्तद्वन्निवेदयेत् ।
उपदंशादिभिर्दध्ना हीने तत्तदनुक्रमात् ॥ १६ ॥

सौम्यं सामादिकं चापि यजुराद्यं सवैष्णवम् ।
ऋग्यजुस्सामाथर्वाणां मन्त्राणां जपमाचरेत् ॥ १७ ॥

मुखवासविहीने तु श्रीमन्त्रं वैष्णवं यजेत् ।
प्रमादान्मूर्तिहोमं च कपाले जुहुयाद्यदि ॥ १८ ॥

प्रायश्चित्तं यजेत्तत्र वैष्णवं व्याहृतीरपि ।
प्रातस्सन्ध्यार्चने हीने मध्याह्ने द्विगुणं भवेत् ॥ १९ ॥

वैष्णवं पौरुषं सूक्तं विष्णुसूक्तं यजेत्ततः ।
प्रातर्मध्याह्नयोर्हानि साये तत् त्रिगुणं भवेत् ॥ २० ॥

एकाहे त्वर्चनाहीने प्रायश्चित्तं विधीयते ।
त्रिकालार्चां प्रकृत्वैव हवींष्यपि निवेदयेत् ॥ २१ ॥

दक्षिणाग्निं समादाय आघारं विधिवद्यजेत् ।
प्रणम्य देवमाज्येन वैष्णवैः पञ्चविंशतिः ॥ २२ ॥

हुत्वा पुरुषसूक्तेन विष्णुसूक्तेन वै यजेत् ।
ब्राह्मणान् भोजयेत्पश्चाद्ददेत्पश्चाच्च दक्षिणाम् ॥ २३ ॥

एकाहे त्विदमुद्दिष्टं द्व्यहे तु द्विगुणं भवेत् ।
एवं तद्द्वादशाहं च वर्धयेच्च दिने दिने ॥ २४ ॥

द्वादशाहे व्यतीते तु निधायाग्निं तथैव च ।
आघारं विधिवद्धुत्वा वैष्णवं च शतं यजेत् ॥ २५ ॥

तथा पुरुषसूक्तं च विष्णुसूक्तं शतं यजेत् ।
चत्वारिंशद्भिरष्टाभिः कलशैः स्नापयेद्विभुम् ॥ २६ ॥

प्रणम्य देवदेवं तमर्चयित्वा यथाविधि ।
महाहविः प्रभूतं वा भक्त्या सम्यङ् निवेदयेत् ॥ २७ ॥

आचार्याय पशून् दत्त्वा शक्त्या विप्रांश्च भोजयेत् ।
मासहीनं यदि भवेत्प्रायश्चित्तं मुहूयते ॥ २८ ॥

प्राच्यामाहवनीयं च दक्षिणाग्निं च दक्षिणे ।
गार्हपत्यं प्रतीच्यां तु आवसथ्यं तथोत्तरे ॥ २९ ॥

पूर्वोक्तेन क्रमेणैव कुण्डं कृत्वा सलक्षणम् ।
आधारं पूर्ववत्कृत्वा परिषिच्य च पावकम् ॥ ३० ॥

प्राच्यां पुरुषसूक्तं च विष्णुसूक्तं च दक्षिणे ।
वैष्णवं गार्हपत्याग्नौ मूर्तिहोमं तथोत्तरे ॥ ३१ ॥

देवेशं मनसा ध्यात्वा प्रत्येकं चैकविंशतिः ।
देवीभ्यां च मुनिभ्यां च वैघ्नं गारुडसंयुतम् ॥ ३२ ॥

तत्तद्धोमे सुहोतव्यं महाव्याहृतिसंयुतम् ।
शताष्टकलशैर्देवं स्नापयित्वा विधानतः ॥ ३३ ॥

पुण्याहं वाचयित्वा तु पश्चाद्विप्रान् सुपूजयेत् ।
गणयित्वाथवा यावत्कालं शून्यगतं भवेत् ॥ ३४ ॥

तावच्चैवार्चनाद्रव्यं देवेशस्य निवेदयेत् ।
एवं मासे प्रकुर्वीत द्विमासे द्विगुणं भवेत् ॥ ३५ ॥

एवं तद्वर्धयित्वा तु यावत्संवत्सरान्तकम् ।
तथा संवत्सरेऽतीते साहस्रैरष्टसंयुतैः ॥ ३६ ॥

देवं शताष्टकैर्वाथ कलशैः स्नापयेद्बुधः ।
तदर्धं देवमुद्दिश्य दानं सम्यक्समाचरेत् ॥ ३७ ॥

सुवर्णदानं गोदानं भूमिदानं च शक्तितः ।
दत्त्वैवाचार्यपूर्वेभ्यो वेदविद्भ्यः स्वशक्तितः ॥ ३८ ॥

अब्जाग्निं साधयित्वा तु महाशान्तिस्सुहूयताम् ।
पश्चात् सहस्रं संहृत्य कपिलाघृतसंयुतम् ॥ ३९ ॥

प्रत्येकं जुहुयात्तत्र गायत्रीं वैष्णवीं वदन् ।
पूर्वोक्तेन विधानेन प्रतिष्ठां पुनराचरेत् ॥ ४० ॥

एवं देवार्चने हीने प्रायश्चित्तं विधीयते ।
अन्येषामपि देवानामिदं सामान्यमुच्यते ॥ ४१ ॥

अत ऊर्ध्वं प्रवक्ष्यामि प्रायश्चित्तं बलिं प्रति ।
प्रातस्सन्ध्याबलौ हीने मध्याह्ने द्विगुणं भवेत् ॥ ४२ ॥

वैष्णवं सौरसौम्ये च प्राजापत्यं यजेत्ततः ।
प्रातर्मध्याह्नयोर्हीने सायाह्ने त्रिगुणं भवेत् ॥ ४३ ॥

एकाहं बलिहीनं चेदग्नावौपासने तथा ।
आघारं पूर्ववद्धुत्वा परिषिच्य च पावकम् ॥ ४४ ॥

जुहुयाद्विष्णुसूक्तं च देवेशं मनसा स्मरन् ।
वैष्णवानपि षण्मन्त्रान् पूर्वोक्तेन विधानतः ॥ ४५ ॥

बलीनुत्थापयेत्पश्चाद्यावत्संख्यासमायुतान् ।
एकाहे त्विदमुद्दिष्टं द्व्यहे तु द्विगुणं भवेत् ॥ ४६ ॥

वर्धयित्वा चरेदेवं द्वादशान्तं तथैव च ।
अत ऊर्ध्वं यदि स्याच्चेत्पौण्डरीकं समाहरेत् ॥ ४७ ॥

हुत्वा पुरुषसूक्तं च विष्णुसूक्तमतः परम् ।
पारमात्मिकसंयुक्तमोंकारादिसमायुतम् ॥ ४८ ॥

सप्तभिः कलशैर्देवं स्नापयित्वा विधानतः ।
महाहविर्निवेद्यैव बलिमुत्थापयेत्क्रमात् ॥ ४९ ॥

एवमेव विधानेन यावत् त्रिंशद्दिनादधः ।
मासातीतो यदि भवेत्प्राच्यामाहवनीयके ॥ ५० ॥

हुत्वा तु पौरुषं सूक्तं विष्णुसूक्तमतःपरम् ।
प्रत्येकं जुहुयाद्विद्वान् शतमष्टाधिकं यजेत् ॥ ५१ ॥

प्रत्येकं सर्वदैवत्यं जुहुयाद्विधिपूर्वकम् ।
शताष्टकलशैर्देवं स्नापयित्वा विधानतः ॥ ५२ ॥

पञ्चविंशतिगा दत्त्वा देवमुद्दिश्य यत्नतः ।
महाहविर्निवेद्यैव बलिमुत्थापयेत्क्रमात् ॥ ५३ ॥

एवमेव विधानेन कुर्याद्द्वं प्रति प्रति ।
तद्बलौ पतितैः स्पृष्टेऽप्यस्पृश्यैः श्रुतिदूषकैः ॥ ५४ ॥

पूर्ववद्बलिमासाद्य बलिदेवं यजेत्पुनः ।
उद्धृते तु बलौ विघ्ने सौरं सौम्यसमन्वितम् ॥ ५५ ॥

हुत्वा तु पूर्ववत्कर्म प्रारभेत यथाविधि ।
यदि प्रमाणहीनेन बलिं कुर्यात्प्रमादतः ॥ ५६ ॥

आज्येन वैष्णवं हुत्वा प्रत्येकं चैकविंशतिः ।
भिन्ने जीर्णे बलौ तत्र वैष्णवं जुहुयाच्छतम् ॥ ५७ ॥

पात्रं प्रमाणहीनं चेद्वैष्णवं जुहुयात्तथा ।
हुत्वा तु पौरुषं सूक्तं विष्णुसूक्तमतःपरम् ॥ ५८ ॥

पारमात्मिकसंयुक्तमोंकारादिश्च हूयते ।
ब्राह्मं रौद्रसमायुक्तं सौरमाग्नेयसंयुतम् ॥ ५९ ॥

पञ्चवारुणपर्यन्तं जयाद्यैश्च समायुतम् ।
यद्देवादीनि चाज्येन तस्य शान्तिर्भविष्यति ॥ ६० ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे नित्यार्चनप्रायश्चित्तविधिर्नाम सप्ततितमोऽध्यायः ॥

---

## एकसप्ततितमोऽध्यायः ॥

स्नपनं प्रति वक्ष्यामि प्रायश्चित्तं महर्षयः ।
अङ्कुरानर्पयित्वैव स्नापनं नैव चाचरेत् ॥ १ ॥

पूर्वेद्युस्तद्दिने वापि प्रायश्चित्तं च कारयेत् ।
औपासनाग्निमाहृत्य चाघारं पूर्ववद्यजेत् ॥ २ ॥

वैष्णवं ब्राह्मसंयुक्तं वारुणं वैघ्नमेव च ।
पङ्क्तीशस्यापि दैवत्यं सौम्यं शान्तं यजेत्क्रमात् ॥ ३ ॥

जयादीनां च सर्वासां मूर्तिमन्त्रैश्च हूयते ।
प्रत्येकं विंशतिं हुत्वा वैष्णवं च शताष्टकम् ॥ ४ ॥

व्याहृत्यन्तं च हुत्वा तु पूर्वोक्तेन विधानतः ।
अङ्कुरार्पणहीने तु पुष्पैः पद्मादिभिस्सितैः ॥ ५ ॥

पालिकासु प्रपूर्यैतानङ्कुरानिति कल्पयेत् ।
हीनाधिकेन मानेन पालिकादेः प्रमादतः ॥ ६ ॥

यदि कुर्यात्तदज्ञानात् प्रायश्चित्तं सुहूयते ।
तद्दैवं वैष्णवँ हुत्वा प्रत्येकं विंशतिर्यजेत् ॥ ७ ॥

हीनाधिकेन मानेन मण्डपं कुरुते यदि ।
प्रपां वा शालां कूटं वा तथैव स्नपनालयम् ॥ ८ ॥

अविधिकमलक्षण्यमयुक्तं नैव कारयेत् ।
हीनेऽधिके कृते तत्र शान्तिं सम्यक् समाचरेत् ॥ ९ ॥

वैष्णवं भूमिदैवत्यं प्रत्येकं तु शताष्टकम् ।
हुत्वा तु पूर्ववत् कर्म प्रारभेत यथाविधि ॥ १० ॥

आलयस्योत्तरे शान्तिं पुष्टिकामस्तु पूर्वतः ।
दक्षिणे मुक्तिकामस्तु बलिकामस्तु वारुणे ॥ ११ ॥

ईशाने कोणतः कुर्यात् सर्वकामी तु लक्षणम् ।
आग्नेये नैर्ऋतेः स्थाने वायव्ये न समाचरेत् ॥ १२ ॥

तत्रैव यदि कुर्याच्चेत् पुनस्स्नपनमाचरेत् ।
तत्तद्दिक्पालहोमश्च वैष्णवं च सुहूयते ॥ १३ ॥

प्रत्येकं विंशतिं हुत्वा पश्चात्कर्म समाचरेत् ।
कलशानां प्रमाणस्य न्यूने चाप्यधिकेऽपि च ॥ १४ ॥

वैष्णवं ब्राह्मसंयुक्तं सौरं सौम्यसमन्वितम् ।
महाव्याहृतिसंयुक्तं व्याहृत्यन्तं प्रति प्रति ॥ १५ ॥

वस्त्रहीने महान् दोषो भवेद्वस्त्रादिहीनता ।
आचार्यं पूजयेद्वस्त्रैः श्रीमन्त्रैर्वैष्णवैर्यजेत् ॥ १६ ॥

तोरणे दोषयुक्ते च मन्त्रान्दौवारिकान्यजेत् ।
तत्तद्द्वाराधिपं हुत्वा वैष्णवेन समायुतम् ॥ १७ ॥

प्रमाणहीने कूर्चादौ प्रायश्चित्तं सुहूयताम् ।
वैष्णवं ब्राह्मसंयुक्तमार्षं सौरेण संयुतम् ॥ १८ ॥

प्रत्येकं जुहुयाद्विद्वान् षोडशेति प्रकीर्तितम् ।
प्रमाणहीने परिधेः पङ्क्तीशं च समर्चयेत् ॥ १९ ॥

यजेत्पङ्क्तिज्ञमन्त्रं च वैष्णवं पाञ्चभौतिकम् ।
श्वभ्रं प्रमाणहीनं स्यात् मेदिन्यादिस्सुहूयते ॥ २० ॥

यथोक्तस्थानमृद्धीने यथालाभं प्रगृह्य च ।
जुहुयाद्भूमिदैवत्यं वैष्णवं ब्राह्मसंयुतम् ॥ २१ ॥

हीनाधिकेन मानेन कुर्याच्चेत्पर्वतानपि ।
आग्नेयं वैष्णवं हुत्वा व्याहृत्यन्तं प्रति प्रति ॥ २२ ॥

अलाभे सर्वधान्यानां यवं प्रतिनिधिं हरेत् ।
यथालाभं प्रगृह्यैव धान्यं प्रक्षिप्य चार्चयेत् ॥ २३ ॥

जुहुयाद्वायुदैवत्यं वैष्णवं ब्राह्मसंयुतम् ।
अङ्कुराणामलाभे तु दूर्वाङ्कुरमथाहरेत् ॥ २४ ॥

तद्दैवत्यं च जुहुयाद्वैष्णवं सोमदैवतम् ।
हीनाधिकेन मानेन कुर्याच्चेन्मङ्गलानपि ॥ २५ ॥

ऐन्द्रं वैष्णवसंयुक्तं महाव्याहृतिसंयुतम् ।
यथोक्तयागहीने च पञ्चगव्यं च बुद्धिमान् ॥ २६ ॥

रौद्रं वैष्णवसंयुक्तं प्रत्येकं विंशतिर्यजेत् ।
सद्यस्तप्तसुवर्णाभं सुपक्वं च घृतं हरेत् ॥ २७ ॥

घृतानां चैव सर्वेषां कापिलं संप्रशस्यते ।
तदलाभेऽन्यगव्यं वा घृतं सङ्गृह्य यत्नतः ॥ २८ ॥

अज्ञानादर्थलोभाद्वा आजं वा माहिषं तु वा ।
गृहीत्वा देवदेवं च स्नापयेच्चेत्सकृन्नरः ॥ २९ ॥

तद्दोषशमनार्थाय प्रायश्चित्तं यजेत्क्रमात् ।
हुत्वा तु पौरुषं सूक्तं विष्णुसूक्तमतः परम् ॥ ३० ॥

पारमात्मिकसंयुक्तमोंकारादिश्च हूयते ।
अङ्गहोमं यजेद्विद्वान् पूर्वोक्तेन विधानतः ॥ ३१ ॥

सामवेदादिमन्त्रेण शतमष्टाधिकं यजेत् ।
क्रिमिकीटपतङ्गादिर्दृश्यते यदि तद्घृते ॥ ३२ ॥

वस्त्रेणोत्पूय चोद्दीप्य प्रोक्षयित्वा समाहरेत् ।
अतो देवादिभिर्मन्त्रैरभिमृश्य यथाक्रमम् ॥ ३३ ॥

सामवेदादिमन्त्रेण वैष्णवेन तथा यजेत् ।
हुत्वा तु स्नापयेत्पश्चाद्देवेशं मनसा स्मरन् ॥ ३४ ॥

हीने यथोक्तमधुनि तोयं प्रतिनिधिं हरेत् ।
तोयेन स्नापयेच्चेत्तु प्रायश्चित्तं विधीयते ॥ ३५ ॥

ऋग्वेदस्यादिमन्त्रेण वैष्णवेन सुहूयताम् ।
हुत्वा पश्चात्प्रकुर्वीत स्नपनं मन्त्रसंयुतम् ॥ ३६ ॥

अशुक्तं दधि गृह्णीयाद्धनं च प्रियदर्शनम् ।
दोषयुक्तेन दध्ना चेद्वैष्णवं यजुरादिकम् ॥ ३७ ॥

व्याहृत्यन्तं च हुत्वा तु महाव्याहृतिसंयुतम् ।
क्षीरे चोक्तगुणे हीने षण्मन्त्रैरपि वैष्णवैः ॥ ३८ ॥

शन्नोदेवीति मन्त्रेण प्रत्येकं विंशतिर्यजेत् ।
गन्धोदकस्य हीने च न्यूने चैवाथवा पुनः ॥ ३९ ॥

तद्दैवत्यं च हुत्वा तु वैष्णवेन यजेत्पुनः ।
अक्षतानामलाभे तु यथालाभं प्रदापयेत् ॥ ४० ॥

आर्षकं वैष्णवं हुत्वा ब्राह्मं सौम्यसमन्वितम् ।
फलानां चैव सर्वेषां यथालाभं प्रगृह्य च ॥ ४१ ॥

सौम्यं वैष्णवसंयुक्तं व्याहृत्यन्तं सुहूयताम् ।
फलानामप्यलाभे तु यथासंभवमाहरेत् ॥ ४२ ॥

षड्भिर्मन्त्रैर्वैष्णवैश्च तद्दैवत्यं यजेद्बुधः ।
कुशोदकं कुशालाभे दर्भाग्रांस्तत्र निक्षिपेत् ॥ ४३ ॥

आर्षकं वैष्णवं ब्राह्ममैन्द्रं च जुहुयात्क्रमात् ।
अलाभे पञ्चरत्नानाममृतं स्वममेव च ॥ ४४ ॥

वैष्णवं विष्णुसूक्तं च ब्राह्मं रौद्रं यजेत्ततः ।
जप्योदमन्त्रहीने तु वैष्णवं च शतं यजेत् ॥ ४५ ॥

हुत्वा तु पौरुषं सूक्तं विष्णुसूक्तमतःपरम् ।
सर्वौषधीनां चालाभे शालितण्डुलमाहरेत ॥ ४६ ॥

आदित्यं वैष्णवं हुत्वा ब्राह्मं व्याहृतिसंयुतम् ।
अलाभे पुण्यपुष्पाणां यथालाभं प्रगृह्य च ॥ ४७ ॥

धातृमन्त्रं च हुत्वा तु वैष्णवेन यजेत्पुनः ।
अलाभे सर्वचूर्णानामौशीरं मौद्गमेव वा ॥ ४८ ॥

सौदर्शनं च हुत्वा तु वैष्णवं च सुहूयते ।
सर्वालाभे कषायार्थमाश्वत्थं वा समाहरेत् ॥ ४९ ॥

वारुणं वैष्णवं हुत्वा पश्चात्कर्म समारभेत् ।
तीर्थानामप्यलाभे तु नादेयं तीर्थमाहरेत ॥ ५० ॥

गाङ्गेयं वैष्णवं हुत्वा व्याहृतीर्जुहुयात्समम् ।
ओषधीनामलाभे तु यथालाभं प्रगृह्य च ॥ ५१ ॥

वैष्णवं रौद्रसंयुक्तं हुत्वा कर्म समाचरेत् ।
गन्धानां चैव सर्वेषामलाभे चन्दनं हरेत् ॥ ५२ ॥

ऐन्द्रं वैष्णवसंयुक्तं व्याहृत्यन्तं सुहूयते ।
प्लोतवस्त्रे नवे हीने धौतमन्यमथाहरेत् ॥ ५३ ॥

त्वाष्ट्रं च वैष्णवं हुत्वा विष्णुसूक्तमतःपरम् ।
मूलगन्धस्य चालाभे दूर्वां वापि ददेत्क्रमात् ॥ ५४ ॥

ब्राह्मं वैष्णवसंयुक्तं प्राजापत्यसमायुतम् ।
धातूनामप्यलाभे तु जातिहिङ्गुलिकं ददेत् ॥ ५५ ॥

दुर्गासूक्तं च हुत्वा तु विष्णुसूक्तमतःपरम् ।
भूषणानामलाभे तु षाण्मुखं वैष्णवं यजेत् ॥ ५६ ॥

विपर्यासोद्धृते द्रव्ये मोहाद्वाथ प्रमादतः ।
स्नपनं च न कुर्वीत तावत्कालं न संन्यसेत् ॥ ५७ ॥

तद्दैवत्यं च हुत्वा तु वैष्णवं विंशतिर्यजेत् ।
कलशस्साधितः पूर्णः प्रसादाद्भिद्यते यदि ॥ ५८ ॥

अन्यं कलशमादाय पूर्ववत्सम्प्रपूर्य च ।
स्पृष्ट्वा तु वैष्णवं मन्त्रं तद्दैवत्यं शतं यजेत् ॥ ५९ ॥

तद्दैवत्यं शतं हुत्वा चतुर्विंशं शताष्टकम् ।
वैष्णवं च शतं हुत्वा ब्राह्मं चैव शतं यजेत् ॥ ६० ॥

क्रिमिकीटपतङ्गादि द्रव्येषु पतितं यदि ।
तद्द्रव्यं वर्जयेन्नित्यं देवयागेषु सर्वतः ॥ ६१ ॥

तद्दैवत्यं शतं हुत्वा चान्यद् द्रव्यं समाहरेत् ।
सर्वदोषोपशमनं सर्वकर्मसमृद्धिदम् ॥ ६२ ॥

जुहुयात्पौरुषं सूक्तं विष्णुसूक्तमतःपरम् ।
पारमात्मिकमीङ्काराद्यष्टाशीतिः सुहूयते ॥ ६३ ॥

श्रीसूक्तं रात्रिसूक्तं च दुर्गासूक्तमतःपरम् ।
पञ्चवारुणसंयुक्तं जयाद्यैश्च समायुतम् ॥ ६४ ॥

नित्ये च स्नपने हीने विषुवे ग्रहणेऽयने ।
पूर्वोक्तां च महाशान्तिमेकाहं जुहुयात् क्रमात् ॥ ६५ ॥

द्विगुणैः कलशैर्देवं स्नापयेत यथाविधि ।
एवमेव च संवर्ध्य स्नापनं प्रति कारयेत् ॥ ६६ ॥

अशक्यं कर्म शास्त्रोक्तं कर्तुं तदमरैरपि ।
किं बतात्र मनुष्याणां शक्तिश्शासनमार्गतः ॥ ६७ ॥

तस्मात्सर्वप्रयत्नेन होमं कुर्याद्विचक्षणः ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे स्नपनप्रायश्चित्तविधिर्नामैक-
सप्ततितमोऽध्यायः ॥

---

## द्विसप्ततितमोऽध्यायः ॥

अतःपरं प्रवक्ष्यामि प्रायश्चित्तमथोत्सवे ।
ध्वजारोहणहीनं चेत्प्रायश्चित्तं च कारयेत् ॥ १ ॥

दिग्देवानामथाष्टानां मन्त्रान्सर्वाननुक्रमात् ।
प्राजापत्यं च रौद्रं च विष्णुसूक्तं यजेद् बुधः ॥ २ ॥

एकाहिकोत्सवे तद्वदुत्सवे च दिनद्वये ।
कृते तत्र ध्वजारोहे प्रायश्चित्तमथाचरेत् ॥ ३ ॥

ध्वजस्यात्र निपाते तु ध्वजमन्त्रं च गारुडम् ।
वैष्णवं जुहुयात्पश्चाद्ध्वजमत्र सुयोजयेत् ॥ ४ ॥

आरोहिते ध्वजे नष्टे भिन्ने दग्धे प्रमादतः ।
आग्नेयं गारुडं ध्वाजं वैष्णवं जुहुयात्क्रमात् ॥ ५ ॥

कारयित्वा ध्वजं सम्यक् पुनरारोपयेद्गुरुः ।
प्रत्यब्दं क्रियमाणे च नित्ये कालोत्सवे तथा ॥ ६ ॥

सर्वस्मिंश्च दिने हीने प्रायश्चित्तं विधीयते ।
उत्सवस्य दिनं यावत्तावत्संख्यादिनेषु च ॥ ७ ॥

अब्दादौ च महाशान्तिं पूर्वोक्तं जुहुयात्क्रमात् ।
तावतीर्गाश्च सन्दद्याद्देवदेवाय भक्तितः ॥ ८ ॥

उत्सवस्य च यन्मूल्यं द्रव्यं तद्वाथ दापयेत् ।
पूर्वोक्तविधिना भक्त्या कलशैः स्नापयेद्विभुम् ॥ ९ ॥

सर्वोपचारैर्देवेशमर्चयित्वा विधानतः ।
महाहविर्निवेद्यैव क्षमस्वेति प्रणम्य च ॥ १० ॥

सौवर्णैरन्यपुष्पैश्च वस्त्रमाल्यैश्च भक्तितः ।
तत्पूजां महतीं कृत्वा पुण्याहमपि वाचयेत् ॥ ११ ॥

विष्णोर्नुकादिभिः स्तुत्वा पुरुषसूक्तेन चोद्धरेत् ।
ब्राह्मणानां यथाशक्ति भोजनं च ततःपरम् ॥ १२ ॥

पुनरुत्सवमारभ्य कारयेच्च यथाक्रमम् ।
समूर्तार्चनयज्ञस्य प्रायश्चित्तमिदं स्मृतम् ॥ १३ ॥

उत्सवं द्विगुणं सम्यक्कारयेदिति केचन ।
प्रत्यब्दमेवं सङ्गृह्य कारयेत यथाक्रमम् ॥ १४ ॥

प्रत्येकस्मिन् दिने हीने तस्य कालोत्सवस्य तु ।
हुत्वा पुरुषसूक्तेन चाज्यं षड्भिश्च वैष्णवैः ॥ १५ ॥

यद्देवाद्यैश्च कूष्माण्डैः ब्राह्मैरैन्द्रैश्च वारुणैः ।
तदालयस्थदेवानां मूर्तिहोमं च हूयते ॥ १६ ॥

कलशैः स्नापयित्वैव यथाशक्ति निवेदयेत् ।
पूर्वोक्तेन क्रमेणैव शेषं सम्यक् समाचरेत् ॥ १७ ॥

एककालोत्सवे हीने पूर्वोक्तं होममाचरेत् ।
देवदेवस्य देव्योश्च सायंप्रातस्तथोत्सवे ॥ १८ ॥

हविषि द्विगुणे हीने हीने च द्विगुणार्चने ।
वैष्णवं विष्णुसूक्तं च हुत्वा तत्र चतुर्गुणम् ॥ १९ ॥

अर्चयित्वा हविश्चापि सम्यग्दद्याच्चतुर्गुणम् ।
मूर्तिहोमे तथा हीने द्विगुणं जुहुयात्क्रमात् ॥ २० ॥

चक्रादीनां हविर्हीने तन्मन्त्रैर्वैष्णवैर्यजेत् ।
द्विगुणं तान्समभ्यर्च्य द्विगुणानि निवेदयेत् ॥ २१ ॥

उत्सवं चक्रहीने च नाचरेदिति शासनम् ।
ग्रामे बलौ तथा हीने तद्देवस्यैव मूर्तिभिः ॥ २२ ॥

जुहुयाद्वैष्णवं चापि व्याहृत्यन्तं प्रति प्रति ।
बलिं पश्चात्क्रमेणैव विधिना निर्वपेद्बुधः ॥ २३ ॥

देवस्याभरणैर्हैमैर्बहुवर्णाम्बरैरपि ।
अलङ्कारविहीने तु श्रीसूक्तं वैष्णवं यजेत् ॥ २४ ॥

सुगन्धैर्बहुभिः पुष्पैर्माल्यैरपि विशेषतः ।
देव्यालङ्कारहीने तु महीसूक्तेन वैष्णवैः ॥ २५ ॥

रथरङ्गविहीने तु शिबिकां वाथ कारयेत् ।
शिबिकायां विहीनायां हीनेऽलङ्करणे तथा ॥ २६ ॥

हविषि द्विगुणे हीने चोत्सवं नाचरेद्बुधः ।
यानेऽलङ्कारहीने तु गारुडं वैष्णवं यजेत् ॥ २७ ॥

ध्वजादिषु विहीनेषु ध्वजमन्त्रेण वैष्णवम् ।
नृत्तगेयविहीने तु रौद्रं ब्राह्मं च वैष्णवम् ॥ २८ ॥

श्वेतच्छत्रादिहीने तु सौम्यवारुणवैष्णवान् ।
अन्यत्परिच्छदे हीने श्रीमन्त्रं वैष्णवं यजेत् ॥ २९ ॥

गन्धधूपविहीने तु बार्हस्पत्यं च वैष्णवम् ।
दीपे न्यूने तथा सौरमाग्नेयं वैष्णवं यजेत् ॥ ३० ॥

स्तोत्रध्वनिविहीने तु दिग्दैवत्यं च वैष्णवम् ।
आचार्यऋत्विजां हीने बार्हस्पत्यं च वैष्णवम् ॥ ३१ ॥

जुहुयादार्षकैर्मन्त्रैर्ब्राह्मणान् सुसमर्चयेत् ।
यजेद्भक्तजने हीने वैष्वक्सेनं च वैष्णवम् ॥ ३२ ॥

क्रमात्प्रदक्षिणे हीने विष्णुसूक्तेन वै यजेत् ।
देवस्य स्नानहीने तु तोयमन्त्रेण वारुणैः ॥ ३३ ॥

वैष्णवैरपि मन्त्रैश्च स्नापयेच्च पुनस्तथा ।
अर्चाहविषि हीने च वैष्णवैर्जुहुयात्तथा ॥ ३४ ॥

द्विगुणं च समभ्यर्च्य द्विगुणं च हविर्ददेत् ।
प्रायश्चित्तं च कृत्वैव शेषं पूर्ववदाचरेत् ॥ ३५ ॥

काले न्यूने विपर्यासे कालेऽतीते ततस्तथा ।
जुहुयाद्वैष्णवैष्षड्भिराज्यमष्टशतं बुधः ॥ ३६ ॥

गौणस्य च तथा न्यूने गौणेन विधिना तथा ।
मुख्यस्य तु तथा हीने मुख्येन स्थापयेद्विभुम् ॥ ३७ ॥

ध्वजमारोप्य तत्पश्चाद्विघ्नश्चेदुत्सवस्य तु ।
महाशान्तिं ततो हुत्वा ध्वजमारोप्य पूर्ववत् ॥ ३८ ॥

पुनरुत्सवमारभ्य कारयेत विधानतः ।
पुण्याहं वाचयित्वैव शेषं पूर्ववदाचरेत् ॥ ३९ ॥

अलङ्कारैकदेशेऽपि न्यूने शान्तिं तथैव च ।
होमश्च त्रिविधः प्रोक्तो मुख्यमध्यमगौणतः ॥ ४० ॥

यद्देवादिसमायुक्तं सर्वदैवत्यमुत्तमम् ।
देवदेवस्य देव्योश्च जुहुयाच्चेत्तु मध्यमम् ॥ ४१ ॥

केवलं देवदेवस्य जुहुयादधमं तथा ।
सौवर्णभूषणाद्यैश्च पूजनं चोत्तमं विदुः ॥ ४२ ॥

महाहविःप्रधानं तु पूजनं मध्यमं विदुः ।
प्रभूतहविषो दानमधमं पूजनं तथा ॥ ४३ ॥

गुरुलाघवमालोच्य प्रायश्चित्तं च कारयेत् ।
विनाश्रयेषु दोषेषु सर्वन्यूनं भवेद्यदि ॥ ४४ ॥

काले व्यतिक्रमे हीने प्रायश्चित्तं यजेद्बुधः ।
आघारं विधिवद्धुत्वा नित्यहोमाग्निकुण्डके ॥ ४५ ॥

तस्य शान्तिस्सुहोतव्या वैष्णवं ब्राह्मसंयुतम् ।
मिन्दाहुतिं च विच्छिन्नं वैष्णवं च यजेत्ततः ॥ ४६ ॥

पतितेऽन्नबलौ तद्वदर्घ्ये वापि बलौ पुनः ।
देवदेवं समभ्यर्च्य हविस्सम्यङ्निवेद्य च ॥ ४७ ॥

बलिरक्षकमभ्यर्च्य होमं च जुहुयाद्वसोः ।
जुह्वादिषु च पात्रेषु सङ्गृह्यैकं स्रुवं विना ॥ ४८ ॥

धारयाज्यस्य होतव्यं स्वाहाकारं विनैव तु ।
सूक्तैश्च पञ्चभिश्चैव वसोर्धाराहुतिः स्मृता ॥ ४९ ॥

पूर्ववद्बलिमासाद्य चार्चयित्वा समुद्धरेत् ।
सन्धौ च बलिहीनं चेत्तत्सन्ध्याधिपमूर्तिना ॥ ५० ॥

जुहुयाद्वैष्णवैश्चैव व्याहृत्यन्तं यथाक्रमम् ।
बलिं पश्चात्क्षिपेत्तत्र पूर्वोक्तेन क्रमेण वै ॥ ५१ ॥

भूमौ तु पतिते बिम्बे भीतश्चोद्विग्नमानसः ।
शीघ्रमुद्धृत्य तद्बिम्बं क्षमस्वेति प्रणम्य च ॥ ५२ ॥

शुद्धतोयैश्च संस्नाप्य नमस्कृत्वार्चयेत्क्रमात् ।
विष्णोर्नुकादिभिश्चैव स्तुत्वा चैकाक्षरादिना ॥ ५३ ॥

चतुर्विंशतिभिश्चैव कलशैः स्नापयेद्विभुम् ।
हविस्सम्यङ्निवेद्यैव वैष्णवं जुहुयाच्छतम् ॥ ५४ ॥

विष्णोर्नुकादिभिः स्तुत्वा क्रमादुत्सवमाचरेत् ।
चक्रं शान्तं तथा वीशं पाञ्चजन्यस्य बिम्बकम् ॥ ५५ ॥

भूमौ तु पतितं चेत्तु स्नापयित्वा विधानतः ।
तस्य मन्त्रैश्च जुहुयान्मूर्तिमन्त्रैर्यथाक्रमम् ॥ ५६ ॥

वैष्णवं चैव हुत्वा तु विष्णुसूक्तं यजेद्बुधः ।
अर्चयेत्तं च देवेशमुत्सवं सम्यगाचरेत् ॥ ५७ ॥

यानान्निपतिते बिम्बे देवे पीठाद्वियोजिते ।
पीठं भिन्नं प्रभाच्छत्रमायुधाभरणादिकान् ॥ ५८ ॥

भिन्नान् च्युतांश्च संयोज्य बिम्बशुद्धिं समाचरेत् ।
पूर्ववद्भूमियज्ञान्ते स्नपनं च समाचरेत् ॥ ५९ ॥

महाशान्तिं च हुत्वैव प्रतिष्ठामाचरेत्पुनः ।
एवं कृत्वा यथामार्गं पश्चादुत्सवमाचरेत् ॥ ६० ॥

पतनादङ्गहीनं चेद्बिम्बं सम्यग्व्यपोह्य च ।
जीर्णबेरपरित्यागविधिं कृत्वा विसृज्य च ॥ ६१ ॥

पुनर्विम्बं च कृत्वा तु पूर्वोक्तेन क्रमेण वै ।
विम्बशुध्द्यादिकं सर्वं कृत्वा स्थापनमाचरेत् ॥ ६२ ॥

रङ्गादीनां निपाते च ब्राह्मं वैष्णवसंयुतम् ।
हुत्वा पश्चात्पुनः स्थाने कुर्यादित्येव शासनम् ॥ ६३ ॥

गातुर्नर्तुश्च पतने श्रीदेव्या होममाचरेत् ।
ऋत्विगाचार्यसंक्षोभे भर्त्सने पतनेऽपि च ॥ ६४ ॥

केनचित्पतने तेषां चतुर्भिर्दशभिर्युतैः ।
आर्षिष्वड्भिर्वैष्णवैश्च हुत्वा कर्म प्रवर्तयेत् ॥ ६५ ॥

दीपानां पतने चैव आग्नेयं वैष्णवं यजेत् ।
धूपानां पतने चैव दहने यस्य कस्यचित् ॥ ६६ ॥

मायासंह्लादिनीं चैव किष्किन्धं सुन्दरं तथा ।
अर्चयित्वाथ संपूज्य वैष्णवं होममाचरेत् ॥ ६७ ॥

ध्वजादीनां निपाते च दहने च विशेषतः ।
वैष्णवं ध्वजदैवत्यं जुहुयाद्विधिसत्तमः ॥ ६८ ॥

भक्तानां ब्राह्मणादीनां कलहे पतने तथा ।
ब्राह्मं च वैष्णवं चैव जुहुयादिति शासनम् ॥ ६९ ॥

वादित्राणां निपतने वादकानां तथैव च ।
नन्दीश्वरं समभ्यर्च्य वैष्णवं रौद्रसंयुतम् ॥ ७० ॥

ब्राह्ममन्त्रं तथा हुत्वा पश्चात्कर्म समाचरेत् ।
कलहे रुधिरस्रावेऽशन्युत्पातान्मृते जने ॥ ७१ ॥

जुहुयाद्विष्णुसूक्तं च पौरुषं वैष्णवं क्रमात् ।
परिषद्गणमन्त्रैश्च जुहुयात्तस्य शान्तये ॥ ७२ ॥

उत्सवाङ्गाश्च ये देवास्तेषां मन्त्रैश्च हूयते ।
प्रतिसरबन्धनास्तत्र प्रपाताश्चेत्प्रमादतः ॥ ७३ ॥

वारुणं वैष्णवं मन्त्रं मन्त्रं तद्दिनदैवतम् ।
हुत्वैव कौतुकाबन्धं कारयेत पुनस्तथा ॥ ७४ ॥

शयने तत्र हीने तु देव्योर्होमं समाचरेत् ।
तीर्थकाले व्यतीते तु वारुणैः स्कन्ददैवतैः ॥ ७५ ॥

विष्णोर्नुकादिभिः स्तुत्वा तीर्थस्नानं समाचरेत् ।
यज्ञतीर्थस्य काले तु मध्याह्न इति संस्मृतः ॥ ७६ ॥

तद्दिने स्नपने हीने दिग्दैवत्यं सवैष्णवम् ।
विष्णोर्नुकादिभिर्हुत्वा देवं संस्नापयेत्तथा ॥ ७७ ॥

महाहविर्विहीने च विष्णुसूक्तेन वैष्णवैः ।
हुत्वा पुरुषसूक्तेन प्राजापत्येन हूयते ॥ ७८ ॥

सर्वोपचारैर्देवेशमर्चयित्वा विधानतः ।
महाहविर्निवेद्यैव क्षमस्वेति प्रणम्य च ॥ ७९ ॥

विष्णोर्नुकादिभिर्देवं पुरुषसूक्तेन चोदयेत् ।
सर्वदोषस्य शान्त्यर्थं पुरुषसूक्तेन वैष्णवैः ॥ ८० ॥

विष्णुसूक्तेन देवस्य पादे पुष्पाञ्जलिं ददेत् ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे उत्सवप्रायश्चित्तविधिर्नाम
द्विसप्ततितमोऽध्यायः ॥

# त्रिसप्ततितमोऽध्यायः ॥



पञ्चभिर्ब्रह्महत्यादिमहापातकसंयुतैः ।
पाषण्डैर्नास्तिकैश्चैव सूतिक्योदक्ययाथवा ॥ १ ॥

अन्यैश्च पतितैर्वाथ तथान्यप्रतिलोमजैः ।
ध्रुवबेरे च संस्पृष्टे स्पृष्टे बिम्बे च कौतुके ॥ २ ॥

महापातकसंयुक्तैश्चण्डालाद्यैरुदक्यया ।
सूतिक्या वाथ संस्पृष्टे हवींषि विनिवेदिते ॥ ३ ॥

महाशान्तिं च सप्ताहमब्जाग्नौ जुहुयात्पुनः ।
ब्राह्मणान् भोजयित्वा च शक्तितो दक्षिणां ददेत् ॥ ४ ॥

अधिवासं च पूर्वोक्तं कारयित्वा यथाविधि ।
ध्रुवबेरे प्रकुर्वीत स्पृष्टे तत्र च पूर्ववत् ॥ ५ ॥

वास्तुहोमं तथा हुत्वा स्नपनोक्तक्रमेण च ।
कलशैः स्नापयित्वैव प्रतिष्ठां कारयेत्पुनः ॥ ६ ॥

आशौचवद्द्विजैः स्पृष्टे ध्रुवबेरे च कौतुके ।
वेददूषकपाषण्डैर्दीक्षितैर्देवलैरपि ॥ ७ ॥

शूद्रैर्वाथानुलोमैर्वा श्वभिर्वा कुक्कुटादिभिः ।
एवमादिनिकृष्टैश्चास्पृश्यैः स्पृष्टेऽपि पूर्ववत् ॥ ८ ॥

हुत्वैकाहं महाशान्तिमधिवासं विनैव च ।
स्नपनं च प्रतिष्ठोक्तं कृत्वैव स्थापयेत्पुनः ॥ ९ ॥

अनुक्तेषु तथान्यत्र महादोषेषु सर्वशः ।
पूर्वोक्तेन क्रमेणैव प्रतिष्ठां पुनराचरेत् ॥ १० ॥

अल्पदोषसमायुक्ते बिम्बे स्पृष्टेऽखिलैरपि ।
अल्पदोषयुते स्पृष्टे हविष्यपि निवेदिते ॥ ११ ॥

दशकृत्वो महाशान्तिमब्जाग्नौ जुहुयात्तथा ।
स्नपनोक्तक्रमेणैव कलशैः स्नापयेद्विभुम् ॥ १२ ॥

दोषमल्पं महान्तं च समालोच्य यथाविधि ।
विचार्यैव विनिश्चित्य ज्ञात्वैव गुरुलाघवम् ॥ १३ ॥

तस्य दोषस्य सदृशं प्रायश्चित्तं समाचरेत् ।
यथा दोषेऽग्निहोत्रस्य पुनराधानमुच्यते ॥ १४ ॥

तथा दोषे तु बिम्बस्य पुनः स्थापनमाचरेत् ।
तस्योपघातमित्युक्तं प्रायश्चित्तं तु यत्र तु ॥ १५ ॥

कलशैः स्नपनं तत्र बिम्बस्येति विधीयते ।
चण्डालाद्यैश्च सूतक्या महापातकसंयुतैः ॥ १६ ॥

गर्भालये प्रविष्टे च बिम्बस्यातीव पार्श्वतः ।
अन्यविप्रप्रवेशे तु स्पृष्टे बिम्बे च मोहतः ॥ १७ ॥

गोमयेनोपलिप्यैव प्रोक्षयेत्पञ्चगव्यकैः ।
वास्तुहोमं च हुत्वैव पर्यग्निं कारयेत्पुनः ॥ १८ ॥

अन्यद्रव्यस्य शुद्धिं च यथाविधि च कारयेत् ।
तथाब्जाग्नौ महाशान्तिमेकाहं जुहुयात्पुनः ॥ १९ ॥

कलशैर्विधिना सम्यक् स्नापयेत स्वशक्तितः ।
पुनः प्रतिष्ठामत्रापि कारयेदिति केचन ॥ २० ॥

निर्माल्यस्यार्चने वापि निवेदितनिवेदने ।
तयोश्च सङ्करे तत्र पञ्चगव्यैः कुशोदकैः ॥ २१ ॥

शुद्धोदैरभिषिच्यैवमर्चयित्वा निवेदयेत् ।
अर्चकान्यद्विजैः स्पृष्टे शुद्धोदैरभिषेचयेत् ॥ २२ ॥

अन्यद्विजैश्च संस्पृष्टे पूर्ववद्धोममाचरेत् ।
मृगैर्वा पक्षिभिर्वाथ सर्पाद्यैश्च प्रवेशने ॥ २३ ॥

इदंविष्णुर्वेति मन्त्रेण प्रोक्षयेत्पञ्चगव्यकैः ।
शान्तिहोमं च हुत्वैव शक्तितो दक्षिणां ददेत् ॥ २४ ॥

अथातोऽद्भुतशान्तिं च प्रवक्ष्यामि तपोधनाः ।
बेरस्य रोदने दृष्टे बन्धने भाषणे तथा ॥ २५ ॥

अन्यत्र दृष्टे पूर्वस्मादथवा परिवर्तने ।
तदूर्ध्वाधोगते तस्मिन् यद्गते तद्विपर्यये ॥ २६ ॥

ज्वालायुक्ते धूमकेतौ रुधिरस्रावणेऽपि च ।
तृणादौ क्रिमिकीटादौ देवबिम्बे समुद्भवे ॥ २७ ॥

स्वप्ने च क्रोधनादौ च दृष्टे तत्र तथाद्भुते ।
आकाशे तु ग्रहाणां च दृष्टे चाद्भुतदर्शने ॥ २८ ॥

तेषां युद्धे च संभूते प्रतिसूर्यस्य दर्शने ।
अशनेः पतने वापि महावातसमुद्भवे ॥ २९ ॥

विमाने पतिते भिन्ने तस्यैव चलने तथा ।
अकाले पूर्णचन्द्रे च क्षीणयुक्ते तथैव च ॥ ३० ॥

सूर्येऽपि क्षीणयुक्ते च प्रतिसूर्यस्य दर्शने ।
प्रतीपगमने तस्य दिवा नक्षत्रदर्शने ॥ ३१ ॥

दिशादाहे च दिग्धूमे महोल्कापतने सति ।
एवमाद्यद्भुते दृष्टे राज्ञो राष्ट्रस्य वै पुनः ॥ ३२ ॥

ग्रामस्यापि विनाशः स्यात्ततश्शान्तिं समाचरेत् ।
अब्जाग्नौ च महाशान्तिं सप्ताहं वा त्र्यहं तु वा ॥ ३३ ॥

आज्येन चरुणा हुत्वा शान्तिमन्त्रं च पूर्ववत् ।
विधिना कलशैर्भक्त्या स्नापयेच्च ततो हरिम् ॥ ३४ ॥

महाहविर्निवेद्यैव दद्यादाचार्यदक्षिणाम् ।
मन्त्रैश्च वैष्णवैः स्तुत्वा ब्राह्मणानपि भोजयेत् ॥ ३५ ॥

तथैव भित्तेः स्थूणस्य कवाटस्य भुजङ्गयोः ।
चलने गमने वापि तिर्यग्याते विपर्यये ॥ ३६ ॥

चरे ब्राह्मणगेहादौ वृक्षादौ च स्थिरेऽथवा ।
कालदेशस्वभावस्य विपरीतसमुद्भवे ॥ ३७ ॥

शान्तिहोमं च हुत्वैव शक्तितो दक्षिणां ददेत् ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे अस्पृश्यस्पर्शनप्रायश्चित्तविधि-
र्नाम त्रिसप्ततितमोऽध्यायः ॥

---

## चतुस्सप्ततितमोऽध्यायः ॥

अतःपरं प्रवक्ष्यामि द्वितीयं तरुणालयम् ।
ध्रुवबेरे च जीर्णे च भिन्ने च्छिन्ने तथैव च ॥ १ ॥

वर्णक्षये च पतिते स्फुटितादिसमुद्भवे ।
विमाने पतिते भिन्ने च्छिन्ने जीर्णे तथैव च ॥ २ ॥

इष्टकानां तु प्रक्षेपे सुधावर्णानुलेपने ।
शिलाप्रक्षेपणे वापि नवकर्मणि सर्वदा ॥ ३ ॥

नवीकरणमुद्दिश्य बालागारं प्रकल्पयेत् ।
आग्नेय्यां धनलाभः स्याद्याम्ये वृद्धिकरो भवेत् ॥ ४ ॥

नैर्ऋत्यां कर्मसिद्धिः स्याद्वारुण्यां धनवृद्धिदम् ।
वायव्यां दिशि कुर्याच्चेत्कर्तुर्दुःखं महद्भवेत् ॥ ५ ॥

सौम्ये कर्मविनाशः स्यादीशान्यां विघ्नमिष्यते ।
ऐन्द्रे महद्भयं प्रोक्तं तद्देशे मरणं ध्रुवम् ॥ ६ ॥

इष्टदेशं समालोक्य कारयेत्तरुणालयम् ।
यथा मूलालयद्वारं तथैव तरुणालयम् ॥ ७ ॥

विमानस्य समं वापि तच्चतुर्थैकहीनकम् ।
ऊर्ध्वं कपोततुल्यं वा पादाग्रसममेव च ॥ ८ ॥

श्रीहरेश्शयनागारे शून्यागारे च वर्जयेत् ।
तस्य चावरणेऽतीते बालागारं न कल्पयेत् ॥ ९ ॥

जीर्णादिदोषसंयुक्ते बेरे तत्रार्चनं तु यत् ।
तद्विनाशो भवेत्तस्मात्कालापेक्षा न विद्यते ॥ १० ॥

आचार्यः स्थापकांश्चैव होमार्थं ऋत्विजोऽपि वा ।
पूर्वोक्तगुणसम्पन्नान् वरयेत विधानतः ॥ ११ ॥

यागशालां तथा कृत्वा शय्यावेदिं च पञ्च च ।
कारयेदग्निकुण्डानि सर्वं पूर्ववदाचरेत् ॥ १२ ॥

श्वः कर्तास्मीति संचिन्त्य यजमानोऽथ भक्तितः ।
वस्त्रयुग्माङ्गुलीयैश्च हेमसूत्रादिभूषणैः ॥ १३ ॥

आचार्यं पूजयेत्तत्र स्थापकांश्च स्वशक्तितः ।
सायं सन्ध्यामुपास्यैव रात्रावेव विशेषतः ॥ १४ ॥

बालागारस्योत्तरतः कुण्डे चौपासनीयके ।
आघारं विधिवत्कृत्वा वास्तुहोमश्च हूयताम् ॥ १५ ॥

पर्यग्निं कारयेत्तत्र बालागारं विशेषतः ।
पञ्चगव्यैस्समभ्युक्ष्य पुण्याहं वाचयेत्क्रमात् ॥ १६ ॥

पूर्वयामे गते पश्चाद्देवेशं सम्यगर्चयेत् ।
हवींषि च निवेद्यैव भक्त्या देवं प्रणम्य च ॥ १७ ॥

पश्चाग्नीनामथाघारं पूर्ववज्जुहुयात्क्रमात् ।
पूर्ववत्कुम्भमादाय तन्तुना च यवान्तरम् ॥ १८ ॥

त्रिगुणेनैव सूत्रेण चैकसूत्रेण वा पुनः ।
इन्द्रं नरो न इत्युक्त्वा तन्तुना वेष्टनं चरेत् ॥ १९ ॥

शुची वो हव्येति मन्त्रेण कुम्भप्रक्षालनं चरेत् ।
नमस्सुलोमिमन्त्रेण पूरयेद्गन्धवारिभिः ॥ २० ॥

नवरत्नं क्षिपेत्तत्र सौवर्णगरुडादिकान् ।
आयुधान् मङ्गलांश्चैव वर्णचिह्नानि सर्वशः ॥ २१ ॥

प्रक्षिप्य च कुशं कूर्चं वस्त्रयुग्मेन वेष्टयेत् ।
देवदेवस्य पुरतस्तथा कुम्भं सुसाधितम् ॥ २२ ॥

संन्यसेत्प्रणवेनैव देवपार्श्वे यमान्तरे ।
कुशैः पुष्पैस्सुसंबद्धं कुर्याद्वृद्धिं च वाचयेत् ॥ २३ ॥

प्रार्थयेद्देवमुक्त्वैव भक्त्या देवेशमव्ययम् ।
अनर्हमेतद्गेहं ते जीर्णं तूर्णं व्यपोह्य च ॥ २४ ॥

यावद्द्रव्यं नवं कृत्वा प्रतिष्ठां कारयामहे ।
वस त्वं कौतुके बिम्बे देवदेव प्रसीद मे ॥ २५ ॥

एवं ध्यात्वा नमस्कृत्य प्रार्थयेद्भक्तिसंयुतः ।
एकं संवत्सरं वाथ द्वौ वा त्रीन्वा यथाक्रमम् ॥ २६ ॥

इष्टं संवत्सरं यावत्तावद्विज्ञापयेद्बुधः ।
ध्यायन्मन्त्रं समुच्चार्य ध्रुवबेरात्ततस्तथा ॥ २७ ॥

शक्तिमादाय कूर्चेन कुम्भे तस्मिन्निवेशयेत् ।
ततो देवं प्रणम्यैव नादेयेन जलेन वै ॥ २८ ॥

मन्त्रेण ध्रुवबेरस्य पादप्रक्षालनं चरेत् ।
देव्यावपि मुनी चान्यान् गर्भालयगतानपि ॥ २९ ॥

आवाहयेद्विधानेन तत्तद्देवमनुस्मरन् ।
कुम्भं बिम्बं समादाय स्नानश्वभ्रे निवेशयेत् ॥ ३० ॥

कलशैश्च प्रतिष्ठोक्तैः पूर्ववत् स्नापयेद्बुधः ।
प्लोतवस्त्रेण संमृज्य वस्त्रमाभरणं ददेत् ॥ ३१ ॥

तत उत्थाप्य देवेशं कुम्भेन सह संयुतम् ।
शयनानि पञ्च चास्तीर्य तत्र देवं निवेशयेत् ॥ ३२ ॥

पुण्याहं वाचयित्वैव बद्धप्रतिसरं तथा ।
पूर्वोक्तेन क्रमेणैव शयने शाययेत्प्रभुम् ॥ ३३ ॥

दक्षिणाग्नौ विशेषेण हौत्रमत्र प्रशंसयेत् ।
मूर्तिमन्त्रैर्विधानेन देवानावाहयेत्तथा ॥ ३४ ॥

आवाहनक्रमेणैव निरूप्याज्याहुतीर्यजेत् ।
सर्वेष्वपि च होमेषु पूर्वोक्तेन क्रमेण वै ॥ ३५ ॥

तत्तन्मन्त्रैस्तथा सर्वैर्जुहुयुस्तैरसङ्करम् ।
आचार्यस्तु प्रभाते तु स्नात्वा स्नानविधानतः ॥ ३६ ॥

ततस्सुप्तं हरिं किञ्चिदोङ्कारेण प्रबोधयेत् ।
ओङ्कारजयशब्दैश्च नृत्तगेयैस्समायुतम् ॥ ३७ ॥

स्तोत्रध्वनिसमायुक्तं वाद्यघोषसमायुतम् ।
शकुनसूक्तं जपन्नेव देवमुत्थाप्य वै ततः ॥ ३८ ॥

स्थिरराशिं विहायैव चरराशिं प्रगृह्य च ।
चरोदये च नक्षत्रे चरराशौ विशेषतः ॥ ३९ ॥

तत्कुम्भं बिम्बमादाय बालागारं प्रवेशयेत् ।
रत्नन्यासं विना तत्र स्थापयेदिति शासनम् ॥ ४० ॥

प्रतद्विष्णुस्तवतेति मन्त्रेण स्थापनं स्मृतम् ।
शक्तिमादाय कुम्भस्थामिदं विष्णुरिति ब्रुवन् ॥ ४१ ॥

आयातु भगवांश्चेति बिम्बे शक्तिं निवेशयेत् ।
तथा देव्यौ मुनीशौ वा ब्रह्माणं शङ्करं तथा ॥ ४२ ॥

गर्भालयस्थितान्सर्वान् द्वारपालानपि क्रमात् ।
तदालये समावाह्य विमानस्याधिदेवताः ॥ ४३ ॥

बाह्यस्थपरिवारांश्च तत्तत्स्थाने समाह्वयेत् ।
पुण्याहान्ते तमभ्यर्च्य हविस्सम्यङ् निवेदयेत् ॥ ४४ ॥

आवाहनविसर्गौ द्वौ नाचरेत्तरुणालये ।
उत्सवस्नपनादीनि पूर्ववत्सर्वमाचरेत् ॥ ४५ ॥

नवकर्मसमाप्तौ तु पूर्ववत्स्थापयेद्बुधः ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे द्वितीयतरुणालयविधिर्नाम चतुस्सप्ततितमोऽध्यायः ॥

---

## पञ्चसप्ततितमोऽध्यायः ॥

अतःपरं प्रवक्ष्यामि ध्रुवबेरस्य निष्कृतिम् ।
जीर्णादिदोषैरुक्तैश्च ध्रुवबेरे समाहिते ॥ १ ॥

आलये चोक्तदोषैश्च समायुक्ते तथैव च ।
बालालयं प्रकल्प्यैव देवं संस्थाप्य तत्र वै ॥ २ ॥

नादेयं जलमादाय पादं प्रक्षाल्य पूर्ववत् ।
यत्र दोषस्तु दृश्येत तत्र संस्कारमाचरेत् ॥ ३ ॥

वर्णे वाप्यनुवर्णे वा स्फुटितं दृश्यते यदि ।
तत्र वर्णं समादाय शिल्पिभिस्तु सुयोजयेत् ॥ ४ ॥

पटादूर्ध्वं तु दोषश्चेत्तत्र संस्कारमाचरेत् ।
निर्दोषश्चेत्पटादूर्ध्वं मौक्तिकादि मृदैव वा ॥ ५ ॥

आलेपयेद्यथान्यायं तद्विद्भिश्शिल्पिभिः पुनः ।
वर्णं पूर्वोक्तविधिना कारयेत प्रयत्नतः ॥ ६ ॥

पटं च दोषयुक्तं चेत्पटं सर्वं विसृज्य च ।
शोधयित्वा विधानेन पटमाच्छाद्य कारयेत् ॥ ७ ॥

शूलोर्ध्वं दोषयुक्तं चेदाशूलं शोधयेत्तदा ।
मृण्मये दारवे चैव शोधयित्वा क्रमेण वै ॥ ८ ॥

शैलजे च तदूर्ध्वं तु दोषं चेच्छोधयेत्तथा ।
शर्कराश्च मृदा लिप्य पूर्ववत्कारयेद्बुधः ॥ ९ ॥

शूले च मृण्मये जीर्णे शोधयित्वा तथैव च ।
तत्सर्वं च समाहृत्य विधिनाऽग्नौ क्षिपेद्बुधः ॥ १० ॥

दारुसंग्रहणं कृत्वा शूलस्थापनमार्गतः ।
स्थापयित्वा विधानेन शेषं पूर्ववदाचरेत् ॥ ११ ॥

दारवे च तथा जीर्णे तं त्यक्त्वान्यं प्रगृह्य च ।
यथापूर्वं तथा सम्यक्कारयेत प्रयत्नतः ॥ १२ ॥

शूले च मृण्मये जीर्णे तथा जीर्णे च दारवे ।
शैलजं बेरमाहृत्य स्थापयेच्चेत्तदुत्तमम् ॥ १३ ॥

बेरे जीर्णे विमाने च नवकर्म समाचरेत् ।
कुर्याद्गौणे पुनर्मुख्यं मुख्ये गौणं न चाचरेत् ॥ १४ ॥

शैलजं ध्रुवबिम्बं यदङ्गहीनं भवेद्यदि ।
तद्बेरं च समादाय समुद्रे प्रक्षिपेत्तथा ॥ १५ ॥

शिलामन्यां गृहीत्वैव शिलास्थापनमार्गतः ।
स्थापयित्वा तदूर्ध्वं तु पूर्ववत्कारयेद्बुधः ॥ १६ ॥

लोहजं ध्रुवबेरं तदङ्गहीनं भवेद्यदि ।
कौतुकस्य यथा प्रोक्तं तथा तत्कारयेदिति ॥ १७ ॥

पूर्वं तु शैलजं यत्र तत्र शैलजमेव वै ।
पूर्वं तु लोहजं यत्र तत्र लोहजमेव वै ॥ १८ ॥

विपरीतं तु यः कुर्याद्विनश्यति न संशयः ।
स्थितं बेरं तु जीर्णं चेदासीनं वापि कारयेत् ॥ १९ ॥

आसीनमपि यद्बेरं शयानं वा प्रकल्पयेत् ।
पूर्वं शयानं देवेशमासीनं स्थानकं न च ॥ २० ॥

आसीनमपि तिष्ठन्तं पुनर्नैव समाचरेत् ।
दैविके चार्षिके नैवं तथा पौराणिकेऽपि च ॥ २१ ॥

यथा पूर्वं तथा सम्यक् कारयेत विधानतः ।
शर्करादिसमालेपक्रियां पूर्ववदाचरेत् ॥ २२ ॥

तत्पीठे ध्रुवबेरस्य चलने सति तत्क्षणात् ।
बालालयं प्रकुर्वीत पूर्वोक्तेन विधानतः ॥ २३ ॥

शिल्पिभिस्सुदृढं कृत्वा पुनस्स्थापनमाचरेत् ।
तत्नाशे तथा कुर्यात्तत्तद्रत्नानि चार्पयेत् ॥ २४ ॥

तद्द्रव्यं रूपवर्णौ च प्रमाणं पूर्ववद्भवेत् ।
अन्यत्र स्थापितं पूर्वं ध्रुवं वा कौतुकं तु वा ॥ २५ ॥

आहृत्य च तदज्ञानात्स्थापितं चेत्प्रमादतः ।
क्षिप्रं विवर्ज्य तद्बिम्बं महाशान्तिं च कारयेत् ॥ २६ ॥

अन्यद्बिम्बं समादाय स्थापयित्वा तदर्चयेत् ।
तद्बिम्बमपि तत्स्थाने पूर्ववत्स्थापयेद्बुधः ॥ २७ ॥

बृहद्बेरप्रतिष्ठा चेद्दोषयुक्तं हरिं प्रति ।
तरुणालयं च कृत्वैव तत्र संस्थाप्य चार्चयेत् ॥ २८ ॥

निर्दोषं तत्र तद्बिम्बं वस्त्रेण परिवेष्टयेत् ।
ईकारादींश्च जुहुयादष्टाशीत्याहुतिं तदा ॥ २९ ॥

सहस्राहुतिपर्यन्तं यजेत्तद्दोषशान्तये ।
परिवारे तु दोषे तु तत्तत्पार्श्वे तथैव च ॥ ३० ॥

बालागारं च कृत्वैव तत्तन्मन्त्रं सवैष्णवम् ।
हुत्वा च तत्र संस्थाप्य नवकर्म च कारयेत् ॥ ३१ ॥

प्रासादे मण्डपे कूटे शालायां वा तथैव च ।
तत्तद्दोषं च संशोध्य वास्तुहोमस्समूह्यताम् ॥ ३२ ॥

द्वितले त्रितले वापि चतुष्पञ्चतलेऽथवा ।
द्वादशान्ततले तत्र दोषयुक्तं तलं च यत् ॥ ३३ ॥

तत्तत्स्थलं समुद्दिश्य बालागारं प्रकल्पयेत् ।
द्वितीयावरणे वाथ प्रथमावरणेऽथवा ॥ ३४ ॥

उक्तदेशे यथान्यायं कल्पयेत्तरुणालयम् ।
द्वारमभ्यन्तरं तद्वन्मण्टपेन समन्वितम् ॥ ३५ ॥

बालागारं च कृत्वैव तत्र संस्थाप्य चार्चयेत् ।
विमाने वाथ बेरे वा तले वा दोषसंयुते ॥ ३६ ॥

तत्तद्दोषं व्यपोह्यैव नवकर्म च कारयेत् ।
स्थापयेत पुनस्तत्र शान्तिहोमसमायुतम् ॥ ३७ ॥

निर्दोषे च तले तत्र प्रोक्षयेत्पञ्चगव्यकैः ।
बाह्यद्वारे तदूर्ध्वे च सोपानक्रमसंयुते ॥ ३८ ॥

अधस्तले तु निर्दोषे दोषश्चोर्ध्वतले भवेत् ।
सदोषतलमुद्दिश्य बालागारं प्रकल्पयेत् ॥ ३९ ॥

निर्दोषतलमुद्दिश्य बालागारं न चाचरेत् ।
अर्चयेत तले तत्र देवं पूर्ववदेव वै ॥ ४० ॥

ऊर्ध्वं तलं समुद्दिश्य पश्चिमे तु प्रकल्पयेत् ।
अधस्तलस्य तत्पूर्वं स्थानं सम्यक् प्रकल्पयेत् ॥ ४१ ॥

तत्तत्स्थानं समुद्दिश्य बालागारं विचक्षणः ।
एवमेव प्रकारेण पूर्वे पूर्वे प्रकल्पयेत् ॥ ४२ ॥

अधस्तलस्थतद्बिम्बमूर्ध्वे तत्रैव चार्चयेत् ।
लोभादज्ञानतो वापि चार्चयेच्चेद्विनश्यति ॥ ४३ ॥

तथा कृते पुनः क्षिप्रं बालागारे प्रकल्प्य च ।
शान्तिहोमं च हुत्वैव स्थापयित्वा तथा च यत् ॥ ४४ ॥

पञ्चमूर्तिविधाने तु बालागारं यथाविधि ।
तत्तन्मूर्तिं समुद्दिश्य तत्तद्दिशि च कारयेत् ॥ ४५ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे जीर्णबेरसंस्कारविधिर्नाम पञ्चसप्ततितमोऽध्यायः ॥

---

## षट्सप्ततितमोऽध्यायः



दोषयुक्तस्य बिम्बस्य संस्कारं कारयेद्बुधः ।
एवमभ्यन्तरे प्रोक्तो नवबिम्बक्रियाक्रमः ॥ १ ॥

आलयस्य बहिः पार्श्वे तस्यापि मुखमण्टपे ।
शिलायामिष्टकायां च सुधायां च तथैव च ॥ २ ॥

जीर्णायां शोधयित्वा तां प्रक्षिप्य च दृढं पुनः ।
तत्तत्प्रक्षेपणं कृत्वा सुधावर्णानुलेपनम् ॥ ३ ॥

कारयेन्नवकर्मैवं प्रायश्चित्तं यजेत्पुनः ।
पञ्चगव्यैः समभ्युक्ष्य वास्तुहोमस्सुहूयताम् ॥ ४ ॥

पौण्डरीकाग्निमादाय परिषिच्य च पावकम् ।
वैष्णवं विष्णुसूक्तं च पुरुषसूक्तं यजेत्क्रमात् ॥ ५ ॥

व्याहृतीरङ्गहोमं च पारमात्मिकसंयुतम् ।
जीर्णबेरपरित्यागविधिं वक्ष्ये तपोधनाः ॥ ६ ॥

जीर्णबेरेऽर्चनं यत्तद्दोष एव भविष्यति ।
तद्दोषशमनार्थाय जीर्णबेरं परित्यजेत् ॥ ७ ॥

जीर्णं सर्वं च संशोध्य समूह्य च विशेषतः ।
सुदर्भरज्जुभिर्बद्ध्वा वस्त्रयुग्मेन वेष्ट्य च ॥ ८ ॥

आचार्यः स्वयमुद्धृत्य ऋत्विगाद्यैस्सुवाहयेत् ।
एकायनी यजुर्वेदपाठं तत्र समाचरेत् ॥ ९ ॥

शूद्रेणोद्धृत्य तद्भक्तैर्विप्रैर्वाप्यथ वाहयेत् ।
जले क्षिपेद्विधानेन शान्तिहोमः सुहूयताम् ॥ १० ॥

ब्राह्मणान् भोजयित्वैव समुद्रमथवा पुनः ।
समुद्रगायां नद्यामप्यशोष्ये च महाजले ॥ ११ ॥

विमोच्य वस्त्रमाल्यादीन् वारुणं मन्त्रमुच्चरन् ।
प्रक्षिपेत्तज्जले तीरे शान्तिहोमं च कारयेत् ॥ १२ ॥

अङ्गहोमं च हुत्वा तु वैष्णवं च यजेत्पुनः ।
दारवं दाहयेद्विद्वान् मृण्मयं प्रक्षिपेज्जले ॥ १३ ॥

दाहितं वापि तद्भस्म खानयेदप्सु निक्षिपेत् ।
पश्चादालयमाविश्य शान्तिमन्त्रान्प्रपाठयेत् ॥ १४ ॥

आचार्यदक्षिणां दद्याद्यथाशक्ति मुदान्वितः ।
विधिरेवं तु निर्दिष्टो जीर्णबेरविसर्जने ॥ १५ ॥

सर्वद्रव्यकृतान् बेरान् विसृज्यैव विधानतः ।
कारयित्वा पुनर्बेरमाचार्यो लक्षणान्वितम् ॥ १६ ॥

संस्थाप्य च यथान्यायमर्चयेद्विधिकोविदः ।
अथातस्संप्रवक्ष्यामि जीर्णं वै कौतुकादिके ॥ १७ ॥

कौतुके ताम्रजे बिम्बे शैलजे दारवे तथा ।
जीर्णे च्छिन्ने च भिन्ने च खण्डे वृद्धे तथैव च ॥ १८ ॥

प्रमाणे चैव हीनेऽपि बिम्बं त्याज्यमिति स्मृतम् ।
जीर्णबेरपरित्यागे यदुक्तं सर्वमाचरेत् ॥ १९ ॥

वस्त्रेण बिम्बं संवेष्ट्य तत्प्रक्षिप्य जलाशये ।
मधूच्छिष्टप्रयोगेन बिम्बं कृत्वा यथाविधि ॥ २० ॥

पूर्ववद्बिम्बमादाय विधिना स्थापयेत्पुनः ।
कालापेक्षा न कर्तव्या शीघ्रं कर्मेदमाचरेत् ॥ २१ ॥

वीशशैषिकचक्राणां बिम्बे दोषसमुद्भवे ।
अन्येषां परिवाराणां जीर्णदोषोद्भवे सति ॥ २२ ॥

एवमेव प्रकुर्वीत त्यागं च स्थापनक्रमम् ।
जीर्णबेरपरित्यागे यदुक्तं तत्समाचरेत् ॥ २३ ॥

शिरः कण्ठमुरः कुक्षिर्बाहू कोष्ठं च पाणिकः ।
कटी चोरू तथा जङ्घे महाङ्गानीति चक्षते ॥ २४ ॥

चक्षुश्च नासिका चोष्ठौ जिह्वा चाङ्गुलयस्तथा ।
कर्णे च सहजातानि चैतान्यङ्गानि वै विदुः ॥ २५ ॥

दन्ता नखाश्च रोमाणि केशपादादिकानि तु ।
उपाङ्गानीति चोक्तानि तदङ्गे पुनरुद्भवात् ॥ २६ ॥

मकुटं भूषणं वस्त्रं शिरश्चक्रं तथैव च ।
आयुधं शङ्खचक्रौ च पादपद्मं च पीठकं ॥ २७ ॥

प्रभा च च्छत्रं चैतानि प्रत्यङ्गानि विदुर्बुधाः ।
पूर्वोक्ताङ्गविहीने तु बिम्बं तत्कौतुकं तथा ॥ २८ ॥

शान्तिहोमं ततो हुत्वा पूर्ववत्त्यागमाचरेत् ।
उपाङ्गहीने बिम्बस्य ताम्रजस्य तु भक्तितः ॥ २९ ॥

ध्रुवबेरे तथा शक्तिं समारोप्य पुनस्तथा ।
तुल्यलोहेन सन्धानं कृत्वा शान्तिं सुहूयताम् ॥ ३० ॥

तथा पुरुषसूक्तेन विष्णुसूक्तेन वैष्णवैः ।
ईकारादींश्च जुहुयादष्टाशीतिसमायुतम् ॥ ३१ ॥

रात्रिसूक्तेन हुत्वैव जयाद्यैर्जुहुयात्पुनः ।
बिम्बं च पूर्ववत्कृत्वा प्रतिष्ठां कारयेत्पुनः ॥ ३२ ॥

प्रत्यङ्गे च तथा हीने सन्धानं कारयेत् क्रमात् ।
बिम्बस्य चलने पीठे तथा पीठे वियोजिते ॥ ३३ ॥

रेखासुषिरसंयुक्ते सन्धानं कारयेद्दृढम् ।
वस्त्रादिषु च चक्रे च च्छेदे भेदे तथैव च ॥ ३४ ॥

सन्धानं च पुनः कृत्वा निश्चयित्वोक्तवत्क्रमात् ।
पूर्वोक्तशान्तिं हुत्वैव पुनस्संस्थापयेत्क्रमात् ॥ ३५ ॥

बिम्बस्य ताम्रजस्यापि कर्णनासेक्षणादिकम् ।
अङ्गहीने तु सन्धानं कुर्यादित्याह वै भृगुः ॥ ३६ ॥

उपाङ्गे तस्य हीनेऽपि शैलजं दारवं त्यजेत् ।
सन्धानयोग्यं सन्दध्यान्नो चेद्बिम्बं परित्यजेत् ॥ ३७ ॥

प्रत्यङ्गस्य च हीनेऽपि शैलजे दारवे तथा ।
सन्धानयोग्यं न त्याज्यमनर्हं सन्त्यजेद्बुधः ॥ ३८ ॥

उपाङ्गहीने प्रत्यङ्गहीने चापि तथैव च ।
शैलजं दारवं बिम्बं त्यजेदित्येव केचन ॥ ३९ ॥

मकुटे भूषणे वस्त्रे नखे वा केशरोमयोः ।
चक्रे शङ्खे शिरश्चके ताम्रे सन्धानमाचरेत् ॥ ४० ॥

हस्ते हस्ततले हीने नासादौ दृष्टिमण्डले ।
हीनाङ्गुलौ तथा कर्णे वृद्धे बिम्बे तथैव च ॥ ४१ ॥

कर्णादौ लक्षणे हीने त्याज्यमेवेति मे मतिः ।
जीर्णमालक्ष्य तत्त्याज्यं बेरत्यागविधानतः ॥ ४२ ॥

ताम्रजस्याङ्गसन्धानं केचिदाहुर्मनीषिणः ।
उपाङ्गे चैव प्रत्यङ्गे अङ्गे चैव विहीनके ॥ ४३ ॥

सन्धानयोग्यं सन्धाय पुनश्शीघ्रं प्रपूजयेत् ।
महाङ्गस्य च भङ्गे तु देवदेवस्य शार्ङ्गिणः ॥ ४४ ॥

शैलजं मृण्मयं वापि दारवं बेरमेव वा ।
शास्त्रोक्तविधिना त्यक्त्वा पुनरन्यं समाहरेत् ॥ ४५ ॥

पुनश्शास्त्रविधानेन स्थापयित्वार्चयेद्बुधः ।
सौवर्णं राजतं बिम्बमङ्गहीनं भवेद्यदि ॥ ४६ ॥

न तत्त्याज्यमिति प्रोक्तं बिम्बं तत्पूर्ववत्पुनः ।
सन्धानं च पुनः कृत्वा विधिना स्थापयेत्पुनः ॥ ४७ ॥

प्रमाणहीनं वृद्धं च जीर्णं रौक्मं च राजतम् ।
लोहवत्तु समाहृत्य हुत्वा पूर्वोक्तशान्तिकम् ॥ ४८ ॥

मधूच्छिष्टविधानेन नवीकरणमाचरेत् ।
अक्ष्युन्मेषादिकं कृत्वा प्रतिष्ठापयति क्रमात् ॥ ४९ ॥

सौवर्णबिम्बं यत्कुर्यात्ताम्रजं चेति केचन ।
रत्नजप्रतिमां यत्तु रूपमात्रं समाहरेत् ॥ ५० ॥

दारवे शैलजे ताम्रे राजते रौक्मजेऽथवा ।
रत्नेनैव कृते पूर्वं विधिना स्थापितेऽर्चिते ॥ ५१ ॥

कौतुकादौ पुनश्शङ्कां निर्दोषेण समाचरेत् ।
अर्च्यमाने तु तद्दोषे बिम्बे तत्र विशेषतः ॥ ५२ ॥

लोहगौरवमुद्दिश्य पुनर्बिम्बं न कारयेत् ।
निर्दोषादर्च्यमानं तद्बिनान्यत्स्थापयेद्यदि ॥ ५३ ॥

यजमानस्य राष्ट्रस्य राज्ञो दोषो महान् भवेत् ।
जीर्णादिदोषयुक्तं वा हीनाङ्गं वा भवेद्यदि ॥ ५४ ॥

तद्बिम्बं तु परित्यज्य पुनर्बिम्बं समाहरेत् ।
शक्तोऽधिकेन द्रव्येण कारयेच्चेत्तदुत्तमम् ॥ ५५ ॥

पूर्वं येन कृतं बिम्बं तद्द्रव्येणाथवा पुनः ।
पूर्वं मुख्यं तु तद्गौणं कारयेच्चेद्विनश्यति ॥ ५६ ॥

पूर्वं गौणं पुनर्मुख्य कारयेच्चेत्तदुत्तमम् ।
उत्तमे तु कृते तस्मिन्नुत्तमं पदमाप्नुयात् ॥ ५७ ॥

अङ्गहीनादियुक्ते तत् कौतुके पूर्वमर्चिते ।
ध्रुवबेरे तु तच्छक्तिं समारोप्य ततः क्रमात् ॥ ५८ ॥

बिम्बं शीघ्रं पुनः कृत्वा यावद्वै स्थापयेत्तथा ।
तावत्कौतुकपीठे तु स्थापनं बिम्बमेव तत् ॥ ५९ ॥

औत्सवं वाथ संन्यस्य ध्रुवबेरात्ततः क्रमात् ।
आवाह्य च विधानेन नित्यमर्चनमाचरेत् ॥ ६० ॥

कौतुकं पूर्ववत्कृत्वा तत्र संस्थाप्य चार्चयेत् ।
स्नपनं चोत्सवं तद्वत्स्वे स्थाने संनिवेशयेत् ॥ ६१ ॥

स्नपने चोत्सवे हीने कूर्चं स्वमं च तत्र वै ।
न्यस्य भक्त्या समावाह्य ध्यायन्देवं समर्चयेत् ॥ ६२ ॥

चोरैरपहृते बिम्बे शत्रुभिर्वा समाहृते ।
यावद्बिम्बं पुनः कुर्यात् तावत्कालं तु तत्र च ॥ ६३ ॥

स्वमे भक्त्या समावाह्य विधिनार्चयति क्रमात् ।
बिम्बं तत्पूर्ववत्कृत्वा कालापेक्षा न विद्यते ॥ ६४ ॥

पूर्वोक्तेन विधानेन प्रतिष्ठां कारयेद्बुधः ।
महाङ्गादिषु हीनेषु तद्बिम्बं लोहवत्स्मरन् ॥ ६५ ॥

सौवर्णं तु सकृत्तप्त्वा त्रिस्तप्त्वा राजतं तथा ।
तल्लोहमन्यलोहं च तप्त्वा संस्राव्य शास्त्रतः ॥ ६६ ॥

मधूच्छिष्टक्रियादीनि कुर्यात्पूर्वोक्तमार्गतः ।
बिम्बं कृत्वा विधानेन प्रतिष्ठाप्य समर्चयेत् ॥ ६७ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे जीर्णबेरपरित्यागविधिर्नाम
षट्सप्ततितमोऽध्यायः ॥

---

## सप्तसप्ततितमोऽध्यायः

अत ऊर्ध्वं प्रवक्ष्यामि पुनस्संस्थापनक्रमम् ।
राष्ट्रक्षोभे समुत्पन्ने चोरैर्व्याघ्रादिजन्तुभिः ॥ १ ॥

वल्मीकपादपाद्यैर्वा जीर्णदोषसमुद्भवे ।
विमाने चैव बेरे वा नवीकृत्य प्रयत्नतः ॥ २ ॥

जीर्णदोषं समालोच्य यथाविधि समाचरेत् ।
ग्रामान्तरगते बिम्बे स्थलान्तरगतेऽपि वा ॥ ३ ॥

निर्झराद्वा समुद्राद्वा नद्या वा परिलङ्घने ।
सद्यस्समर्चितुं शक्तः पुनरन्यत्र पूजयेत् ॥ ४ ॥

अशक्तः पूजितुं सद्यो वृक्षमूले तु स्थापयेत् ।
वृक्षमूले तथा वाप्यां कूपे संस्थाप्य रक्षयेत् ॥ ५ ॥

ध्रुवं वा कौतुकं बिम्बं स्नापनं चोत्सवं तथा ।
बलिबेरमथो वापि पर्षद्बिम्बानि वा पुनः ॥ ६ ॥

ज्ञात्वा बिम्बानि संगृह्य पुनः स्थाप्य समर्चयेत् ।
वारिगुप्ते च भूगुप्ते चिरकालगते सति ॥ ७ ॥

बहुजन्मकृतात्पुण्याद्भक्तानां च विशेषतः ।
भूम्यादिखनने यत्र बिम्बानां दर्शनं यदि ॥ ८ ॥

मुख्यगौणौ समालोच्य मुख्ये गौणं न चाचरेत् ।
गौणे मुख्यं प्रकुर्वीत सर्वशास्त्रेषु निश्चयः ॥ ९ ॥

अक्ष्युन्मेषं च रत्नं च जले चाप्यधिवासनम् ।
अङ्कुरादीनि सन्त्यक्त्वा अन्यत्पूर्ववदाचरेत् ॥ १० ॥

अङ्कुरार्पणमारभ्य कारयेदिति मन्मतम् ।
पञ्चाग्नीन्परिकल्प्यैव सभ्यमब्जमथापि वा ॥ ११ ॥

शिलया ध्रुवबेरं तु दर्शनीयं च सुन्दरम् ।
जीर्णं सर्वं समालोच्य प्रतिष्ठाप्य समर्चयेत् ॥ १२ ॥

अथवा चेद्भिरूपं तु स्थापितं चेत्त्वरान्वितः ।
तद्बेरोद्घाटनं यत्र यदि तत्र परीक्षयेत् ॥ १३ ॥

रेखासुषिरसंयुक्ते भग्ने चाङ्गादिहीनके ।
गुरुलाघवमालक्ष्य बेरं त्यक्त्वा विधानतः ॥ १४ ॥

पौराणे चार्षिके चैव दैविके तु स्वयंस्थले ।
अवैदिकमलक्षण्यमप्रमाणं न दोषकृत् ॥ १५ ॥

कर्तुः कालो न निर्दिष्टः पौराणिकमिति स्मृतम् ।
दैविकं ब्रह्मरुद्राद्यैः कृतं तत्परिकीर्तितम् ॥ १६ ॥

ऋषिभिर्मद्दशैर्लोके आर्षिकं सुप्रतिष्ठितम् ।
स्वयमाविर्भवेद्यत्तत्स्वयंव्यक्तमुदीरितम् ॥ १७ ॥

देव्यादिपरिवाराणि प्रभापीठं तथैव च ।
विधिना मार्गमालक्ष्य नवीकृत्य प्रयत्नतः ॥ १८ ॥

रत्ननाशे तु संप्राप्ते रत्नं तत्र पुनः क्षिपेत् ।
शिल्पिभिस्सुदृढं कृत्वा अष्टबन्धं प्रलेपयेत् ॥ १९ ॥

यागशालामलंकृत्य वास्तुहोमं सुहूयताम् ।
पूजयेत्पूर्ववत्कुम्भमधिवासादि पूर्ववत् ॥ २० ॥

कौतुकं बलिबेरं वाप्यौत्सवं स्नपनं तु वा ।
रत्नन्यासं विनैवात्र प्रतिष्ठाप्यार्चयेदिति ॥ २१ ॥

अन्यत्सव च कर्तव्यं यथापूर्वं तथाचरेत् ।
एवमत्र क्रमेणैव प्रतिष्ठां पुनराचरेत् ॥ २२ ॥

चलने चाग्निदाहे च चिरगुप्ते विनालयम् ।
जलगुप्ते च बिम्बानां प्रतिष्ठां पुनराचरेत् ॥ २३ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे पुनःप्रतिष्ठाविधानं नाम सप्तसप्ततितमोऽध्यायः ॥

## अष्टसप्ततितमोऽध्यायः ॥



अतःपरं प्रवक्ष्यामि तन्त्रसङ्करनिष्कृतिम् ।
विष्णोस्तन्त्रं द्विधा प्रोक्तं वैदिकं तान्त्रिकं क्रमात् ॥ १ ॥

वैखानसं पाञ्चरात्रं सौम्यमाग्नेयमित्यपि ।
नारायणेन संप्रोक्तमेतद्विखनसे पुरा ॥ २ ॥

चतुर्वेदैश्च संमिश्रं वैदिकं परिकीर्तितम् ।
तथा नारायणेनैव संन्यस्तं सूर्यसन्निधौ ॥ ३ ॥

आपत्काले च संप्राप्तं याज्ञवल्क्यादिभिः क्रमात् ।
एकायनगतैर्मन्त्रैस्संमिश्रं तान्त्रिकं स्मृतम् ॥ ४ ॥

वैखानसं वैदिकं स्यात्पाञ्चरात्रं तु तान्त्रिकम् ।
सौम्यं वैखानसं प्रोक्तमाग्नेयं पाञ्चरात्रकम् ॥ ५ ॥

सौम्यस्य वेदस्य च सौम्यमूर्तेः स्वस्यांशभूतस्य मुनेः प्रदानात् ।
सौम्यं तु नारायण आह पूर्वं वैखानसं वैदिकमन्त्रयुक्तम् ॥ ६ ॥

सौम्यस्य वेदस्य च रक्षणार्थमङ्गीकृतत्वादपि पाञ्चरात्रम् ।
आग्नेयमित्येव स वासुदेवः प्रोवाच तत्केवलमोक्षदत्वात् ॥ ७ ॥

सौम्यं सर्वत्र संपूज्यं ग्रामेषु नगरेषु च ।
मन्दिरेषु तथा राज्ञां गृहेषु गृहमेधिनाम् ॥ ८ ॥

आग्नेयं तु बहिर्ग्रामादरण्ये पर्वतेऽपि च ।
नदीसमुद्रतीरेषु पुण्यनद्यब्धिसङ्गमे ॥ ९ ॥

आश्रमेषु मुमुक्षूणां विविक्तेष्वितरेषु च ।
वनस्थैर्यतिभिः पूज्यं मुक्तिकामैरिति स्मृतम् ॥ १० ॥

आदौ यत्तन्त्रमाश्रित्य कृतं वै कर्षणादिकम् ।
तेन कुर्यात्प्रतिष्ठान्तं न कुर्यात्तन्त्रसङ्करम् ॥ ११ ॥

तन्त्रसङ्करदोषेण राजा राष्ट्रं विनश्यति ।
ग्रामस्य यजमानस्य स्थानं च विपदामपि ॥ १२ ॥

आचार्यश्चार्चकश्चापि पाचकः परिचारकः ।
यष्टा च विष्णुयागस्य पञ्च पञ्चासवः स्मृताः ॥ १३ ॥

सौम्यस्थाने शृणुध्वं वा कैङ्कर्यार्हान् रमापतेः ।
गर्भवैष्णवजन्मानौ स्थानाचार्यार्चकौ मतौ ॥ १४ ॥

पाचकः परिचारश्च तथैव परिकीर्तितौ ।
पाचकः परिचारश्च वैदिकानामसंभवे ॥ १५ ॥

शङ्खचक्राङ्कितभुजौ दीक्षितौ निगमाध्वना ।
ब्राह्मणः पाचकः प्रोक्तस्त्वन्ये वा परिचारकाः ॥ १६ ॥

यजमानत्वमर्हन्ति ब्राह्मणाः क्षत्रिया विशः ।
शूद्राश्चैवानुलोमाश्च निगमाध्वनि दीक्षिताः ॥ १७ ॥

वैखानसेतरैर्विप्रैर्दीक्षितैर्देवलैरपि ।
तान्त्रिकैर्दीक्षितैर्वापि चान्यतन्त्रपरायणैः ॥ १८ ॥

प्रतिष्ठायामर्चने वाप्युत्सवस्नपनादिषु ।
प्रमादाद्यदि संस्पृष्टे ध्रुवबेरे च कौतुके ॥ १९ ॥

स्नापने चोत्सवे बिम्बे बलिबेरेऽपि वा तथा ।
हुत्वैकाहं महाशान्तिमधिवासपुरस्सरम् ॥ २० ॥

पुनःप्रतिष्ठामार्गेण प्रतिष्ठां पुनराचरेत् ।
पूर्वोक्तदीक्षितैर्वापि देवलैरन्यसूत्रिभिः ॥ २१ ॥

गर्भालये प्रविष्टे तु बुद्ध्या वापि प्रमादतः ।
सर्वेषामपि वस्तूनां शुद्धिं पर्यग्निमेव च ॥ २२ ॥

अब्जाग्नौ च महाशान्तिमेकाहं जुहुयात्क्रमात् ।
कलशैः स्नापयेद्देवं विधिना स्वस्वशक्तितः ॥ २३ ॥

पुनः प्रतिष्ठामत्रापि कारयेदिति केचन ।
ग्रामे वा नगरे वापि पत्तने वाथ शार्ङ्गिणः ॥ २४ ॥

अर्चने वर्तमानेऽपि पाञ्चरात्राध्वना पुरा ।
तदूर्ध्वं सौम्यमार्गेण पूजयेच्चेन्न दोषकृत् ॥ २५ ॥

तस्मात्सौम्येन मार्गेण पूजयेदिति शासनम् ।
पुरा सौम्येन मार्गेण पूजितो यदि केशवः ॥ २६ ॥

पूजितः पाञ्चरात्रेण सर्वहानिर्भवेद् ध्रुवम् ।
आचार्यत्वमथार्त्विज्यं पूजायां मधुवैरिणः ॥ २७ ॥

अर्चकत्वं पाचकत्वं पारिचारिकमेव च ।
सर्वं वैखानसैरेव वैदिकैरर्चिते स्थले ॥ २८ ॥

आर्त्विज्यमर्चकत्वं च स्थानाचार्यत्वमेव च ।
वैखानसेन सूत्रेण निषेकादिक्रियान्वितैः ॥ २९ ॥

ब्राह्मणैरेव कर्तव्यमन्यथा चेद्विनश्यति ।
परिचारककृत्यं च पाचकत्वमथापि वा ॥ ३० ॥

शुद्धवैखानसाभावे दीक्षितैर्निगमाध्वना ।
आचार्यत्वेऽप्यर्चकत्वेऽप्यार्त्विज्ये वैदिकेतरैः ॥ ३१ ॥

कृतं यत्कर्म तत्कर्म विफलं स्यान्न संशयः ।
आचार्यत्वे यदीच्छा स्यादन्यसूत्रद्विजन्मनः ॥ ३२ ॥

ब्रह्मज्ञानं विनष्टं स्यादर्चकत्वे तथैव तु ।
आर्त्विज्येऽपि च नार्हन्ति द्विजन्मानोऽन्यसूत्रिणः ॥ ३३ ॥

परिचारककृत्ये वा पाचकत्वेऽपि वा पुनः ।
सुप्रशस्ताश्च योग्याः स्युर्दीक्षिता निगमाध्वना ॥ ३४ ॥

पाञ्चरात्रेण शास्त्रेण दीक्षिता अपि मानवाः ।
विष्णुकैङ्कर्यकरणयोग्याः स्युस्ते न संशयः ॥ ३५ ॥

वैखानसार्चितस्थाने देवदेवस्य शार्ङ्गिणः ।
तीर्थं वापि प्रसादं वा निर्माल्यमपि चन्दनम् ॥ ३६ ॥

ताम्बूलमपि वा सर्वं देवदेवनिवेदितम् ।
विनियोगं ततः कुर्याद्वैखानसपुरस्सरम् ॥ ३७ ॥

अन्यथा विनियुक्तं चेत्सा पूजा निष्फला भवेत् ।
मन्त्रेण पादयोर्दत्तमाधावं पाद्यमुच्यते ॥ ३८ ॥

तत्पाद्यं तीर्थमादाय शिरसि प्रोक्षयेत्पिबेत् ।
स्वयं दक्षिणहस्तेन तीर्थमादाय चात्वरः ॥ ३९ ॥

पतद्ग्रहगतं तीर्थमर्चकः प्रथमं पिबेत् ।
सुपक्वं वाप्यपक्वं वा शार्ङ्गिणे यन्निवेदितम् ॥ ४० ॥

तत्प्रसादाष्टभागं तु गृह्णीयादर्चकः पुरा ।
पश्चात्तत्तीर्थमादाय सर्वेषामपि दापयेत् ॥ ४१ ॥

सर्वेऽप्याश्रमिणस्तत्र तीर्थमेवं पिबन्ति वै ।
वस्त्रं चतुर्गुणीकृत्य पाणौ पाणिं निवेश्य च ॥ ४२ ॥

तत्र तीर्थं च संयोज्य त्रिः पिबेद्बिन्दुवर्जितम् ।
अविद्यामूलनाशाय जन्मकर्मनिवृत्तये ॥ ४३ ॥

ज्ञानवैराग्यसिद्ध्यर्थं विष्णोः पादोदकं शुभम् ।
परमाणुसमं तीर्थं महापातकनाशनम् ॥ ४४ ॥

तथैवाष्टगुणं पापं तद्भूमौ पतितं यदि ।
अवैखानसहस्तेन दत्तं तीर्थं सुरासमम् ॥ ४५ ॥

प्रसादं मांसतुल्यं स्यात्तस्माद्यत्नेन वर्जयेत् ।
उपवासदिने यस्तु तीर्थं च तुलसीदलम् ॥ ४६ ॥

न प्राश्नीयाद्विमूढात्मा रौरवं नरकं व्रजेत् ।
एकादश्यां निराहारस्सम्पूज्य तुलसीदलैः ॥ ४७ ॥

विष्णुं तत्पादसलिलं पीत्वैवोपवसेन्नरः ॥ ४७½ ॥

आरोग्यमस्तु शुभमस्तु यशोऽस्तु नित्यं
श्रीरस्तु शान्तिरभयं शुभमस्तु विष्णो ।
त्वत्पादपङ्कजविनिर्गतपादतोय-
मास्वादयामि पुरतो न पुनर्भवाय ॥ ४८½ ॥

नियतः प्रणतः प्राज्ञ इमं मन्त्रमुदीरयन् ॥ ४९ ॥

तीर्थस्वीकारमहिमज्ञानवान् पुरुषः पिबेत् ।
व्रतस्थाश्च तपोनिष्ठाः सर्वेऽप्याश्रमिणस्तथा ॥ ५० ॥

तत्पाद्योदकपानेन पूयन्ते चाग्निहोत्रिणः ॥ ५०½ ॥

वैखानसाराधितमाधवोपभुक्तं प्रसादं भवभीतिशान्त्यै ।
प्राश्नामि नित्यं कमलाकलत्रस्वरूपवैखानसभुक्तशेषम् ॥ ५१½ ॥

मन्त्रमेवं पठन्विद्वानर्चकैर्दत्तमत्वरः ॥ ५२ ॥

प्राश्नीयुरन्वहं भक्त्या भक्ता विगतमत्सराः ।
व्रतिनो वर्णिनश्चापि तपोवन्तश्च धर्मिणः ॥ ५३ ॥

तत्प्राशनेन पूयन्ते दीक्षिताश्चाग्निहोत्रिणः ।
तव देहपरामृष्टं चन्दनं कुसुमावलिम् ॥ ५४ ॥

स्वीकरोमि जगन्नाथ संसारात्तारय प्रभो ।
मन्त्रमेवं समुच्चार्य गन्धं समुपलिप्य च ॥ ५५ ॥

शिरसा धारयेन्नित्यं माल्यानि कुसुमानि वा ।
ताम्बूलमपि संप्राप्तं देवदेवस्य सन्निधौ ॥ ५६ ॥

रोगघ्नं चैव पापघ्नं भक्षयामि दिने दिने ।
मनुमेवं समुच्चार्य ताम्बूलमपि भक्षयेत् ॥ ५७ ॥

वक्ष्यमाणं समुच्चार्य तुलसीमपि भक्षयेत् ।
यत्पापं यौवने बाल्ये कौमारे वार्धके कृतम् ॥ ५८ ॥

तत्पापस्य विनाशार्थं भक्ष्यामि तुलसीदलम् ॥ ५८½ ॥

अर्चात्मवस्तु विनिवेदितसर्ववस्तु संस्कारसंग्रहणबोधकमन्त्रजालम् ।
तीर्थप्रसादफलवर्णनमत्र यद्यत्तत्सर्वमत्र विहितं किल विष्णुतन्त्रे ॥ ५९½ ॥

तन्त्रान्तराण्यपि विलोक्य हरिप्रतिष्ठानित्यार्चनोत्सवमहास्नपनादिकार्यम् ।
मरीचिना वाप्यथ कश्यपेन मयाप्यनुक्तं यदि तत्र तत्र ॥ ६०½ ॥

मत्प्रोक्ते कश्यपप्रोक्ते मरीच्युक्ते भृगूदिते ॥ ६१ ॥

ग्रन्थसङ्करजो दोषो नास्त्यस्मासु न संशयः ।
वैखानसार्चितस्थाने त्वन्यसूत्रद्विजन्मनाम् ॥ ६२ ॥

मोहादज्ञानतः कर्तुं विनियोगं तु पूर्वतः ।
यदीच्छन्ति दुरात्मानस्तेषां वासस्तु रौरवे ॥ ६३ ॥

इह जन्मनि चण्डालसदृशा अपि कीर्तिताः ।
वैखानसार्चितस्थाने मन्त्रतन्त्रक्रियादिषु ॥ ६४ ॥

यदि स्यात्पाञ्चरात्रोक्तं सर्वं नष्टं भवेद् ध्रुवम् ।
तस्मात्सर्वप्रयत्नेन न कुर्यात्तन्त्रसङ्करम् ॥ ६५ ॥

अर्चासु सर्वास्वपि चोत्सवादौ वैखानसैरर्चितविष्णुधाम्नि ।
तीर्थं च ताम्बूलमपि प्रसादमाचार्यपूर्वं विनियोगमुक्तम् ॥ ६६ ॥

सौम्येऽन्यतन्त्रे संप्राप्ते सद्यो निष्कृतिमाचरेत् ।
वैखानसेन शास्त्रेण निष्कृत्यन्ते समर्चयेत् ॥ ६७ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे तन्त्रसङ्करनिष्कृतिर्नामाष्टसप्ततितमोऽध्यायः ॥

---

## एकोनाशीतितमोऽध्यायः ॥

मनुष्याणामुत्सवस्तु देवदेवोत्सवे सति ।
तस्मिन् ग्रामे न कर्तव्यः कुर्याच्चेत्स विनश्यति ॥ १ ॥

मातृध्वजं समारोप्य ज्येष्ठायाश्च ध्वजं तथा ।
तथा वृषध्वजं वापि विष्णुराजध्वजं तथा ॥ २ ॥

बौद्धध्वजादीनारोप्य ग्राममध्ये विशेषतः ।
विष्णुध्वजं न कुर्वीत सर्वशास्त्रेषु निश्चयः ॥ ३ ॥

रुद्रादिक्रूरदेवानां ग्रामे पूर्वकृतोत्सवे ।
तद्योग्यानप्यलङ्कारांस्तोरणादीन्व्यपोह्य च ॥ ४ ॥

अन्यैस्सौम्यैरलङ्कारैरलंकुर्यात्समाहृतैः ।
वैखानसविधानेन विष्णोरुत्सवमाचरेत् ॥ ५ ॥

अन्योन्यसङ्करे प्राप्ते विनश्यति न संशयः ।
अन्येषामुत्सवं पूर्वं कुर्याद्विष्णोरनन्तरम् ॥ ६ ॥

सौम्यस्य देवदेवस्य चोत्सवो यत्र वर्तते ।
अन्यदेवोत्सवं तत्र न कुर्यादिति शासनम् ॥ ७ ॥

तस्मिन् ग्रामेऽन्यदेवानामुत्सवं कुरुते यदि ।
उत्सवो निष्फलो ज्ञेयस्संभवन्त्यशुभानि च ॥ ८ ॥

वैखानसार्चितहरिर्दृष्टश्चेदन्यदैवतैः ।
विधिनोत्सवबिम्बस्य तस्य संप्रोक्षणं चरेत् ॥ ९ ॥

अङ्कुरैश्च पताकैश्च छत्रैश्चापि ध्वजैरपि ।
तालवृन्तैश्च पिञ्छैश्च पात्रैरन्यपरिच्छदैः ॥ १० ॥

यात्रायानाद्यलङ्कारवस्त्रैर्वाप्यन्यभूषणैः ।
अन्यदेवार्पितैरत्र प्राप्ते सौम्ये च सङ्करे ॥ ११ ॥

ग्रामोऽग्निना भवेद्दग्धो नराश्च व्याधिपीडिताः ।
वीर्यनाशस्तपोनाशस्तद्ग्रामश्च विनश्यति ॥ १२ ॥

विष्णोरुत्सवकाले तु तस्मादन्योत्सवं त्यजेत् ।
विष्णोरुत्सवकाले तु यद्यन्योत्सवसङ्करः ॥ १३ ॥

महाशान्तिं च कृत्वैव विष्णूत्सवमथाचरेत् ।
एवमेव क्रमेणैव शृणुध्वं मुनिसत्तमाः ॥ १४ ॥

शङ्खभेर्यादिवाद्येषु शृङ्गकाहलकादिषु ।
अन्योन्यसङ्करं स्याच्चेद्दोषस्तत्रापि विद्यते ॥ १५ ॥

अन्यदेवगते याने देवमारोप्य चोत्सवे ।
कृते तद्दोषशान्त्यर्थं गारुडं वैष्णवं यजेत् ॥ १६ ॥

ब्राह्मं रौद्रं तथा हुत्वा क्षमस्वेति प्रणम्य च ।
स्वार्थं सङ्कल्पिते याने देवेशस्योत्सवं चरेत् ॥ १७ ॥

शङ्खभेर्यादिवाद्येषु शृङ्गकाहलकादिषु ।
अन्योन्यसङ्करे प्राप्ते न दोष इति केचन ॥ १८ ॥

नर्तका गायकाश्चैव वादका यानवाहकाः ।
दण्डदीपधराश्चान्ये वैष्णवाश्चक्रचिह्निताः ॥ १९ ॥

सर्वेषामप्यलाभे तु वैष्णवानां विशेषतः ।
मन्त्रहीनेषु कार्येषु शैवाद्या अपि सम्मताः ॥ २० ॥

मण्टपे गोपुरे वापि देवदेवस्य सन्निधौ ।
महानसेऽग्निज्वालायां वाहनानामथालये ॥ २१ ॥

सभास्थाने धनस्थाने शयनालय एव वा ।
परिवारालये वापि कर्ममण्टप एव वा ॥ २२ ॥

ये निवासं प्रकुर्वन्ति तेषां वासस्तु रौरवे ।
निवासः परिहर्तव्यस्तस्माद्देवालयादिषु ॥ २३ ॥

शीघ्रं तदपहायैव पञ्चगव्यैः कुशोदकैः ।
सर्वत्र प्रोक्ष्य तन्मन्त्रैर्वास्तुहोममथाचरेत् ॥ २४ ॥

पुनःप्रतिष्ठामार्गेण तन्मूर्त्यावाहनान्तकम् ।
सर्वं शास्त्रं समालोच्य प्रतिष्ठां पुनराचरेत् ॥ २५ ॥

क्षेत्राभरणवस्त्रादिभोक्तारः कमलापतेः ।
तटाकारामकूपादिफलभोक्तार एव वा ॥ २६ ॥

व्याध्यापि पीडिताश्चान्ते नरकानेकविंशतिम् ।
अनुभूय तदन्ते तु श्वानयोनिशतानुगाः ॥ २७ ॥

वृद्धिकामैः परीहार्थं तत्फलानुभवं ततः ।
देवदेवार्पितं क्षेत्रं तटाकं कूपमेव वा ॥ २८ ॥

आरामगृहयानादि पुनर्गृह्णाति यो नरः ।
गोलोमगणनायुक्तवर्षान्तं रौरवे स्थितः ॥ २९ ॥

मानुषस्थलदेवस्य वस्तु सङ्गृह्य मानवः ।
सैद्धार्षस्थलवासस्य दिव्यस्थानस्थितस्य वा ॥ ३० ॥

स्वयंव्यक्तस्थलस्थस्य चार्पितं वापि शार्ङ्गिणः ।
क्रमाद्दशगुणं वृद्धिः प्रोक्ता रौरवसंस्थितेः ॥ ३१ ॥

यस्य देवस्य यद्दत्तं तत्क्रमात्परिपालयेत् ।
यदर्थं तु पुरादिष्टं तदर्थं तत्समाचरेत् ॥ ३२ ॥

कस्यचिद्देवदेवस्य दत्तमादाय दुर्मतिः ।
दत्त्वापि चान्यदेवस्य पूर्वोक्तं लभते फलम् ॥ ३३ ॥

सौवर्णं राजतं ताम्रमायसं दारवं तु वा ।
कल्पवृक्षमथाश्वं वा रथं च तुरगं तु वा ॥ ३४ ॥

दीपस्तम्भं दीपयन्त्रं दीपमालामथापि वा ।
आन्दोलिकां च डोलां च स्वार्थे स्वस्योपयुज्य च ॥ ३५ ॥

पूर्वोक्तं फलमाप्नोति तस्मात्तत्परिवर्जयेत् ।
समर्पणात्सम्पदः स्युर्हरणात्स्युर्विपत्तयः ॥ ३६ ॥

देवस्वहरणं तस्मात्प्रयत्नेन विवर्जयेत् ।
येन केन प्रकारेण पूर्वदत्तं प्रपालयेत् ॥ ३७ ॥

भार्गवं मामकं वापि मारीचिं काश्यपं तु वा ।
विधिनाधीत्य शास्त्राणामेकैकं सर्वमेव वा ॥ ३८ ॥

वैखानसविधानेन ग्रामे विष्णुं समर्चयेत् ।
ग्रामस्य यजमानस्य राज्ञो राष्ट्रस्य वा पुनः ॥ ३९ ॥

सर्वसम्पत्समृद्धिः स्यादित्याह विखना मुनिः ।
भक्तिमन्तश्च देहान्ते विष्णुलोकमवाप्नुयुः ॥ ४० ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे उत्सवसङ्करप्रायश्चित्तविधि-
र्नामैकोनाशीतितमोऽध्यायः ॥

---

## अशीतितमोऽध्यायः ॥

विधिसङ्करमुद्दिश्य प्रायश्चित्तं प्रवक्ष्यते ।
विधयो वैष्णवाश्चान्ये शैवाद्या बहवः स्मृताः ॥ १ ॥

विष्णोस्तत्सौम्यमूर्तेस्तु विधिः सौम्यः प्रकीर्तितः ।
शैवाद्या विधयः क्रूरा दीक्षापूर्वार्चनायुताः ॥ २ ॥

अवेदमूलास्समया यस्मात्ते तान्त्रिकास्स्मृताः ।
आलये प्रतिमायां च नित्यार्चायां बलौ तथा ॥ ३ ॥

स्नपने चोत्सवादौ च कर्मण्यन्यत्र वा पुनः ।
सौम्येऽस्मिन्वैष्णवे क्रूरैः शैवाद्यैः सङ्करे सति ॥ ४ ॥

चतुर्वर्णेषु चान्यैश्च जायन्ते सङ्कराः प्रजाः ।
तद्ग्रामो यजमानश्च राष्ट्रं राजा तथैव च ॥ ५ ॥

तस्मादेव जगत्सर्वं विनश्यति न संशयः ।
तत्सङ्करं ततः शीघ्रमपहाय प्रयत्नतः ॥ ६ ॥

तद्दोषशमनार्थं तु पौण्डरीकं विशेषतः ।
मासमेकं महाशान्तिं पूर्ववज्जुहुयाद्बुधः ॥ ७ ॥

ब्राह्मणान् भोजयेत्तत्र सहस्रान् षट्च्छतांस्तु वा ।
त्रिशतान्वा यथाशक्ति भोजयेत् श्रोत्रियान्बुधः ॥ ८ ॥

सुवर्णं च पशुं तेभ्यो दद्यादेव स्वशक्तितः ।
पुनस्तेन विधानेन सौम्येनैव च कारयेत् ॥ ९ ॥

समूर्तार्चाविधिर्विष्णोर्वैष्णवो विधिरुच्यते ।
विधिश्च वैष्णवश्चापि द्विधा चेति प्रकीर्त्यते ॥ १० ॥

वैखानसविधिश्चेति पञ्चरात्रविधिस्तथा ।
पूर्वं तु वैदिकं प्रोक्तं पञ्चरात्रं तु तान्त्रिकम् ॥ ११ ॥

वैदिकेऽस्मिन्विधौ सौम्ये पञ्चरात्रेण सङ्करे ।
संस्कर्तुश्च विनाशः स्यात्तद्ग्रामयजमानयोः ॥ १२ ॥

तत्सङ्करं ततःशीघ्रमपहाय प्रयत्नतः ।
पक्षमेकं महाशान्तिं हुत्वा तद्दोषशान्तये ॥ १३ ॥

विप्रान्पञ्चशतान्वाथ त्रिशतान्वाथ भोजयेत् ।
वैखानसेन विधिना पूर्ववत्कारयेद्बुधः ॥ १४ ॥

ग्रामादिषु च सर्वत्र जनयुक्तेषु वास्तुषु ।
विष्णुं तत्पञ्चरात्रेण नार्चयेदिति शासनम् ॥ १५ ॥

वैखानसेन विधिना कारयेदर्चनं क्रमात् ।
ग्रामाद्बाह्ये विविक्ते वा नद्याश्चाद्रेर्वनस्य वा ॥ १६ ॥

पार्श्वे त्वन्तेन वा तत्र पञ्चरात्रेण चार्चयेत् ।
वैखानसविधिश्चैष चतुर्धा भवति द्विजाः ॥ १७ ॥

आत्रेयः काश्यपीयश्च मारीचो भार्गवस्तथा ।
एतैर्वैखानसं प्रोक्तं सूत्रं वैखानसं स्मृतम् ॥ १८ ॥

एषां चतुर्विधानां तु मूलं तत्सूत्रमेव यत् ।
आत्रेयाद्यास्त्विमे सर्वे तस्माद्वैखानसाः स्मृताः ॥ १९ ॥

अन्योन्यसंकरे तस्माद्दोषो नास्त्येक एव सः ।
आग्नेयं पाञ्चरात्रं तत् सौम्यं वैखानसं स्मृतम् ॥ २० ॥

पञ्चरात्रविधानेन विमाने च कृते पुनः ।
अभयं वरदं वाथ करं पूर्वं हरेस्तथा ॥ २१ ॥

वामहस्तं गदायुक्तं तद्विधानात्प्रकल्प्य च ।
अथवा दक्षिणं पूर्वं पाणिं पद्मयुतं तु वा ॥ २२ ॥

पराभ्यां च कराभ्यां च शङ्खचक्रधरं परम् ।
तद्रूपं कल्पयित्वा च प्रतिष्ठाप्यार्चयेत्क्रमात् ॥ २३ ॥

तत्र संवत्सरं तेन हीने नित्यार्चने हरेः ।
पञ्चरात्रे तदाग्नेये सौम्यस्यास्य प्रवेशनम् ॥ २४ ॥

यदिच्छेत्कारयेद्भक्त्या सौम्यं तस्य भविष्यति ।
एकमासेऽर्चनाहीने कारयेदिति वै भृगुः ॥ २५ ॥

सप्तरात्रं महाशान्तिमब्जाग्नौ जुहुयात्तथा ।
ब्राह्मणान्भोजयित्वा च शक्तितो दक्षिणां ददेत् ॥ २६ ॥

वैखानसेन सौम्येन प्रतिष्ठाप्य पुनः क्रमात् ।
अर्चनादीनि सर्वाणि विधिना तेन कारयेत् ॥ २७ ॥

पूर्वं तु वैदिकं युक्तं तान्त्रिकं न समाचरेत् ।
पूर्वं तु तान्त्रिकं यत्तद्वैदिकं पुनराचरेत् ॥ २८ ॥
ऐहिकामुष्मिकं सर्वं वैदिकेन समाप्नुयात् ।

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे विधिसङ्करप्रायश्चित्तविधिर्नामा-
शीतितमोऽध्यायः ॥

## एकाशीतितमोऽध्यायः ॥

अथ वक्ष्ये गृहे विष्णोः प्रतिष्ठायां विधिक्रमम् ।
ब्राह्मणः क्षत्रियो वैश्यः श्रद्धाभक्तिसमन्वितः ॥ १ ॥
स्वगृहे परमं विष्णुं प्रतिष्ठाप्य विधानतः ।
सायं प्रातश्च होमान्ते देवं नित्यं समर्चयेत् ॥ २ ॥
सौवर्णं राजतं वाथ ताम्रं वा विधिना कृतम् ।
षडङ्गुलादहीनं च सर्वलक्षणसंयुतम् ॥ ३ ॥
समासीनं स्थितं वाथ बिम्बं सम्यक् प्रगृह्य च ।
यथोक्तमासे नक्षत्रे प्रतिष्ठामाचरेत्क्रमात् ॥ ४ ॥
प्रतिष्ठादिवसात्पूर्वं पञ्चमे ह्यङ्कुरार्पणम् ।
कुर्यात्तस्मिन्निशायां च तृतीये दिवसेऽथवा ॥ ५ ॥
वक्ष्यमाणेन विधिना कारयेदक्षिमोचनम् ।
औपासनाग्निमादाय वास्तुहोमं यथाक्रमम् ॥ ६ ॥
हुत्वा च वैष्णवैर्युक्तं दद्भ्यः स्वाहादिभिस्तथा ।
अङ्गहोमं च हुत्वान्ते पुरुषसूक्तं समुच्चरन् ॥ ७ ॥

कृत्वाक्षिमोचनं पश्चादधिवासनमेव च ।
नद्यां वाथ तटाके वा पात्रे वा सजलेऽवटे ॥ ८ ॥

वस्त्राण्यास्तीर्य दर्भांश्च कुशानपि निधाय च ।
प्राक्छिरस्तत्र देवेशं विष्णुसूक्तेन शाययेत ॥ ९ ॥

त्रिदिनं वाप्यथैकाहं जले तत्राधिवासयेत् ।
गृहाङ्कणे प्रपां कृत्वा स्नात्वैकाहमुपोष्य च ॥ १० ॥

अङ्कणं शोधयित्वैव गोमयेनोपलिप्य च ।
द्विहस्तायतविस्तारं विम्बाध्यर्धयुतं तु वा ॥ ११ ॥

शय्यावेदिं समोत्सेधं कल्पयित्वाथ पूर्ववत् ।
औपासनाग्निकुण्डं च कल्पयेत्तद्विधानतः ॥ १२ ॥

द्वितीये दिवसे स्नात्वा जप्त्वा रात्रौ यथाविधि ।
औपासनं निधायाग्निमाघारं जुहुयाद्बुधः ॥ १३ ॥

प्रतिष्ठोक्तक्रमेणैव चतुर्भिर्दशभिस्सह ।
कलशैस्तत्र देवेशं स्नापयेत यथाक्रमम् ॥ १४ ॥

शंनोदेवीरभीत्युक्त्वा शुद्धोदैरभिषेचयेत् ।
शय्यावेद्यां तु वस्त्राणि समास्तीर्य कुशैस्सह ॥ १५ ॥

अथवा व्रीहिभिर्वेदिं कृत्वा तं विष्टरे न्यसेत् ।
तत्रैव नववस्त्राणि समास्तीर्य कुशैस्सह ॥ १६ ॥

देवं तत्र समारोप्य वस्त्राद्यैरभिभूष्य च ।
पुण्याहं वाचयित्वैव बध्वा प्रतिसरं तथा ॥ १७ ॥

प्राक्छिरस्तत्र देवेशं शाययित्वा समाहितः ।
खण्डस्फुटितकालादिहीनं द्रोणसपूरणम् ॥ १८ ॥

नवं कुम्भं प्रगृह्यैव शुद्धतोयैः प्रपूर्य च ।
सौवर्णमङ्गलादींश्च प्रक्षिप्यैव स्वशक्तितः ॥ १९ ॥

वस्त्रयुग्मेन संवेष्ट्य देवपार्श्वे निधाय च ।
आपो वा इति तत्तोयमभिमृश्य समाहितः ॥ २० ॥

सहस्रशीर्षं देवमिति जप्त्वा समाहितः ।
हृदये परमं देवं ध्यात्वावाह्य ततःपरम् ॥ २१ ॥

तत्कुम्भे पूर्ववद्देवं ध्यायेत्सम्यक् समाहितः ।
अद्भिस्तं परिषिच्याग्निं हौत्रं शंसेद्यथाक्रमम् ॥ २२ ॥

ओं भूः पुरुषमित्याद्यैर्विष्ण्वाद्यैः पञ्चभिस्तथा ।
देवेशं मूर्तिमन्त्रैश्च श्रियं देवीं महीं तथा ॥ २३ ॥

आवाह्याज्यैर्निरूप्यैव स्रुवेणाज्यं यजेत्क्रमात् ।
ध्यायन्नेव च देवेशं मन्त्रैर्विष्णोर्नुकादिभिः ॥ २४ ॥

तथा सहस्रशीर्षाद्यैरतोदेवादिभिस्तथा ।
श्रियेजातेतिमन्त्रेण मेदिनीचेति मन्त्रतः ॥ २५ ॥

एतैराज्यं चतुष्कृत्वो भक्त्यैव जुहुयाद् बुधः ।
ततः प्रभाते स्नात्वैव बिम्बमुत्थाप्य चोमिति ॥ २६ ॥

ओं भूः प्रपद्य इत्युक्त्वा प्रणम्यैवार्चयेत्पुनः ।
कनिक्रदादिसूक्तेन कुम्भं देवं निनीय च ॥ २७ ॥

गृहे वायव्यदेशे तु दृष्ट्या दक्षिणया सदा ।
गृहं हरिर्यथा पश्येत्तथा पीठं प्रकल्पयेत् ॥ २८ ॥

अथवाप्यग्निशालायां पीठं कुर्यात्त्रिवेदिकम् ।
रत्नं सुवर्णं वा तत्र यथाशक्ति निधाय च ॥ २९ ॥

विष्णुसूक्तं समुच्चार्य पुरुषसूक्तं सवैष्णवम् ।
जपन्नेव परं विष्णुं ध्यायन्भक्त्या समाहितः ॥ ३० ॥

तं प्रतिष्ठापयामीति प्रतिष्ठाप्य च तत्परम् ।
बिम्बस्य मूर्ध्नि नाभौ च तत्पादे च यथाक्रमम् ॥ ३१ ॥

सुवर्भुवर्भूरित्युक्त्वा संन्यस्य हृदये पुनः ।
प्रणवं विन्यसेद् ध्यायन्निदं विष्णुरिति ब्रुवन् ॥ ३२ ॥

कूर्चेन तोयमादाय कुम्भस्थं शक्तिसंयुतम् ।
विष्णुमावाहयामीति स्नावयेद्बिम्बमूर्धनि ॥ ३३ ॥

एवं देवं प्रतिष्ठाप्य नित्यं विधिवदर्चयेत् ।
गृहे नित्यार्चनायां च विधिं वक्ष्ये हरिं प्रति ॥ ३४ ॥

अतोदेवादिना देवं प्रणम्यैवानुमान्य च ।
अवधूतं वदन्नेव निर्माल्यं संव्यपोह्य च ॥ ३५ ॥

शुद्धतोयं समादाय वस्त्रेण प्रणवं जपन् ।
उत्पूय तेन व्याहृत्या तत्पीठं परिमृज्य च ॥ ३६ ॥

प्रतद्विष्णुस्तपतेति ध्यायन् भक्त्या हरिं परम् ।
पुष्पदर्भकुशेष्वेकं दद्यादासनमित्युत ॥ ३७ ॥

त्रीणि पदेतिमन्त्रेण पाद्यं दद्याच्च पादयोः ।
शंनोदेवीत्याचमनं हस्ते दद्याच्च दक्षिणे ॥ ३८ ॥

इषेत्वोर्जेत्वेति जपन्नद्भिः संस्नापयेद्धरिम् ।
ततो विष्णोर्नुकमिति प्लोतं वस्त्रोत्तरीयकम् ॥ ३९ ॥

आभरणं च दातव्यमलाभे पुष्पमेव वा ।
तत्तद् ध्यात्वैव संदद्यात्पाद्यमाचमनं पुनः ॥ ४० ॥

तद्विष्णोः परमं चेति दद्यात्पुष्पाण्यनुक्रमात् ।
तद्विप्रासं समुच्चार्य गन्धं चापि ततः परम् ॥ ४१ ॥
परोमात्रेतिधूपं च विष्णोः कर्माणि च ब्रुवन् ।
दीपं च दर्शयेदर्घ्यं विदेय इति मन्त्रतः ॥ ४२ ॥
निवेद्याचमनं दद्यात् तदस्य प्रियमित्युत ।
हविर्निवेदयेत्साज्यमिदंविष्णुरिति ब्रुवन् ॥ ४३ ॥
पानीयं स्वादु दत्त्वैव तथैवाचमनं पुनः ।
मुखवासं हरेर्दद्याद्विचक्रम इति ब्रुवन् ॥ ४४ ॥
नारायणाय विद्मेति दद्यात्पुष्पाञ्जलिं बुधः ।
नमोब्रह्मण इत्युक्त्वा प्रणमेच्च हरिं परम् ॥ ४५ ॥
सायं प्रातश्च होमान्ते नित्यं यो विष्णुमर्चयेत् ।
इह लोके सुखं भुक्त्वा गच्छेत्तत्परमं पदम् ॥ ४६ ॥
अशक्तस्स्थण्डिले नित्यं जले वाथ समर्चयेत् ।
भक्त्यैव हृदये ध्यायन् पूर्ववत्तं हरिं परम् ॥ ४७ ॥
मानसं वार्चनं कुर्यात् सोऽपि गच्छेत्परं पदम् ।

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे गृहार्चाप्रतिष्ठाविधिर्नामैकाशीतितमोऽध्यायः ॥

---

## अशीतितमोऽध्यायः ॥



अतः परं प्रवक्ष्यामि सर्वशान्त्याहुतेः फलम् ।
अपमृत्युभयोत्पन्ने महाव्याधिनिपीडिते ॥ १ ॥

ग्रहकोपे महादुःखे पुत्रहीनेऽर्थनाशने ।
महाभये समुत्पन्ने शत्रुपीडासमागमे ॥ २ ॥

दुर्निमित्ते च दुःस्वप्ने राजकोपसमुद्भवे ।
अपस्मारेऽप्यथोन्मादे पिशाचाद्यैश्च पीडिते ॥ ३ ॥

अतिवृष्ट्याप्यनावृष्ट्या महावातस्य संभवे ।
प्रत्यब्दजन्मनक्षत्रे जन्मर्क्षे ग्रहणेऽपि च ॥ ४ ॥

अभिचारागमेऽन्यस्मिन्ननुक्तेऽप्यशुभे सति ।
तद्दोषशमनार्थं च पुष्ट्यर्थं चेदमुच्यते ॥ ५ ॥

शुद्धं प्रसन्नं विद्वांसं यथोक्तगुणसंयुतम् ।
आचार्यमृत्विजोऽप्यत्र वरयेत्स मुदान्वितः ॥ ६ ॥

स्नात्वा नित्यानि जप्यानि जप्त्वा कर्मेदमारभेत् ।
देवालये गृहे वाथ नदीतीरे मनोरमे ॥ ७ ॥

मण्डपे वाथ कूटे वा प्रपायामथवा तथा ।
शुद्धे समे शुभे देशे गोमयेनोपलिप्य च ॥ ८ ॥

मृदा वा सिकताभिर्वा शुद्धाभिस्तत्र पूर्ववत् ।
औपासनाग्निकुण्डं च कल्पयित्वा विधानतः ॥ ९ ॥

प्राणायामं च कृत्वैव संकल्प्याग्निं निधाय च ।
सूत्रोक्तेनैव मार्गेण तत्राघारं जुहोति वै ॥ १० ॥

दक्षिणे शालिधान्यैस्तु हस्तमात्रायतोच्छ्रयम् ।
देवदेवस्य विष्णोस्तु पीठं सम्यक् प्रकल्पयेत् ॥ ११ ॥

तत्पूर्वे च तथा शालिधान्यराशिं च कारयेत् ।
खण्डस्फुटितकालादिहीनं द्रोणाम्बुपूरणम् ॥ १२ ॥

नवकुम्भं प्रगृह्यैव तन्तुना परिवेष्ट्य च ।
शुद्धमाधावमादाय वस्त्रेणापि कुशेन च ॥ १३ ॥

उत्पूय कुम्भं प्रक्षाल्य तदाधावेन पूरयेत् ।
सौवर्णान्मङ्गलांश्चाष्टौ तथा पञ्चायुधानपि ॥ १४ ॥

श्रीरूपं नवरत्नं च कुशकूर्चौ सहाक्षतम् ।
तुलसी दूर्वापामार्गौ कुम्भे प्रक्षिप्य तज्जलम् ॥ १५ ॥

वारुणैर्वैष्णवैर्मन्त्रैः प्रणवैरभिमन्त्रयेत् ।
नवेन वस्त्रयुग्मेन तत्कुम्भं परिवेष्ट्य च ॥ १६ ॥

आश्वत्थैरपि पालाशैः पल्लवैरभिभूषयेत् ।
तत्कुम्भं धान्यराशौ तु विष्णुसूक्तेन विन्यसेत् ॥ १७ ॥

धान्यपीठे कुशान् कूर्चान् निधायोर्ध्वे हरिं परम् ।
प्राङ्मुखं च प्रतिष्ठाप्य भक्त्या देवं समाहितः ॥ १८ ॥

ध्यायन्वै विष्णुगायत्र्या मन्त्रेणाष्टाक्षरेण वा ।
परं नारायणं देवं समावाह्यैव पूर्ववत् ॥ १९ ॥

आसनाद्युपचारैश्च देवदेवं समर्चयेत् ।
बिम्बालाभे सुवर्णेन कृतं पद्मं निधाय च ॥ २० ॥

तस्मिन्नारायणं ध्यायन् समावाह्य तथार्चयेत् ।
श्रीकामः पुत्रकामी च सुखार्थी च शुभेप्सिता ॥ २१ ॥

देवेन श्रीमहीदेव्यौ तत्तन्नाम्ना समर्चयेत् ।
ततो देवं प्रणम्यैव परिषिच्य च पावकम् ॥ २२ ॥

जपन्वै विष्णुगायत्रीमाश्वत्थान्द्वादश क्रमात् ।
मूलाग्राभ्यां तथाज्याक्तानिध्मांश्च जुहुयात्पुनः ॥ २३ ॥

विष्णोर्नुकादिभिः षड्भिः मन्त्रैरपि च वैष्णवैः ।
आज्यं स्रुवेण हुत्वा तैः साज्यं पक्वं यजेत्स्रुचा ॥ २४ ॥

पूर्वोक्तेन क्रमेणैव भक्त्या नारायणं परम् ।
ध्यायन्वै विष्णुगायत्र्या मन्त्रेणाष्टाक्षरेण वा ॥ २५ ॥

स्रुवेणैव घृतं गव्यं तदग्नौ जुहुयात्क्रमात् ।
ओं नमो नारायणायेति मन्त्रमष्टाक्षरं स्मृतम् ॥ २६ ॥

सर्वार्थसाधकश्चायं श्रूयते हि श्रुतावपि ।
तथा होमं त्रिलक्षं वा द्विलक्षं लक्षमेव वा ॥ २७ ॥

हुतं पञ्चायुतं वाथ त्र्ययुतं वायुतद्वयम् ।
अयुतं वा तदर्धं वा सहस्रं वाष्टसंयुतम् ॥ २८ ॥

तत्तत्कर्मानुरूपं तु हरिं ध्यायन् जुहोति वै ।
होमादौ मध्यमे चान्ते षड्भिर्विष्णोर्नुकादिभिः ॥ २९ ॥

वैष्णवैर्मन्त्रषड्भिश्च पूर्ववज्जुहुयाद्बुधः ।
पूर्ववद्देवमभ्यर्च्य हवींष्यपि निवेद्य च ॥ ३० ॥

सहस्रशीर्षं देवमिति चैकाक्षरादिना ।
स्तुत्वा पुष्पाञ्जलिं दद्यान्नमो ब्रह्मण उच्चरन् ॥ ३१ ॥

हुतेऽधिके तु तत्कर्मफलमप्यधिकं भवेत् ।
हुतं तद्यावत्संख्यं च तावत्संख्यं तथा तदा ॥ ३२ ॥

तेन मन्त्रेण तत्कुम्भे तोयमप्यभिमन्त्रयेत् ।
आचार्यो यजमानं तं मन्त्रेणाष्टाक्षरेण तु ॥ ३३ ॥

विष्णुं ध्यायन् तमद्भिस्तैः प्रोक्षयेत सहस्रशः ।
वैष्णवैर्वा सुगन्धाद्यैः शेषाद्भिरभिषेचयेत् ॥ ३४ ॥

होमार्चनं जपानेवं कारयित्वैव भक्तितः ।
यजमानस्तथाऽऽचार्यं पूजयित्वा प्रणम्य च ॥ ३५ ॥
यत्नेन दक्षिणां दद्यादृत्विजां च यथाविधि ।
एतद्धोमयुतं स्नानं सर्वदुःखापहारकम् ॥ ३६ ॥
सर्वाशुभविनाशं च सर्ववृद्धिकरं स्मृतम् ।
सर्वशान्तिकरं चापि सर्वपापप्रणाशनम् ॥ ३७ ॥
एतैर्होमार्चनस्नानैः सर्वां सिद्धिमवाप्नुयात् ।
अभयो मृत्युभीतस्य दीर्घायुस्स भवेन्नरः ॥ ३८ ॥
व्याधितो व्याधिमुक्तः स्याद्ग्रहकोपश्च शाम्यति ।
महादुःखी सुखी भूयात् पुत्रार्थी पुत्रवान् भवेत् ॥ ३९ ॥
भीतश्च निर्भयो भूयाच्छत्रुपीडश्च शत्रुजित् ।
राज्ञा चान्यजनैर्द्विष्टः सर्वेषां च प्रियो भवेत् ॥ ४० ॥
धर्मार्थी धर्ममाप्नोति धनार्थी धनमाप्नुयात् ।
कामार्थी काममाप्नोति राज्यार्थी राज्यमाप्नुयात् ॥ ४१ ॥
ज्ञानार्थी ज्ञानमाप्नोति पापी पापात्प्रमुच्यते ।
अभिचाराश्च नश्यन्ति शत्रवो नाशमाप्नुयुः ॥ ४२ ॥
यद्यत्कामयतेऽन्यच्च तल्लभेत न संशयः ।
श्रद्धाभक्तियुतः कृत्वा मोक्षार्थी मोक्षमाप्नुयात् ॥ ४३ ॥
गृहेऽग्निपातनाद्याश्च रक्तस्त्रीदर्शनादयः ।
सर्वदोषाश्च नश्यन्ति शुभास्तत्र भवन्ति च ॥ ४४ ॥
हुत्वार्चयित्वा तत्तोयैः गृहे सर्वत्र चोक्षयेत् ।
गोगजाश्वादिनाशे च हुत्वा तान् प्रोक्षयेत्तथा ॥ ४५ ॥
एतेनैव च सर्वत्र यथेष्टं शुभमाप्नुयात् ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे सर्वशान्तिविधिर्नाम द्व्यशीतितमोऽध्यायः ॥

# त्र्यशीतितमोऽध्यायः

अतःपरं प्रवक्ष्यामि सूर्यकल्पं द्विजोत्तमाः ।
विष्णुशक्तियुतं सूर्यस्स तेजो वैष्णवं दधत् ॥ १ ॥

सौम्येन विधिना सूर्यः सोऽर्चितो वृद्धिदस्सदा ।
ग्रामादिषु च सर्वेषु जनयुक्तेषु वास्तुषु ॥ २ ॥

इन्द्राग्न्योरन्तरे सूर्यं विधिनैव प्रकल्पयेत् ।
कर्षणादीनि सर्वाणि पूर्ववत्कारयेत्क्रमात् ॥ ३ ॥

शिल्पी शास्त्रविधानेन विमानं परिकल्पयेत् ।
पूर्वोक्तैर्दारुभिश्चास्य निम्बवृक्षस्य शस्यते ॥ ४ ॥

नवार्धतालमानेन सूर्यबेरं च कारयेत् ।
द्विहस्तमतिरक्ताभं हस्ताभ्यां पद्मधारिणम् ॥ ५ ॥

मण्डलेन शिरःपृष्ठे युक्तं पद्मासने स्थितम् ।
कुर्यात्सुवर्चलां देवीं प्रवालाभां च दक्षिणे ॥ ६ ॥

रेणुकां रक्तवर्णां च कुर्यात्तद्वामपार्श्वतः ।
स्थूलदण्डं प्रवालाभं शङ्खाभं शङ्खिलं क्रमात् ॥ ७ ॥

एतावप्यर्चकौ कृत्वा प्रतिष्ठामारभेत्पुनः ।
प्रतिष्ठादिवसात्पूर्वमङ्कुरानर्पयेत्तथा ॥ ८ ॥

अङ्गहोमं च जुहुयादुदुत्यं चित्रमित्यपि ।
हुत्वा ताभ्यां रवेः कुर्यादक्ष्युन्मेषं च मन्त्रतः ॥ ९ ॥

सर्वमप्यधिवासाद्यं तन्मन्त्राभ्यां समाचरेत् ।
पूर्ववद्यागशालां च शय्यावेदिं विधानतः ॥ १० ॥

अग्निकुण्डानि कृत्वा च पूर्वरात्रौ विधानतः ।
वास्तुहोमं यजेत्पश्चात् कुम्भपूजां समारभेत् ॥ ११ ॥

कुम्भमद्भिः प्रपूर्यैव रक्तवस्त्रद्वयेन च ।
कुम्भमावेष्ट्य तत्तोये कुशकूर्चाक्षतान् क्षिपेत् ॥ १२ ॥

सौवर्णांश्च रथांश्चाश्वान् पद्ममष्टौ च मङ्गलान् ।
वर्णचिह्नानि रत्नांश्च प्रक्षिप्यैव च तज्जले ॥ १३ ॥

जगन्नेत्रं त्रयीमूर्तिं तेजोमूर्तिं शुभप्रदम् ।
विष्णुशक्तियुतं पुण्यं सर्वरोगविनाशकम् ॥ १४ ॥

ध्यात्वा चावाहयेत्सूर्यं तस्मादेवार्कमण्डलात् ।
बिम्बं कुम्भं च संनीय कलशैः स्नापयेत्तथा ॥ १५ ॥

रक्तवस्त्रैश्च माल्यैश्च भूषणैश्च विभूषितम् ।
नैर्ॠत्यां च फलकां न्यस्य शयनान्यपि पञ्च च ॥ १६ ॥

शय्यावेद्यां समास्तीर्य बध्वा प्रतिसरं ततः ।
उदुत्यं चित्रमित्युक्त्वा शाययीत विचक्षणः ॥ १७ ॥

अन्वाहार्ये प्रधानाग्नौ होता हौत्रं प्रशंसति ।
आदित्यं भास्करं सूर्यं मार्ताण्डमिति चापरम् ॥ १८ ॥

विवस्वन्तमिति प्रोच्य सूर्यमावाह्य पञ्चभिः ।
देवीं सुवर्चलां श्यामां मापान्तां सुप्रभामिति ॥ १९ ॥

देवीं च रेणुकां रक्तां श्वेतवस्त्रां रविप्रियाम् ।
स्थूलदण्डं महानादं प्रवालाभं शुचिस्मितम् ॥ २० ॥

शङ्खपालं च शङ्खाभं कूर्चयुक्तं जटाधरम् ।
इत्यावाह्याचकानन्यान्भ्रालादीनपि पूर्ववत् ॥ २१ ॥

प्राचीं सन्ध्यां च रक्ताभां विश्वबोधामिति क्रमात् ।
सन्ध्यामिति जगत्पूज्यां धूम्रवर्णां च पश्चिमाम् ॥ २२ ॥

गायत्रीं पावनीं जप्यां वेदगर्भामितीरयन् ।
सावित्रीं मातरं चेति ब्रह्मपत्नीं जगत्प्रियाम् ॥ २३ ॥

अश्वानीति शुकाभांश्च महाजवयुतानि च ।
रत्नं खुरानिति वदन्नरुणं रश्मिहस्तकम् ॥ २४ ॥

काश्यपं चेति चावाह्य सूर्यसारथिमित्यपि ।
तपनं सूर्यदासं च विघ्नं लोकप्रवर्तकम् ॥ २५ ॥

धरं चेति ध्रुवं चेति सोममापमितीरयन् ।
अनलं चानिलं चेति प्रत्यूषं च प्रभासकम् ॥ २६ ॥

आवाह्य लोकपालांश्च न्यक्षादीनपि पूर्ववत् ।
आवाह्य च निरूप्याज्यं तत्क्रमेणाहुतीर्यजेत् ॥ २७ ॥

हुत्वा पुरुषसूक्तेन विष्णुसूक्तेन वै यजेत् ।
उद्वयं तमसश्चेति गृहीत्वाज्यं रविं स्मरन् ॥ २८ ॥

जुहुयादुदुत्यं जातेति चित्रं देवेति मन्त्रतः ।
मित्रस्य चर्षणीत्युक्त्वा मित्रो जनानितीरयन् ॥ २९ ॥

व्याहृतिभिश्च गायत्र्या सावित्र्या पञ्चवारुणैः ।
हुत्वा द्वादशकृत्वश्च पञ्चस्वग्निषु च क्रमात् ॥ ३० ॥

अर्कसमिधोऽपामार्गाः पालाशीश्च पृथक् पृथक् ।
तन्मन्त्रैर्जुहुयात्तेषु साज्यं पक्वं तथैव च ॥ ३१ ॥

इन्द्रादीनां तथा मन्त्रैर्हूयते च यथाक्रमम् ।
अन्तहोमं ततो हुत्वा तानग्नीन्विसृजेत्पुनः ॥ ३२ ॥

प्रभाते स्नात्वा तद्बिम्बं कुम्भं नीत्वा तदालयम् ।
उदुत्यं चित्रमित्युक्त्वा बिम्बं संस्थाप्य भक्तितः ॥ ३३ ॥

बीजाक्षरं हृदि न्यस्य मन्त्रेणावाहयेत्तथा ।
अर्चयित्वा विधानेन हविः सम्यङ्निवेदयेत् ॥ ३४ ॥

हरेरुक्तक्रमेणैव नित्यार्चां च समाचरेत् ।
उदुत्यमिति मन्त्रेण गायत्र्या वा विशेषतः ॥ ३५ ॥

आवाहनादिकैस्सर्वैर्विग्रहैरर्चयेद्बुधः ।
आदित्यमपि पूर्वोक्तैर्मूर्तिमन्त्रैश्च पञ्चभिः ॥ ३६ ॥

तैश्चतुर्भिश्च ते देव्यौ स्थूलदण्डं प्रपूजयेत् ।
शङ्खपालांस्तथा वामे धात्रादीनपि पूर्ववत् ॥ ३७ ॥

प्राचीं च पश्चिमां सन्ध्यां द्वारपालं च दक्षिणे ।
पश्चिमां च तथा वामे प्रथमद्वारि चार्चयेत् ॥ ३८ ॥

द्वितीयद्वारि गायत्रीं सावित्रीं पार्श्वयोस्तथा ।
सोपानमध्ये सप्ताश्वानरुणं सारथिं तथा ॥ ३९ ॥

तपनं शैपिकस्थाने न्यक्षादीनपि पूर्ववत् ।
स्वे स्वे देशे तथेन्द्रादि तृतीये द्वारपार्श्वयोः ॥ ४० ॥

धात्रादीनन्तिलं चैव द्वारपालान् समर्चयेत् ।
कुम्भोदरं महाभूतं भूतस्थाने समर्चयेत् ॥ ४१ ॥

जपापुष्पमृते सर्वं रक्तपुष्पं रवेः प्रियम् ।
श्वेतं पीतं तथा ग्राह्यं कृष्णं पुष्पं विसर्जयेत् ॥ ४२ ॥

रक्तचन्दनगन्धं च गन्धं श्रेष्ठमिति स्मृतम् ।
ताम्रपात्रं वरिष्ठं स्यात्सौवर्णं राजतं तु वा ॥ ४३ ॥

मृण्मयं वाथ पात्रं स्यात्कांस्यं वा प्रियमुच्यते ।
स्नपनं चोत्सवं चापि हरेरिव समाचरेत् ॥ ४४ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे सूर्यकल्पो नाम
त्र्यशीतितमोऽध्यायः ॥

हरिः ओम् ॥ शुभमस्तु ॥

श्रीमद्विखनसमहागुरवे नमः ॥



## भिन्नमातृकासु ग्रन्थान्ते लेखककालादिप्रशंसा

खसंज्ञायां मातृकायां—

हरिः ओं श्रीरस्तु ।

कीलकाब्दे मीनमासे सप्तम्यां भृगुवासरे ।

रङ्गाचार्यस्य विदुषः पुत्रेण लिखितोऽलिकः ॥

गमातृकायां—

यो दण्डकारण्यनिशाचरेन्द्रान् कोदण्डलीलाविषयीचकार ।

वेदण्डशुण्डायितबाहुदण्डः कोदण्डपाणिः कुलदैवतं नः ॥

श्रियै नमः । आकुलमन्नाटिग्रामवास्तुडु रोम्पिच्चेर्लभट्टर कोदण्डरामाचार्यपाकयाजि तञ्जावूरि तालूका कोनेरिराजपुरं निवासं श्रीवासुदेवभट्टाचार्युल्वारु कटाक्षिंचिन मातृकनु जूचि यी अत्रिप्रोक्तं समूर्तार्चनाधिकरणं डेब्बइ अयिदु (७५) अध्यायमुलपुस्तकं तनकुगाने श्रीरामचन्द्रार्पणंगानु व्रासिनानु ॥ श्रीः श्रीः श्रीः

घमातृकायां—

श्रीशेषाद्रिमहागुरवे नमः । अत्रिप्रोक्तं संपूर्णम् । श्रीमद्विखनसमहागुरवे नमः ।

रथप्रतिष्ठां वक्ष्यामि रथरक्षेण कौतुकम् ।
रथं पूर्वं तु कृत्वा तु प्रतिष्ठां कारयेद्बुधः ॥ १ ॥

अङ्कुरानर्पयेत्पूर्वं नान्दीमुखमतःपरम् ।
नयनोन्मीलनं चापि पञ्चगव्याभिषेचनम् ॥ २ ॥

पञ्चगव्याधिवासं च तथा क्षीराधिवासनम् ।
जलाधिवासनं पञ्चहौत्रशंसनमाचरेत् ॥ ३ ॥

आवाहनं च कुम्भे तु कुम्भपूजां यथाविधि ।
जुष्टाकारं तथा कृत्वा स्वाहाकारं च पूर्ववत् ॥ ४ ॥

दद्भ्यः स्वाहेत्यङ्गहोमः मौलिमालाद्यतःपरम् ।
सर्वदैवत्यहोमं च यथाविधि हुनेत्क्रमात् ॥ ५ ॥

पारमात्मिकसंयुक्तमोंकारादीन् तथैव च ।
अष्टाशीतिं च विधिवन्मूर्तिमन्त्रेण कारयेत् ॥ ६ ॥

रथन्तरमसीति मन्त्रेण नयनोन्मीलनं चरेत् ।
कुम्भपूजां च तन्मन्त्रैरावाहनविधिं तथा ॥ ७ ॥

रथमन्त्रेण विधिवत्सर्वं कृत्वा तु बुद्धिमान् ।
अष्टोत्तरसहस्रं तु शतमष्टोत्तरं तु वा ॥ ८ ॥

त्रिरात्रं पञ्चरात्रं वा यथाविधि समाचरेत् ।
कौतुके विधिवत्सर्वं कृत्वा चैवं महारथे ॥ ९ ॥

पञ्चगव्यैः समभ्युक्ष्य कुम्भप्रोक्षणमाचरेत् ।
शक्त्यावाहनकाले तु समूर्त्या गरुडेन च ॥ १० ॥

आवाह्य पूजां कृत्वाथ नैवेद्यं च महाहविः ।
ब्राह्मणान् भोजयेत्पश्चाद् दद्याच्च गुरुदक्षिणाम् ॥ ११ ॥

एवं यः कुरुते भक्त्या महाविष्णोर्महारथम् ।
प्रतिष्ठां च तथा कृत्वा विष्णोः सायुज्यमाप्नुयात् ॥ १२ ॥

इति पुरातन्त्रे ॥ हरिः ओं रथप्रतिष्ठाविधिरुच्यते ॥

अब्दे विक्रमनामके दिनकरे चापं गते धावले
पक्षे भार्गववासरे रवितिथावन्त्यर्क्षसायन्तने ।

भारद्वाजकुलोद्भवो विमलधीः शेषार्यनामद्विजो
ग्रन्थं सर्वमिदं लिखेन्मुनिकृतं अत्रीतिसंज्ञं महत् ॥

अत्रिप्रोक्तमिदं ग्रन्थं शेषाचार्येण लेखितम् ।
पूर्वभागं राघवेण उभाभ्यामपि पूरितम् ।

श्रीनिवासगुरवे नमः । करियमाणिक्कस्वामिने नमः आहमोत्तं एडु १४०.

चमातृकायां—

श्रीमते विखनसे नमः श्रीः (७)

सीतारामार्पणमस्तु । श्रीमते कृष्णाय नमः श्रीः (८)

दीवि अयोध्याचार्युलु वृषभनामसंवत्सर ज्येष्ठ ब १४ शनिवारं बृन्दावनं गोपालाचार्युल्वारि पोस्तुकं ॥

जसंज्ञकादर्शे

सर्वजिन्नामसंवत्सरं वैशाखमासं कृष्णपक्षं लयोदशि बुधवारं अश्विनिनक्षत्रम्. इन्द शुद्धगणिपंचांगशुभदिने अत्रिप्रोक्तं एष्नरन्ददु.

अगस्त्यवंशे श्रीनृसिंहसूनुना वेंकटेशलिखितं कृतं मया—अप्पन् स्वहस्तलिखितम्

अहोबिलमहागुरवेनमः

[illegible] श्रीवैघानसं वेंकटाचार्लुस्वहस्तलिखितम्

श्रीनिवासमहागुरवेनमः

अत्रिप्रोक्तं [illegible]



श्रीः

अनुबन्धः—क

## च-संज्ञकादर्शे ग्रन्थारम्भे पाठभेदः



वैखानसमुखाम्भोजान्निस्सृतं वेदबृंहितम् ।
शास्त्रमध्यात्मदं वन्दे गुरूणां सत्कटाक्षतः ॥ १ ॥

बादरे चाश्रमे पुण्ये सर्वतीर्थसमायुते ।
पुण्यवृक्षसमाकीर्णे देवगन्धर्वसेविते ॥ २ ॥

अत्रिं विश्वविदां श्रेष्ठमृषिं विश्वहितोद्यतम् ।
ऋषयो धर्मसंसक्तास्समागम्य प्रणम्य च ॥ ३ ॥

अभिपूज्य यथान्यायमिदं वचनमब्रुवन् ।
भगवन्सर्ववित्त्वं हि तस्मात्पृच्छामहे वयम् ॥ ४ ॥

कीदृशः परमो धर्मः कीदृशः परमो विधिः ।
देवानां परमो देवः परमात्मा च कोऽव्ययः ॥ ५ ॥

हितं वै सर्वभूतानामर्चितं पापनाशनम् ।
येन चार्चयताभीष्टं पुरुषोऽवाप्नुयात्परम् ॥ ६ ॥

तदर्चनाविधानं किं वद त्वं वदतां वर ।
इत्युक्तस्स महातेजा महर्षीस्तान्यथाक्रमम् ॥ ७ ॥

अत्रिस्सम्प्रतिपूज्यैव प्रसन्नः प्रत्युवाच ह ।
सर्वेषामपि देवानां परो नारायणः स्मृतः ॥ ८ ॥

नारायणः परं ब्रह्म परमात्मा परोऽव्ययः ।
स ब्रह्मा स शिवश्चेति श्रुतिराह सनातनी ॥ ९ ॥

ऋगादिसंज्ञाभेदेन चतुर्धा भिद्यते तथा ।
हंसेन ज्ञापितं पूर्वं ब्रह्मणे परमेष्ठिने ॥ १० ॥

तत्तत्सिद्धान्तभेदेन भृगुणा प्राङ्मुखेन यत् ।
मुखेन दक्षिणेनैव काश्यपायोपदर्शितम् ॥ ११ ॥

औत्तरेणाङ्गिरास्सोऽयं मुखेन परमेष्ठिनः ।
अपरेण मुखेनैव यदधीतं मया पुरा ॥ १२ ॥

तत्सर्वं कथयिष्यामि युष्माकं चानुपूर्वशः ।
एतत्सर्वं समाख्यातं शृणुध्वं नु यथाक्रमम् ॥ १३ ॥

धन्यास्स्मोऽनुगृहीतास्स्म पूर्णकामेन शाश्वतम् ।
अज्ञानान्नास्ति तज्ज्ञेयं कर्तुं नास्तीति चेत्कृतम् ॥ १४ ॥

कस्य हेतोर्जगत्सृष्टिं भगवान्यतते वद ।
आदौ कृतयुगे प्राप्ते विभुर्नारायणो हरिः ॥ १५ ॥

एतदाचक्ष्व भगवन् रहस्यं दुर्लभं मतम् ।
प्रकृत्या सत्यसंयोगात् जायते केन हेतुना ॥ १६ ॥

स्वलीलया जगत्सर्वं सृष्टिसंहारपालने ।
लोकानामपि सर्वेषामहङ्कर्तास्मि हेतुना ॥ १७ ॥

युनक्ति पुरुषः स्वीयप्रकृत्या गुणरूपया ।
अपो देवस्स सृष्ट्वैव तासु वीर्यं समुत्सवान् ॥ १८ ॥

अण्डं हिरण्यमभवद्यत्तद्वीर्यं महत्तरम् ।
तस्मिन्हिरण्यगर्भे तं ब्रह्माणमसृजत्स्वयम् ॥ १९ ॥

नाभिपद्मे समासीनस्तपस्तेपे सुदुश्चरम् ।
स्वनिष्पत्तिं च कृत्यं च ध्यात्वा घोरतरं तपः ॥ २० ॥

मधुना हृतसर्वार्थः परं शोकमवाप्तवान् ।
ततश्शोकार्णवे मग्नं तं भक्तं भक्तवत्सलः ॥ २१ ॥

अहं हरिरिति प्राह हंसश्शुचिषदव्ययः ।
हंसरूपी च भगवानोमित्यग्रे विनिर्दिशेत् ॥ २२ ॥

समाश्वसिहि भद्रं ते यथापूर्वमकल्पयत् ।
एवमुक्ते भगवति हंसरूपे जनार्दने ॥ २३ ॥

अब्रवीन्मधुरं वाक्यं कृतार्थोऽस्मि महामते ।
भगवन्सुप्रसन्नोऽसि यथापूर्वमिति श्रुतम् ॥ २४ ॥

तत्सर्वं श्रोतुमिच्छामि भगवन्भक्तवत्सल ।
स्वनाभिजेनैवमुक्ते सर्वेशामयनं हरिः ॥ २५ ॥

मन्मायाकरणं ब्रह्मन्ननादिरविनाशिनी ।
मत्प्रसादं विना तस्या विरामो नास्ति कर्हिचित् ॥ २६ ॥

यावन्नाहं प्रसीदामि तावन्माया दुरत्यया ।
तस्मात्संसारिणां पुंसां मत्प्रसादं विना क्वचित् ॥ २७ ॥

निःश्रेयसकरं नान्यद्बुध्यस्व कमलासन ।
इत्येवमुक्तो हंसेन पुनस्संपृष्टवान्हरिम् ॥ २८ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे शास्त्रावतरणकथनात्मकः
प्रथमोऽध्यायः ॥

---

## द्वितीयोऽध्यायः



श्रीभगवानुवाच—

मया प्रवर्तते धर्मः प्रथमे प्रलये गते ।
........रसंभूतादनिरुद्धात्सनातनात् ॥ १ ॥

पूर्वं तु मानसं जन्म चात्मा भूम्नामतस्तथा ।
द्वितीयं चाक्षुषं जन्म लोकेशादिति विश्रुतम् ॥ २ ॥

...........तृतीयं जन्म चतुराननसंज्ञितम् ।
तस्मिन् काले त्वया सृष्टाः शिवाद्याः परमर्षयः ॥ ३ ॥

एकान्तिधर्मसंयुक्ता मोदन्ते तु मया सह ।
चतुर्थं श्रोत्रजं जन्म परमेष्टीति धर्मतः ॥ ४ ॥

नासिक्यं पञ्चमं जन्म द्रुहिणे वै पुनस्तव ।
अण्डजे तु पुनष्षष्ठे पूर्वसृष्टा प्रजापतिः ॥ ५ ॥

सप्तमे पद्मजं वाथ विधिर्नाम चतुर्मुख ।
जन्म चैवं समाख्यातं सप्तमे पद्मके तव ॥ ६ ॥

सामादिमन्त्रसंसिद्धं दिव्यज्ञानं ददामि ते ।
नमो नारायणायेति प्रणवेन समन्वितः ॥ ७ ॥

हृदि तिष्ठतु ते नित्यं वाचि नित्यं चतुर्मुख ।
मोक्षैकफलदं कामं कृत्वा मोक्षमवाप्स्यसि ॥ ८ ॥

आपन्ना प्रकृतिर्व्यक्तिं सूते सर्वं चराचरम् ।
तत्रैव लयते सर्वं ब्रह्म चायुष्य च स्थितः(?) ॥ ९ ॥

भवन्ति मनवस्तस्य दिने तत्र चतुर्दश ।
एकोनसप्ततिः कालो मनोरेतस्य कीर्तितः ॥ १० ॥

परस्मिन् ब्रह्मण्यायुष्मत्यर्वाचीने लयं गते ।
प्रलयो महदाख्योऽयं चतुरानन कीर्तितः ॥ ११ ॥

अवान्तराश्च प्रलयाः दिनानामवसानजाः ।
सर्गे सर्गे च विच्छित्तिस्तिष्ठन्तु मम शासनात् ॥ १२ ॥

चिन्तामणिर्यथा लोके. शबला कल्पद्रुमाः ।
अर्थिभ्योऽप्यर्थितं सर्वं प्रयच्छन्ति सतां गतिः ॥ १३ ॥

यज्ञेन यज्ञयष्टव्यमयजन्तेति च श्रुतिः ।
एव धर्मास्समाख्याताः भूयश्चैवमिदं शृणु ॥ १४ ॥

साङ्गोपनिषदा वेदा ऋग्यजुस्सामाथर्वगाः ।
ब्राह्मणेषु च ये मन्त्रा अन्तर्यामीति विश्रुताः ॥ १५ ॥

त्रयोदश च कर्माणि द्वादशाध्यात्मकानि च ।
निवृत्तिफलसंयुक्ता देवतान्तरवर्जिताः ॥ १६ ॥

मिश्रव्यामिश्रयागाश्च सदा त्वाविर्भवन्तु ते ।
अष्टादशविधाः कल्पाः पुराणानि तथैव च ॥ १७ ॥

अष्टादशप्रभेदानि विज्ञानानि तथैव च ।
तेषु निर्वाणमार्गं च भविष्यति चतुर्मुख ॥ १८ ॥

योगशास्त्रस्य कर्तृत्वे विरिञ्च त्वं करिष्यसि ।
सांख्यस्यापि च निर्माणे कपिलोऽपि करिष्यति ॥ १९ ॥

षट्प्रकाराणि तन्त्राणि शंकरस्तु करिष्यति ।
परस्परविरुद्धानि कुरु त्वं तु यथातथम् ॥ २० ॥

बुद्धमूर्तिं समास्थाय बुद्धशास्त्रं सृजाम्यहम् ।
ज्ञानापह्नवनिष्णातज्ञानाज्ञेयफलानि च ॥ २१ ॥

आर्हतीं मूर्तिमास्थाय शास्त्रमार्हतकं तथा ।
शास्त्राणि मत्प्रणीतानि भवद्भिर्विहितानि च ॥ २२ ॥

आभूतसंप्लवाद्योगे स्थास्यन्ति मम शासनात् ।
अवतारैश्च बहुभिर्मत्स्यादिभिरहं पुनः ॥ २३ ॥

शास्त्राणि तत्प्रभिन्नानि स्थापयामि महीतले ।
भवन्तु धातृभिस्तैस्तैर्महान्तः प्रलयाः पुनः ॥ २४ ॥

चक्रवद्वर्तते कालो विरामो नास्ति कर्हिचित् ।
एवमुक्ते भगवति तिरोधानं गते सति ॥ २५ ॥

ततः कृतार्थमात्मानं मन्यमानः कृताञ्जलिः ।
तथैव ब्रह्मणा सृष्टं जगत्सर्वं चराचरम् ॥ २६ ॥

भूर्भुवःस्वर्महश्चापि जनस्सत्यं तपस्तथा ।
लोकाश्चान्ये दिशोऽष्टौ च द्वीपास्सर्वे ससागराः ॥ २७ ॥

जरायुजाण्डजास्सर्वे स्वेदजोद्भिदजास्तथा ।
सर्वाण्यपि च भूतानि महान्ति च लघूनि च ॥ २८ ॥

तेषां नामानि वृत्तिं च पृथक्कर्म च तद्विधः ।
तत्तज्जन्म लयश्चैषां सुखदुःखे च तद्वशे ॥ २९ ॥

सत्यानृते तपश्शौचे धर्माधर्मौ शुभाशुभौ ।
स्वर्गं च नरकं स्वेन कर्मणैव गतिस्तयोः ॥ ३० ॥

गन्धर्वाप्सरसां वर्गः नक्षत्रैस्सह तारकाः ।
असुरा राक्षसा दैत्या गरुडा नागकिन्नराः ॥ ३१ ॥

यथा विद्याधरास्सिद्धा मनुष्या ब्राह्मणादयः ।
ऋषयो मनवस्सर्वे पितॄणां च पृथग्गणाः ॥ ३२ ॥
वेदास्सर्वेऽपि तेनैव संसृष्टा ब्रह्मणा पुरा ।
तस्माद् ब्रह्मा च रुद्रोऽन्ये देवाश्चेन्द्रादयोऽखिलाः ॥ ३३ ॥
नित्यं नारायणं देवमर्चयन्ति नमन्ति ते ।
ऋषयश्चाखिलैर्यज्ञैः तं यजन्त्यर्चयन्ति च ॥ ३४ ॥
ऋग्यजुस्सामभिर्वेदैः स्तुवन्ति प्रणमन्ति ते ।
उपवासं व्रतं दानं स्वाध्यायं च तपांसि च ॥ ३५ ॥
सर्वाणि श्रौतकर्माणि तुष्ट्यै तस्याचरन्ति च ।
तस्य स्मृत्या भवेत्पूर्णो यज्ञो न्यूनः प्रमादतः ॥ ३६ ॥
धर्मार्थमेव यज्ञस्य विष्णुरित्याह च श्रुतिः ।
यमैश्च नियमैर्युक्ता ध्यायन्ति मुनियोगिनः ॥ ३७ ॥
यस्य स्तुतिर्मुमुक्षूणां मोक्षायैव भवेत्पुनः ।
तस्मिन् देवेऽर्चिते देवाः सर्वे सन्तर्पिताः स्तुताः ॥ ३८ ॥
इहामुत्रापि पुरुषो विष्णोरर्चां हितेन हि ।
इष्ट्वा कामानवाप्नोति तदीयं च परं पदम् ॥ ३९ ॥
देवदेवस्य विष्णोस्तु उत्तमार्चाक्रमस्य वै ।
चतुर्वेदोद्भवैर्मन्त्रैश्चतुर्वेदं समाश्रिताः ॥ ४० ॥
चातुर्वर्ण्यसमृद्ध्यर्थं चातुराश्रमसिद्धये ।
धर्मार्थकाममोक्षाख्यचतुर्वर्गसुसाधनाः ॥ ४१ ॥
भृगुणा काश्यपेनैव मया चैव मरीचिना ।
ज्ञेयास्ते भगवद्भक्तैर्द्विजैः पुण्यतमैः स्फुटम् ॥ ४२ ॥
तदुक्तेनैव मार्गेण हरेरर्चां समाचरेत् ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे द्वितीयोऽध्यायः ॥

# तृतीयोऽध्यायः



भगवन् सर्ववित् त्वं हि तस्मात् पृच्छामहे प्रभो ।
ज्ञानं योगं विमुक्तिं च श्रोतुं कौतूहलं हि नः ॥ १ ॥

त्रयोदशविधिं किं तु द्वादशाध्यात्मकं ततः ।
बलादिमन्त्रसंसिद्धं वद त्वं वदतां वर ॥ २ ॥

प्रागिमा मेलितावस्था वेदानां व्यसनात्पुरा ।
ऋषीणां योऽब्रवीद् ब्रह्मा धर्मं समनुबोधयन् ॥ ३ ॥

वैखानसास्सात्त्वताश्च तीर्थैकान्तिकमूलकाः ।
पञ्चधा भिद्यते तन्त्रं वक्तृभेदविशेषतः ॥ ४ ॥

विहङ्गरूपो भगवान् यां वाचमसृजद्विभुः ।
तां वाचमखनद्ब्रह्मा तस्माद्विखनसो मुनिः ॥ ५ ॥

नाम्ना विखनसं प्राहुः यं च वैखानसं तथा ।
वैखानसविधिश्चैषः चतुर्धा भवति द्विजाः ॥ ६ ॥

केचिदेकायनो वेदः प्रख्यातस्सात्त्वतो विधिः ।
पञ्चरात्रविधिस्सोऽपि शुद्धं मिश्रमिति द्विधा ॥ ७ ॥

भक्तं भागवतं चैव पञ्चरात्रमथेतरत् ।
ब्रह्मणा रात्रिकाले तु पञ्चायुधसमीपतः ॥ ८ ॥

पञ्चधा पूजयंस्तस्मात् पञ्चरात्रमितीरितम् ।
अन्योन्यसङ्करेणैव तत्र दोषो न विद्यते ॥ ९ ॥

वैखानसादिपक्षेषु वस्तुभेदो न जायते ।
ईषद्भावविशेषेण वैखानसविदो जनाः ॥ १० ॥

भूलक्ष्म्या सहितो नित्यमर्चितव्यो निरन्तरम् ।
पुरुष एवेदमिति च इतरे पाञ्चरात्रिकाः ॥ ११ ॥

द्वादशाष्टाक्षरेणैव वाचके परिपठ्यते ।
द्वादशाष्टाक्षरविधौ चाष्टाक्षरपरिग्रहः ॥ १२ ॥

ऐहिकामुष्मिकविधौ साकल्यं फलमश्नुते ।
अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन वा ॥ १३ ॥

पौरुषं सूक्तमास्थाय ये भजन्ति द्विजातयः ।
संहितां जपमन्त्रेण ते मां प्राप्स्यन्ति मानवाः ॥ १४ ॥

मार्गेण मां प्रपद्येति तत्तन्मन्त्रे प्रदर्शितम् ।
एतद्धर्मो मया पृष्टो ब्रह्मणस्सदने पुरा ॥ १५ ॥

तीर्थकस्य चतुर्विंशद् दीक्षा चैव चतुष्टयम् ।
प्रथमं द्वालकं चैव मूलसङ्गं ततः परम् ॥ १६ ॥

सारङ्गं च तृतीयं तु काष्ठसङ्गमतःपरम् ।
एवं तत्र चतुर्दीक्षां चतुर्विंशतितन्त्रकम् ॥ १७ ॥

ज्ञानयोगक्रिया चर्या प्रायश्चित्तं प्रवक्ष्यते ।
ओमित्येकाक्षरं ब्रह्म प्रथमं परिपठ्यते ॥ १८ ॥

वेदास्संप्रणमन्त्येनं तस्मात्प्रणवमभ्यसेत् ।
ओंकारं रथमारुह्य मनः कृत्वा तु सारथिम् ॥ १९ ॥

ब्रह्मलोकपदान्वेषी याति विष्णोः परं पदम् ।
एवं प्रणवभूतस्य ज्ञानं दिव्यमिदं विदुः ॥ २० ॥

भगवतो बलेनेति त्रिस्वभावस्त्रिरात्मनः ।
बलं वीर्यं तेज इति त्रिरात्मा गुणसंस्थितः ॥ २१ ॥

कर्मणानुग्रहे ध्यानं त्रिस्वभाव इति स्मृतम् ।
बलादिमन्त्रसिद्धेन षड् गुणा निरतेन च ॥ २२ ॥

पञ्चव्यूहचतुर्व्यूहैः मन्त्रसिद्धस्समाधिना ।
व्यूहे सत्योऽच्युतो रूपोऽनिरुद्ध इति मन्त्रतः ॥ २३ ॥

त्रिव्यूह इति निर्दिष्ट ओंकारो विष्णुरव्ययम् ।
भगवद्वाचकाः प्रोक्ताः प्रकृतेः परतस्तथा ॥ २४ ॥

व्यक्तोऽव्यक्तस्वरूपस्तु पुरुषः प्रणवार्थितः ।
एवं पञ्चविधो व्यूहो वैखानसमते विभोः ॥ २५ ॥

पञ्चरात्रविदो ये तु चतुर्व्यूहपराः स्मृताः ।
एकमूर्तिप्रधानत्वं मन्त्रसिद्धान्तमुच्यते ॥ २६ ॥

पञ्चमूर्तिविधानं च तन्त्रसिद्धान्तमुच्यते ।
चतुर्वक्त्रेण वक्तृत्वे सिद्धान्ता बहुधा स्मृताः ॥ २७ ॥

तन्त्राणां चैव सर्वेषां नारायणपरं परम् ।
युष्माभिश्चोदितं पूर्वमन्तर्याम्यथ वक्ष्यते ॥ २८ ॥

आविध्य मतिमन्थानाद् दध्नो घृतमिवोद्धृतम् ।
नवनीतं तथा दध्नो द्विपदां ब्राह्मणो यथा ॥ २९ ॥

आरण्यकं च वेदेभ्य ओषधीभ्योऽमृतं यथा ।
इदं ब्रह्मोपनिषदमन्तर्यामीति विश्रुतम् ॥ ३० ॥

इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् ।
ऋग्यजुस्सामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ॥ ३१ ॥

ब्रह्मा ऋषिस्त्रिष्टुभ् छन्दो गायत्री वाथ उच्यते ।
अन्तर्यामी तथा विष्णुः मत्स्यादिविभवो यथा ॥ ३२ ॥

पारमात्मिकमित्येतदिति वेदानुशासनम् ।
विष्ण्वादिपञ्चमूर्तीनां विष्णुः परम उच्यते ॥ ३३ ॥

मनो बुद्धिरहङ्कारो जीवाश्शेषा उदाहृताः ।
अमूर्ता विस्तरेणोक्ता संक्षेपादितरोदिता ॥ ३४ ॥

संक्षिप्ता स्यात्समूर्तार्चा विस्तरेण प्रवक्ष्यते ।
तस्मादत्र मयोक्तस्य होमस्याग्न्यालयेऽपि च ॥ ३५ ॥

अग्न्याघारान्तहोमाश्च मन्त्राश्शिष्टाश्च सर्वशः ।
सम्यग्वैखानसे सूत्रे विज्ञेयं विधिवित्तमैः ॥ ३६ ॥

ज्ञानेन्द्रियाणि कर्माणि वचनाद्यास्तथैव च ।
मनो बुद्धिरहङ्कारः कर्माण्येते त्रयोदश ॥ ३७ ॥

सत्यं तपो दमश्चैव शमो दानमतः परम् ।
धर्मप्रजननं चाग्निरग्निहोत्रं तथैव च ॥ ३८ ॥

यज्ञाश्च मानसं न्यासश्चैषां ब्रह्मणि योजनम् ।
तेषां क्रमेण विन्यासो द्वादशाध्यात्मसंज्ञितम् ॥ ३९ ॥

भगवन्नूर्मयः कोश अध्वा भावनिबन्धनम् ।
एतत्कर्मविशेषं च यथावद्वक्तुमर्हसि ॥ ४० ॥

अशनाया पिपासा च शोकमोहजरा मृतिः ।
युगशः प्राणधीदेहधर्मास्त्वेते षडूर्मयः ॥ ४१ ॥

त्वक्चर्म मांसं रुधिरं शोणितांशसमुद्भवम् ।
स्नायुर्मज्जास्थि च तथा पौरुषाश्शुक्लसंभवाः ॥ ४२ ॥

एवं मिथुनरूपं तत्कोशषट्कमितीरितम् ।
अस्थिजाधनतेजस्तु परिणामेन वर्धते ॥ ४३ ॥

क्षीयते तद्विनश्येति भावषट्क उदाहृतः ।
कालाध्वा भुवनाध्वा च वर्णाध्वा मन्त्र एव च ॥ ४४ ॥

पदाध्वा चैव तत्त्वाध्वा अध्वषट्कमितीरितम् ।
संबन्धः षट् च शास्त्राणां प्रकाशः परिकीर्तितः ॥ ४५ ॥

परश्चैवापरश्चैव महांश्चैवान्तरालकः ।
दिव्यो दिव्येतरश्चैव संवन्धष्षड्विधस्स्मृतः ॥ ४६ ॥

अनभिव्यक्तशब्दस्तु तदर्थैकरसोऽध्वनि ।
यः परस्स तु विज्ञेयः संबन्धाह्वयनामकः ॥ ४७ ॥

ध्वनिर्ज्ञानस्वरूपस्तु संबन्धो ह्यपरः स्मृतः ।
मध्यमो ध्वनिरुद्दिष्टो महान् संबन्धलक्षणम् ॥ ४८ ॥

व्यक्त्यन्तराले वर्णानां निश्चयश्चान्तरालकः ।
वाक्यवाक्यार्थभेदेन दिव्य उक्तो महेश्वरः ॥ ४९ ॥

वक्तृश्रोतृविभागेन विभक्तो हीतरः स्मृतः ।
हंसरूपी महाविष्णुः वक्ता श्रोता प्रजापतिः ॥ ५० ॥

आत्मना ब्रह्मणि ध्यानं ध्येयो ध्यानस्य बन्धनम् ।
मन्त्रार्थयोस्तु संभावः संबन्धो वाच्यवाक्ययोः ॥ ५१ ॥

जीवे स्वमात्मनि स्वत्वं स्वं स्वामित्वमुदाहृतम् ।
आत्मनि ब्रह्मणो भोज्यं भोक्तृभोज्यमतः परम् ॥ ५२ ॥

ब्रह्मणे त्वामहं स ओमित्यात्मसंबन्ध उच्यते ।
ततो मानुषसंबन्धो नास्ति संबन्धिनामिह ॥ ५३ ॥

पारम्पर्यान्तराणां तु बन्धो निःश्रेयसे स्थितः ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे तृतीयोऽध्यायः ॥

---

## चतुर्थोऽध्यायः

कर्तृभेदेन सिद्धान्तो नवधा भेद उच्यते ।
सिद्धान्ता नवधा प्रोक्ताः पूर्वं चापरमेव हि ॥ १ ॥

अवेदमूला नवधा वेदमूलास्तथापरे ।
शैवं कापालिकं चैव यामलं तदनन्तरम् ॥ २ ॥

लोकायतिस्तथा चार्हस्तथा वैभाषिकः पुनः ।
सौत्रान्तिकस्तु चार्वाकः माध्यमः सर्वशून्यभाक् ॥ ३ ॥

परस्परविरुद्धानि पृथक्त्वेन च लक्षणे ।
श्रुतिस्मृतिविरुद्धानि तामसानि नवानि वै ॥ ४ ॥

शैवादिशास्त्रभेदं तु संक्षेपेण प्रवक्ष्यते ।
कामिकं योगजं नित्यं कारणं त्वजितं तथा ॥ ५ ॥

दीप्तसूक्ष्मसहस्रं च अंशुमान् सुप्रभेदकम् ।
विजयं चैव विश्वासं स्वायंभुवमथानलम् ॥ ६ ॥

वीरं च कौरवं चैव मकुटं विमलं तथा ।
चन्द्रज्ञानं च बिम्बं च प्रोद्गीतं ललितं तथा ॥ ७ ॥

सिद्धान्तमथ शर्वोक्तं पारमेश्वरमेव च ।
कारणं वातुलं चैता अष्टाविंशतिसंहिताः ॥ ८ ॥

कापालं तु तथा वामं कालामुखमतःपरम् ।
तथा पाशुपतं वीरमस्थिधातु च षड्विधम् ॥ ९ ॥

एवं शैवेन संप्रोक्तमनीशं शास्त्रमुच्यते ।
ब्रह्मा तु नवमालं च पूजयित्वा तु यामलम् ॥ १० ॥

चामुण्डामध्यमा चैव तथा वैष्णवमध्यमम् ।
एवं विधिद्वयं चैव परा शैवार्चना मता ॥ ११ ॥

अथवा मोहिनी चैव दुर्गा सारस्वतं तथा ।
महाकाली च शास्ता च मार्ता संस्कन्दमेव च ॥ १२ ॥

ज्येष्ठा गुहस्तथाभ्यर्चा मिश्रा शैवार्चना मता ।
एतत्सर्वं तदाग्नेयसमयं चेति पठ्यते ॥ १३ ॥

एवं त्वसौम्यमित्युक्तमन्यतन्त्रमिहोच्यते ।
लोकायताद्यास्त्रिमतैः तन्त्रमन्त्रप्रधानतः ॥ १४ ॥

चतुर्भेदं तथैकैकमन्योन्यं चैव सङ्करम् ।
सौत्रान्तिकं च चार्वाकः संक्षेपेण प्रवक्ष्यते ॥ १५ ॥

प्रमाणं च प्रमेयं च प्रमातेति त्रिधा भ्रमम् ।
सर्व शून्यमिति प्राहुः शास्त्रैर्माध्यमिका जनाः ॥ १६ ॥

इत्येवं समयाः प्रोक्ताः वैदिकश्चाथ वक्ष्यते ।
श्रुतिमूलमिदं सर्वं नवधा भिद्यते पृथक् ॥ १७ ॥

न्यायवैशेषिकौ सांख्यो भाट्टप्राभाकरावपि ।
भास्करीयोऽथ मीमांसा मायाभागवतौ ततः ॥ १८ ॥

कर्मप्रामाणिकाः केचित् केचित् फलनिदर्शकाः ।
केचिन्मीमांसकाः केचित् निर्गुणब्रह्मचिन्तकाः ॥ १९ ॥

तेषु भागवतं श्रेष्ठं निर्वाणस्यैकसिद्धये ।
तत्र भागवते किंचिद् वैदिकं तान्त्रिकं द्विधा ॥ २० ॥

तत्तत्तन्त्रस्य भेदश्च संक्षेपेणोच्यते मया ।
सनत्कुमारं प्रथमं गार्गेयोत्तमगेव च ॥ २१ ॥

पाराशर्यं च परमं पद्मोद्भवमतः परम् ।
नलकूबरं च सौमन्तमेकायनमतः परम् ॥ २२ ॥

सात्त्वतं पौष्करं चैव सानन्दाख्यमतः परम् ।
नारदीयं तथा चैव परं पुरुषसंहिताः ॥ २३ ॥

कपिञ्जलादिभेदैस्तु तन्त्रं वक्तुं न शक्यते ।
तत्तत्तन्त्रोक्तमार्गेण कर्षणादीनि कारयेत् ॥ २४ ॥

पर्वताग्रेऽब्धिपार्श्वे वा शैलमूले वनान्तरे ।
मूर्तिभेदं तथाचारं तत्तन्त्रोक्तवदाचरेत् ॥ २५ ॥

चतुर्धा वैदिकं मार्गं तं च मार्गचतुष्टयम् ।
ग्रन्थसंख्याविशेषेण प्रतिमार्गं वदाम्यहम् ॥ २६ ॥

श्रुतं मया पुरा चैव चतुर्विधमिदं हरेः ।
पाद्ममुत्तरतन्त्रं तु विष्णुतन्त्रमतः परम् ॥ २७ ॥

आत्रेयं च तथा प्रोक्तं तन्त्राणां च चतुष्टयम् ।
अष्टाशीतिसहस्राणि ग्रन्थसंख्या मया श्रुता ॥ २८ ॥

अनन्ताख्यं परं ज्ञानं जयवीराख्यसंहिताः ।
श्रुतमङ्गिरसा लक्षं सत्यज्ञानाह्वयावपि ॥ २९ ॥

सान्तानं काश्यपं चैव सत्यकाण्डमतः परम् ।
तर्कं च ज्ञानकाण्डं च पञ्चकाण्डमतः परम् ॥ ३० ॥

श्रुतं षोडशसाहस्रं ग्रन्था वै काश्यपेन च ।
खिलं खिलाधिकारं च पुरातन्त्रं तथैव च ॥ ३१ ॥

वासचित्राधिकरणक्रियामानास्तथैव च ।
प्रतिग्रहाधिकारं च विख्याताः शिष्टसंहिताः ॥ ३२ ॥

चतुष्षष्टिसहस्रैश्च ग्रन्थसंख्या श्रुता बुधाः ।
एवं तु पञ्चविंशद्धि संहिताक्रम ईरितः ॥ ३३ ॥

अन्यानि बहुतन्त्राणि महाविखनसादयः ।
चतुर्मुखमुखाम्भोजाद् ब्राह्मणानां हिताय वै ॥ ३४ ॥

वैखानसेन सूत्रेण निषेकादिक्रियान्वितः ।
ब्रह्मचारिगृहस्थैर्वा अन्यैर्वार्चां समाचरेत् ॥ ३५ ॥

शास्त्रं कृत्स्नमधीत्यैव नित्यं विधिवदाचरेत् ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे चतुर्थोऽध्यायः ॥

---

## पञ्चमोऽध्यायः

अतः परं प्रवक्ष्यामि निष्कलं सकलं पुनः ।
सर्वतःपाणिपादं च सर्वतोऽक्षिशिरोमुखम् ॥ १ ॥

सर्वेन्द्रियगुणाभासो निर्गुणः प्रकृतेः परः ।
यताऽणुस्तु तथा सूक्ष्मः तथाणीयानणोरपि ॥ २ ॥

अणोरिव महास्थूलो महीयान् महतस्तथा ।
सूक्ष्मोऽव्यक्तोऽक्षरोऽव्यक्तः पुरुषस्स इतीर्यते ॥ ३ ॥

स्थूलोऽनन्तोऽक्षरो नित्यो महती प्रकृतिस्तथा ।
सूक्ष्मरूपं च सव्याप्तं स्थूलं सर्वमिदं जगत् ॥ ४ ॥

क्षीरे सर्पिरिवारण्यामव्यक्तो ह्यनलो यथा ।
तत्रापि चैकः सूक्ष्मांशो दिव्यज्ञानेन युज्यते ॥ ५ ॥

निर्मथ्योद्भूतमव्यक्तं वह्निरत्न इवोद्धृतम् (?) ।
जपहोमादिकर्माद्यैर्वर्धयित्वा प्रदीप्य च ॥ ६ ॥

आवाहनप्रणिधानं कुर्याद्धेरग्निकुण्डके ।
बीजाङ्गमन्त्र······दी······खननोल्लेखनोक्षिते ॥ ७ ॥

आज्यहोमविशेषेष्टिमुत्सवाध्वरमारभेत् ।
एतद्वै वैदिकं मार्गं भुक्तिमुक्तिफलप्रदम् ॥ ८ ॥

इषयः—

एवमसाखु कुर्वे······सा न चेत् किं करिष्यति ।
ध्यानात्प्रबुद्धो भगवान् मन्त्रेणाभिमुखस्तथा ॥ ९ ॥

भक्तानुकम्पया सोऽपि विभूतिं स्वां सुविस्मिताम् ।
संक्षिप्य चैकीभवति कलापीव कलापकम् ॥ १० ॥

आचार्यगुणसंपत्त्या सद्भक्तया याति तत्र च ।
सौन्दर्यलक्षणोपेते बिम्बे तिष्ठति सोऽच्युतः ॥ ११ ॥

आचार्यमुपसंप्रीत्य इति प्रोवाच मे पिता ।
अथवा प्रत्यगात्मानं सर्वभूतेष्ववस्थितम् ॥ १२ ॥

त्राभया प्रज्ञया जाग्रत्स्वप्नमभ्यन्तरस्थया ।
सुषुप्तिप्रज्ञयावस्थातुर्यया प्रज्ञया तथा ॥ १३ ॥

सूक्ष्मभूतामवस्थां चाप्यणीयां च गुहास्थिताम् ।
स्थूलं वैश्वानरो भूत्वा विभक्तां तैजसाकृतिम् ॥ १४ ॥

भुञ्जानं हृदयाकाशरूपेणानन्दमच्युतम् ।
तुरीयं परमानन्दं हृत्पद्मसुषिरे ज्वलन् ॥ १५ ॥
वैश्वानरशिखामध्ये स्थितं तद्ध्यानगोचरम् ।
अष्टाङ्गयोगसंसिद्धं समाधिं सम्यगेत्य च ॥ १६ ॥
ब्राह्ममासनमास्थाय बिल्वाद्यैः कल्पितासनैः ।
गुरूपदेशसंसिद्धो विधिना ध्यानमारभेत् ॥ १७ ॥
प्रथमं भूतसंहारं पादादूर्ध्वादिकावधि ।
करादिशोधनं कृत्वा चक्रयन्त्रेण वेष्टयेत् ॥ १८ ॥
भूतबन्धं ततः कुर्यात् दिग्बन्धं कारयेत्तथा ।
मकारादि अकारान्तं प्रातिलोम्येन विन्यसेत् ॥ १९ ॥
प्राणायामत्रयं कृत्वा नाडीशोधनपूर्वकम् ।
प्राणा जिह्वा च चक्षुश्च त्वक् श्रोत्रं चैव पञ्चमम् ॥ २० ॥
द्वयोः पञ्चकयोर्द्वन्द्वं घ्राणपाय्वादिकं क्रमात् ।
महीजलादिभिर्हस्तौ लीयमाने स्वके तथा ॥ २१ ॥
समं विलयमायाति सहस्राणि........वृत्तिभिः ।
तरङ्गा जलधौ यद्वदन्तं यान्ति समीरणात् ॥ २२ ॥
विषयेन्द्रियकल्लोलमहाभूतमहोदधौ ।
बुद्ध्या हि जनयामास तद्वदन्तं नयेद्बुधः ॥ २३ ॥
मनोऽभिमाना....चित्तावहंकारे शमं नयेत् ।
प्राणमध्यवसानं च बुद्धिमत्त्वे निवेशयेत् ॥ २४ ॥
सत्त्वं रजस्तमश्चैव त्रैगुण्यं प्रकृतिं नयेत् ।
त्रैगुण्यं च प्रसूतिश्च मायेत्येवं त्रिधा तु तत् ॥ २५ ॥

एवं तत्त्वविदा ज्ञेयमेताः प्रकृतयो दश ।
स्थूलसूक्ष्मविभेदेन ताः पुनर्विंशतिः स्मृताः ॥ २६ ॥
आजानुतो भुवः स्थानमाकट्याः पयसस्मृताः ।
आनाभेस्तेजसः स्थानं वायोः स्थानं तथा हृदः ॥ २७ ॥
आकट्यां (कण्ठात् ?) नभसः स्थानमाजिह्वाच्चाप्यहंकृतेः ।
आभ्रुवोर्महतः स्थानमाकाशस्य पदं स्मृतम् ॥ २८ ॥
भूमेर्वितन्वनित्याद्यैः भूतवर्णांश्च विन्यसेत् ।
पृथिवीं गन्धतन्मात्रे गन्धमात्रं रसात्मके ॥ २९ ॥
रूपे नियोज्याधारस्थं……स्पर्शे नियोजयेत् ।
भूतरूपाणि चिन्त्याथ प्रकृत्यन्तं नियोजयेत् ॥ ३० ॥
योनावायुं स्मरन् मन्त्रं बीजयुक्तेन वायुना ।
शोषयेद्बहिरन्तश्च तनुं वै तत्वयोगतः ॥ ३१ ॥
इडया वायुना रेफं(कं?) पुनः पिङ्गलया न्यसेत् ।
वामया वायुमारोप्य(रेच्य?) त्वं जीवेति पुनर्न्यसेत् ॥ ३२ ॥
द्वादशान्तःस्थपुरुषे विनिवेशितमानसः ।
तस्य वामपदाङ्गुष्ठनखशीतांशुमण्डलात् ॥ ३३ ॥
विनिर्गतैः प्रवाहैश्च शुद्धैः शुक्लैस्सुधाम्बुभिः ।
भस्मीभूतं क्रमाद्देहं संप्लाव्यं मुनिसत्तमाः ॥ ३४ ॥
एवं संप्लावयन् काले देहोत्पत्तिं विचिन्तयेत् ।
अकारबीजसंयुक्तमोषधीशस्य मण्डलम् ॥ ३५ ॥
स्रवन्तममृतं तस्मान्मण्डले भावयेत्ततः ।
नदन्वै....वर्णान्नादं शब्दब्रह्मेति यत्स्मृतम् ॥ ३६ ॥

अकारादिक्षकारान्तं धारासन्तानरूपकम् ।
तत्रैव संस्मरेद्विष्णुं प्रणवात्मकमव्ययम् ॥ ३७ ॥

नादावसानगगने देवदेवं सनातनम् ।
अस्मिन्मण्डलमध्ये तु नारायणमनामयम् ॥ ३८ ॥

विराजमानं दशादिगंशुभिर्भास्करो यथा ।
तस्योपरि सुषुम्नाग्रे शिरःपद्ममधोमुखम् ॥ ३९ ॥

दलैस्सहस्रसंख्यैश्च स्रवद्भिरमृताननैः ।
अभिचिन्त्य सुबुद्ध्या तु भावयेत्स्वतनौ पुनः ॥ ४० ॥

यः सूक्ष्मादन्त्यसिक्त्वाऽथ मूर्ध्नि मध्ये विशेषतः(?) ।
त्वं बुद्धिरिति सन्यासमुखेनैव गलान्तरे ॥ ४१ ॥

मनः स्वमिति संमन्त्र्य पञ्चभूतादिकान् जपेत् ।
पञ्चभूतमयं स्मृत्वा स्वदेहं देहनिर्मितम् ॥ ४२ ॥

स्मरेद्देहत्वमापन्नं नाडीचक्रं विचिन्तयेत् ।
मूर्धादिपादपर्यन्तं सृष्टियोगेन विन्यसेत् ॥ ४३ ॥

मातृकादीनथावाह्य तत्त्वादीनि पुनर्न्यसेत् ।
केशवाद्यैर्यथास्थाने न्यसेद्द्वादशनामभिः ॥ ४४ ॥

नमो ब्रह्मायेति मन्त्रेण गन्धमञ्जलिना हरेत् ।
इमास्सुमन इत्युक्त्वा पुष्पं शिरसि विन्यसेत् ॥ ४५ ॥

अप्सरस्त्विति मन्त्रेण गन्धेनालेपनं चरेत् ।
आधारादिषु षट्स्थाने तत्तन्मातृकया न्यसेत् ॥ ४६ ॥

आत्मसूक्तं न्यसित्वान्ते परमं न्यासमाचरेत् ।
ब्रह्म ब्रह्मान्तरात्मेति परमन्यास उच्यते ॥ ४७ ॥

प्राणायामत्रयं कृत्वा समाधिं भावयेत्पुनः ।
समाधिस्तु समावस्था जीवात्मपरमात्मनोः ॥ ४८ ॥

अनुष्णोपलमादित्यादुष्णत्वं प्राप्य तद्यथा ।
परमात्मदर्शनादात्मा बन्धनित्यस्वभावतः ॥ ४९ ॥

मुक्तश्च परमात्मानं नारायणमनामयम् ।
सदा पश्यन्ति योगेन सदा पश्यन्ति सूरयः ॥ ५० ॥

अष्टैश्वर्यमवाप्नोति जीवन्मुक्तो भवेश्वरः ।
पूर्ववद्वै समारोप्य हृदि मूर्ध्नि च धारयेत् ॥ ५१ ॥

स्थापयेन्मध्यया मात्रैः षोडशैर्द्विगुणैः क्रमात् ।
स चतुष्षष्टिभिश्चैव प्राणायामत्रयं चरेत् ॥ ५२ ॥

पूर्वमेव मया प्रोक्ता विधिना मानसार्चने ।
नवद्वारानथायम्य मूलाग्निं चैव दीपयेत् ॥ ५३ ॥

सुषुम्नाद्वारमासाद्य प्राणश्चाग्निसहायकम् ।
वहन्तं शिरसा जिघ्रन् पवनं प्राणरूपिणम् ॥ ५४ ॥

ओं हंसदिति संजप्य नवदूत्या समायुतम् ।
हृत्पुण्डरीकमुकुलमुद्धृत्य प्रणवेन तु ॥ ५५ ॥

व्याहृत्या विकसितं कृत्वा कर्णिकायां न्यसेत्पुनः ।
शब्दब्रह्ममये पद्मे संस्थिते परमात्मनि ॥ ५६ ॥

रश्मिमालायुतं ध्यात्वा तन्मध्ये रविमण्डलम् ।
तन्मध्ये शशिबिम्बं च स्रवत्पीयूषशीतलम् ॥ ५७ ॥

तस्य मध्यगतं ध्यात्वा त्रिकोणं वह्निमण्डलम् ।
दुर्निरीक्ष्यं सुरैस्सर्वैः ज्वालामालासमायुतम् ॥ ५८ ॥

तस्य मध्ये प्रभां ध्यायेन्निर्धूमां निष्कलां शुभाम् ।
प्रभामध्यगतं पीठं चतुरश्रं हिरण्मयम् ॥ ५९ ॥

नानामणिगणज्वालादुष्प्रेक्षं शुभमुज्ज्वलम् ।
नीलतोयदसंकाशा विद्युल्लेखेव भास्वरा ॥ ६० ॥

नीवारशूकवत्तन्वी पीताभा स्यात्तनूपमा ।
तस्योपरि समासीनं नारायणमनामयम् ॥ ६१ ॥

सुवर्णवर्णं रक्तास्यं रक्तनेत्रं सुखोज्ज्वलम् ।
शुकपिञ्छाम्बरधरं विष्णुं प्रणवरूपकम् ॥ ६२ ॥

किरीटकेयूरहारप्रलम्बब्रह्मसूत्रिणम् ।
श्रीवत्साङ्कं चतुर्बाहुं शङ्खचक्रधरं वरम् ॥ ६३ ॥

दक्षिणेनैव हस्तेन भक्तानामभयप्रदम् ।
वामेनाप्यन्यहस्तेन स्वकट्यामवलम्बितम् ॥ ६४ ॥

एवं स्थितं सत्पुरुषं पश्येद्देवं समाधिना ।
मम कर्मवशादेव तव पादविनास्थितिः ॥ ६५ ॥

कर्मक्षयादहं प्राप्तस्तव पादाब्जवर्तने ।
अद्य प्रभृति दासोऽहं देवदेव प्रसीद माम् ॥ ६६ ॥

इति स्तुत्वा जगन्नाथं देवदेवं जनार्दनम् ।
आत्मानं शेषभूतं ते दासोऽहमिति भावयेत् ॥ ६७ ॥

आसनाद्युपचारांश्च मनसा परिकल्प्य च ।
तत्र संपूज्य मनसा पश्चादर्चनमारभेत् ॥ ६८ ॥

वैकुण्ठादिषु मार्गेण दिव्येनावाहनं चरेत् ।
एवमावाहनं कुर्याद्विष्णोर्भेदान् विशेषतः ॥ ६९ ॥

कालरूपं समास्थाय सर्वप्रेरणको हरिः ।
दर्शनेषु च सर्वेषां सुदर्शनमुदाहृतम् ॥ ७० ॥

पञ्चभूतप्रजनकात्पाञ्चजन्य उदाहृतः ।
मायागतं निरस्य त्वां गदाप्येवमुदाहृता ॥ ७१ ॥

आनन्दविद्यादानत्वान्नन्दकं समुदाहृतम् ।
अनिष्टानां सुखं शास्ता तेन शार्ङ्गमुदाहृतम् ॥ ७२ ॥

अनिष्टध्वंसजातत्वात् ध्वजश्चा........ पठ्यते ।
वैखानसेन सूत्रेण निषेकादिक्रियान्वितः ॥ ७३ ॥

गृहस्थो ब्रह्मचारी वा भक्त्यैवार्चनमारभेत् ।
शास्त्रं कृत्स्नमधीत्यैव नित्यं विधिवदर्चयेत् ॥ ७४ ॥

इति श्रीवैखानसे अत्रिप्रोक्ते समूर्तार्चनाधिकरणे पञ्चमोऽध्यायः ॥

---

## षष्ठोऽध्यायः

### अष्टाङ्गयोगः

अष्टाङ्गयोगमार्गेण सृष्टिं वक्ष्ये यथाविधि ।
यमश्च नियमश्चैवमासनं च तथैव च ॥ १ ॥

प्राणायामप्रत्याहारधारणा ध्यानमेव च ।
समाधिश्चाष्टधा योगस्तेषां भेद इहोच्यते ॥ २ ॥

यमोऽहिंसा च सत्यं च अस्तेयं ब्रह्मचारिता ।
दयार्जवं क्षमा धैर्यं मिताशनकमेव च ॥ ३ ॥

शौचश्चेति यमगुणा दश भेदा भवन्ति वै ।
नियमस्तपः सन्तोष आस्तिक्यं दानपूजने ॥ ४ ॥

श्रवणं कुत्सितकर्मलज्जया च सहैव तु ।
गुरूपदेशश्रद्धा च मन्त्राभ्यासस्तथैव च ॥ ५ ॥

होमश्चैवं नियमगुणा दशधा भेद उच्यते ।
एतैस्तु विंशतिगुणैर्युक्तो योगी भवेन्नरः ॥ ६ ॥

आसनानि प्रवक्ष्यामि नवभेदयुतानि च ।
ब्राह्मं च स्वस्तिकं पद्मं गोमुखं सिंहमुत्तमम् ॥ ७ ॥

वीरभद्रमयूराणीत्यासनं परिकीर्तितम् ।
दक्षिणं पादमूर्ध्वं तु वामपादमधस्स्मृतम् ॥ ८ ॥

कृत्वा जान्वन्तरेऽङ्गुष्ठौ विन्यस्याङ्के तु वै क्रमात् ।
वामपाणिं तदूर्ध्वे तु दक्षिणोत्तानकं न्यसेत् ॥ ९ ॥

ऋजुकायो भ्रुवोर्मध्ये ईक्षणं ब्राह्ममुत्तमम् ।
सीवन्योरुभयोर्मध्ये द्वयं गुल्फं निवेश्य च ॥ १० ॥

एवं पूर्ववदासीन आसनं स्वस्तिकं मतम् ।
ऊर्वोरुपरि पादौ द्वौ तलौ न्यस्य च पूर्ववत् ॥ ११ ॥

अङ्के हस्ततलौ न्यस्य एवं पद्मासनं मतम् ।
दक्षिणं दक्षिणे पार्श्वे वामे वामं निवेशयेत् ॥ १२ ॥

एतद्वै गोमुखं नाम चासनं प्रत्यसंमतम् (?) ।
वृषणं सीवन्यधःपार्श्वे पादं हस्तौ च जानुनी ॥ १३ ॥

उत्थाप्य नासिकाग्रे स्वमीक्षणं सिंहमुत्तमम् ।
गुल्फं सव्यं तु मध्यानुसव्यं तदुपरि न्यसेत् ॥ १४ ॥

एतन्मुक्तासनं प्राहुः पादं दक्षिणवामयोः ।
ऊर्वोरुपरि विन्यस्य पादं दक्षिणवामयोः ॥ १५ ॥

एतद्वीरासनं प्रोक्तं गुल्फौ सवृषणौ तथा ।
सीवन्योरुभयोर्न्यस्य पादयोरुभयोरपि ॥ १६ ॥

बध्वा चैव तु पाणिभ्यामेतद्भद्रासनं मतम् ।
करयोश्च तलौ चैवं सुसंस्थाप्य च कूर्परौ ॥ १७ ॥

नाभौ पार्श्वे सुसंन्यस्य शिरस्युत्तानमेव च ।
पादौ च दण्डवद्व्योम्नि मायूरं नाम चासनम् ॥ १८ ॥

ब्रह्मादिलितयं चैव उत्तमानि तथैव च ।
स्वस्तिकासनमासीनो ऋजुकायस्तथा पुनः ॥ १९ ॥

प्राणायाममथो वक्ष्ये रेचकादिक्रमेण च ।
प्राणापानसमायोगः प्राणायाम उदाहृतः ॥ २० ॥

रेचयेदौदरं वायुं वामनासापुटेन वै ।
पूरयेद्दक्षिणे नासापुटे बाह्येन वायुना ॥ २१ ॥

संपूर्णकुम्भवद्वायोर्धारणं पूरकं (कुम्भकं?) स्मृतम् ।
प्राणायामेन चामन्त्र्य नासिकायां तु विन्यसेत् ॥ २२ ॥

वायुमण्डलमभ्येत्य तदर्थेनैव वायुना ।
संशोधयेदिदं देहं स्थूलसूक्ष्मविभेदतः ॥ २३ ॥

प्राणायामद्वितीयेन हृदये विन्यसेत्पुनः ।
मन्त्रोत्थेनाग्निना देहं देहमण्डलवर्तिना ॥ २४ ॥

तृतीयेणाथ चात्मानं प्राणायामेन मन्त्रवित् ।
तदस्येति च यन्मन्त्रं वामपादे निवेश्य च ॥ २५ ॥

तदङ्गुष्ठाद्विनिष्ठ्यूतपीयूषाप्लावितं स्मरेत् ।
एवमाप्लाविते देहे षण्णवत्यङ्गुलात्मके ॥ २६ ॥

मेढ्रात्तु द्व्यङ्गुलादर्वाक् गुह्यान्तं द्व्यङ्गुलोपरि ।
तयोर्मध्यं तनोर्मध्यं मूलाधारमिति स्मृतम् ॥ २७ ॥

तत्त्रिकोणसमायुक्तं वह्नेर्मण्डलमुच्यते ।
बिन्दुनादसमायुक्तं रेफं तन्मण्डलोपरि ॥ २८ ॥

तस्य मण्डलमध्ये तु यज्ञमूर्तिं महाद्युतिम् ।
स्वाहास्वधाभ्यां सहितं सर्वगन्धानुलेपनम् ॥ २९ ॥

सर्वैर्देवैः परिवृतं स्मरन्तत्राश्रयाश्रयम् ।
संभाव्य विधिवत्तस्मात् तमोघ्नं देवतामुखम् ॥ ३० ॥

द्विशीर्षं पिङ्गलाक्षं च चतुः श्शृङ्गं तथैव च ।
षण्णेत्रं च चतुर्हस्तं स्रुक्स्रुवौ शक्तिसंयुते ॥ ३१ ॥

वामे तु खड्गवरदौ त्रिपात्पीताम्बरस्तथा ।
किरीटाद्यैराभरणैर्युक्तं तं देवतामुखम् ॥ ३२ ॥

मेढ्रान्नवाङ्गुलाक्रान्तं चतुरङ्गुलमायतम् ।
मण्डलाकृति तन्मध्ये त्वङ्गाद्यैश्च विभूषितम् ॥ ३३ ॥

कदलीमूलवच्चक्रं मध्ये वै नाभिमण्डलम् ।
तन्नाभौ पद्मचक्रं च तस्मिन् जीवस्स्थितस्सदा ॥ ३४ ॥

शरीरं ध्रियते येन यत्न(पद्म?)चक्रे नियुज्यते ।
प्राणारूढो भवेज्जीवश्चक्रेऽस्मिन् भ्रमते सदा ॥ ३५ ॥

देवस्य परितस्तत्र पुण्यपापैः प्रचोदितः ।
तस्योर्ध्वे नकुली (कुण्डली?) नाम तिर्यगूर्ध्वमधोगता ॥ ३६ ॥

नागरूपाष्टधा कोणैः भागैरावेष्ट्य कन्दकम् ।
स्वान्तु स्वशिरसा नित्यमन्नपानादि सर्वतः ॥ ३७ ॥

कन्दपार्श्वे नयेदेवं देहरक्षार्थसंमतम् ।
ब्रह्मरन्ध्रं सुषुम्नाया विदधाति मुखेन वै ॥ ३८ ॥

एवं बुद्ध्या तु वै तस्मिन्नाडीचक्रं विचिन्तयेत् ।
कन्दमध्यस्थिता नाडी सुषुम्ना मुक्तिसाधिका ॥ ३९ ॥

द्विसप्ततिसहस्राणि कन्दमावृत्य नाडयः ।
नाडयस्तु देहरक्षार्थं दिष्टा मुख्याश्चतुर्दश ॥ ४० ॥

तासु तिस्रस्तु मुख्यास्स्युः सुषुम्नेडा च पिङ्गला ।
तासां मुख्या सुषुम्ना स्यात् मुक्तिमार्गेति वैष्णवी ॥ ४१ ॥

ऊर्ध्वाधस्ताश्च संप्राप्ता सुषुम्ना विश्वधारिणी ।
पञ्चरन्ध्रेण युक्ता सा चत्वारो रक्तपूरिताः ॥ ४२ ॥

कन्दस्य विहितं (विवरे?) शश्वत् मध्यमा ब्रह्मरन्ध्रगा ।
दक्षिणे पिङ्गला स्यात्तु याम्यनासान्तमाश्रिता ॥ ४३ ॥

तस्यां वै भास्करो नित्यं चरत्यनुपमद्युतिः ।
सुषुम्नायास्तु वामे वै वामनासाङ्गसंस्थिता ॥ ४४ ॥

इडासंज्ञा हि विज्ञेया तस्यां चरति चन्द्रमाः ।
तामसो राजसो तौ तु विषं चामृतमेव च ॥ ४५ ॥

कालं च कुरुते तौ तु ब्रह्मनाड्यथ भुञ्जते ।
रजो रह उपश्चेति रवेर्भावे सुसंस्थिता ॥ ४६ ॥

सुषुम्नायाः पूर्वभागे आमूर्धान्तं स्थिता कुहूः ।
अपरे चोर्ध्वभागे तु जिह्वान्तं च सरस्वती ॥ ४७ ॥

पिङ्गलायां पूर्वभागे दक्षिणाङ्गुष्ठसंस्थिता ।
नीला यशस्विनी पूषा परे दक्षिणनेत्रगा ॥ ४८ ॥

यशस्विनीकुह्वोर्मध्ये गान्धारीति च संस्थिता ।
गान्धार्याश्च कुह्वोर्मध्ये वारुणा सर्वगामिनी ॥ ४९ ॥

पूषायाश्च सरस्वत्याः कर्मान्तस्था तपस्विनी ।
इडायाः पूर्वभागे तु चोर्ध्वं वामपदान्तगा ॥ ५० ॥

हस्तिजिह्वा परा वामे वामनेत्रान्तसंस्थिता ।
गान्धारी सेति विज्ञेया हस्तिजिह्वाकुह्वोस्तु वै ॥ ५१ ॥

अधश्चोर्ध्वं गता मध्ये विश्वगा सर्वगामिनी ।
गान्धार्याश्च सरस्वत्याः वामकर्णान्तसंस्थिता ॥ ५२ ॥

शङ्खिन्यलंबुषा चैव कन्दमध्यादधोगता ।
एवं च संसरेन्नाड्यश्चक्रमध्ये दलेषु च ॥ ५३ ॥

सिराश्चाश्वत्थदलवन्नाड्य ऊर्ध्वादधोगताः ।
तथैव सर्वनाड्यश्च ब्रह्मनाड्यां प्रलीयते ॥ ५४ ॥

एवं च संस्थिते देहे वर्तन्ते दश वायवः ।
तेषु प्राणादयो मुख्याः विहिताः पञ्चवायवः ॥ ५५ ॥

तेषां हि मुख्यः प्रणवः प्राणस्थानमिहोच्यते ।
आस्यनासिकयोर्मध्ये हृन्मध्यं नाभिमध्यमम् ॥ ५६ ॥

पादाङ्गुष्ठादि नासान्तं स्फुरन्माणिक्यसन्निभः ।
हृत्पद्मं त्वथ संगृह्य निश्वासं कुरुते सदा ॥ ५७ ॥

इन्द्रगोपकसंकाश अपानो नाभिदेशकः ।
संवर्तमानो विण्मूत्रविसर्जनकरश्च सः ॥ ५८ ॥

व्यानस्संधिगतो नित्यमुपादानकरस्सदा ।
किञ्जल्कसदृगुदानश्चेष्टादींश्च करोति सः ॥ ५९ ॥

स एव कण्ठमाश्रित्य पानपोषणकृत्सदा ।
ततस्समानो व्यामोहः क्षीरे सर्पिरिव स्थितः ॥ ६० ॥

चरणव्यापकश्चैव मथनादीन् करोत्ययम् ।
नागः श्वेतः कण्ठदेशे उद्गारादि करोति सः ॥ ६१ ॥

कूर्मो रक्तो नेत्रदेशे निमिषोन्मेषकृच्च सः ।
क्षुत्पिपासाकरः कृष्ण उदरे कृकरः स्मृतः ॥ ६२ ॥

देवदत्तः पीतवर्णस्तन्द्रं च कुरुते सदा ।
धनञ्जयश्च श्यामाभः सर्वशोफादिकर्मभाक् ॥ ६३ ॥

अञ्जनाभोऽथ जीवात्मा नित्यस्सर्वगतश्शुचिः ।
एवं भूततनुं प्राप्य तत्तत्कर्मवशादसौ ॥ ६४ ॥

तिष्ठन्ति यावन्निर्वाणं तदावनवसंशयः(?) ।
एवं ज्ञात्वा स्वकं देहं संयतेन्द्रियमानसः ॥ ६५ ॥

प्रत्याहारं ततःपश्चात् पञ्चाङ्गेन समन्वितम् ।
यो वायुरिति मन्त्रेण अष्टादशसु धारयेत् ॥ ६६ ॥

पादाङ्गुष्ठे च गुल्फे च जङ्घामध्ये च चिन्तयेत् ।
जान्वोर्मध्ये च मूले च मूलपार्श्वोस्तथैव च ॥ ६७ ॥

देहमध्ये च मेढ्रे च नाभौ हृत्कर्णमूलयोः ।
तालुके नासिकामूले अक्ष्णोश्चैवान्तरे (भ्रुवोः) ॥ ६८ ॥

ललाटदेशे मूर्ध्नि तु धारयेद्वायुमात्मवान् ।
पादोन्मानमथो वक्ष्ये सार्धं च चतुरङ्गुलम् ॥ ६९ ॥

गुल्फं दशाङ्गुलं पश्चात् द्व्यङ्गुलं चितिमूलकम् ।
जानु च द्व्यंगुलं तस्मादूरुमध्यान्नवाङ्गुलम् ॥ ७० ॥

तस्मान्नवाङ्गुलं वा(पा)यु सहार्धादिकसंमतम् ।
देहमध्यमिति प्रोक्तं मेढ्राद्द्व्यर्धाङ्गुलं मतम् ॥ ७१ ॥

तस्माद्दशाङ्गुलं नाभिः हृन्मध्यं तु चतुर्दश ।
षडङ्गुलं कण्ठमूलं जिह्वामूलं युगाङ्गुलम् ॥ ७२ ॥

तथैव नासिकामूलं तस्माद्व्यर्धाधिकाङ्गुलम् ।
भ्रूमध्यं वै ललाटं च द्व्यङ्गुलं परिचक्षते ॥ ७३ ॥

तस्माद्वै त्र्यङ्गुलं (द्व्यङ्गुलं?) मूर्धा स्थानमेवमुदाहृतम् ।
स्थानात्स्थानात्समाकृष्यन्निरोधमथ भावयेत् ॥ ७४ ॥

अकारादिक्षकारान्तं न्यसित्वा सर्वसन्धिषु ।
केशवादीन्यथा न्यस्य तत्त्वानि च तथा पुनः ॥ ७५ ॥

एवं स्वदेहं संभाव्य धारणं च समाचरेत् ।
हृत्पद्ममन्तराकाशे बाह्याकाशे तथैव च ॥ ७६ ॥

आकाशादिषु भूतेषु भावयेन्मनसा हरिम् ।
प्राणायामं पुनः कृत्वा पूर्ववक्त्रमधो गतः ॥ ७७ ॥

प्राणापानसमायुक्तं प्रविशेदग्निमण्डले ।
ततः प्राणानिलेनाथ ज्वलिते सति पावके ॥ ७८ ॥

अग्निना ज्वाल्यमानेन वायुसंस्पर्शनात्ततः ।
संतर्पणसमायुक्ता प्रबोधं याति कुण्डली ॥ ७९ ॥

प्राणायामसमुत्थेन वायुना वह्निना मुखम् ।
कुण्डल्याश्च मुखं भिन्दन् सुषुम्नामध्यवर्तिना ॥ ८० ॥

नयेदूर्ध्वं सुषुम्नायाः प्राणं वह्निसहायकम् ।
हृत्पद्मं संप्रविश्याथ अधोमुखमुपस्थितम् ॥ ८१ ॥

तन्मुखस्य मुखं नीत्वा विकास्य हृदयाम्बुजम् ।
विमोचयित्वा तं वायुं याम्यनाड्यां क्रमात्पुनः ॥ ८२ ॥

आत्मानमात्मसूक्तेन जप्त्वा वै सुसमाहितः ।
द्वादशावरणं धाम चतुरश्रं समन्ततः ॥ ८३ ॥

विमानं दृष्टवानब्धौ ब्रह्मणा ददृशुः पुरा ।
तप्तहाटकसंकाशं तलैर्द्वादशभिर्युतम् ॥ ८४ ॥

मण्डपादिविशेषं च सर्वालंकारसंयुतम् ।
तस्मिन्नाकृतिमध्यस्था(स्थं?) सुवृत्तं वै वरासनम् ॥ ८५ ॥

गुल्फपादसमायुक्तं सर्वाभरणसंयुतम् ।
रश्मिमालायुतं ध्यात्वा तन्मध्ये रविमण्डलम् ॥ ८६ ॥

तन्मध्ये शशिबिम्बं च स्रवत्पीयूषशीतलम् ।
तस्य मध्यगतं ध्यात्वा त्रिकोणं वह्निमण्डलम् ॥ ८७ ॥

दुर्निरीक्ष्यं सुरैस्सर्वैर्ज्वालामालासमन्वितम् ।
तस्य मध्ये प्रभां ध्यायेत् निर्धूमां निष्कलां शुभाम् ॥ ८८ ॥

नीवारशूकवत्तन्वीं पीताभासां तनूपमाम् ।
प्रभामध्यगतं पीठं चतुरश्रं हिरण्मयम् ॥ ८९ ॥

नानामणिगणज्वालादुष्प्रेक्ष्यं शुभमुज्ज्वलम् ।
तस्य मध्यगतं ध्यात्वा नारायणमनामयम् ॥ ९० ॥

सुवर्णवर्णं रक्तास्यं रक्तनेत्रं सुखोद्वहम् ।
शुकपिञ्छाम्बरधरं विष्णुं प्रणवरूपकम् ॥ ९१ ॥

किरीटकेयूरहारप्रलम्बब्रह्मसूत्रिणम् ।
श्रीवत्साङ्कं चतुर्बाहुं शङ्खचक्रधरं वरम् ॥ ९२ ॥

दक्षिणेनैव हस्तेन भक्तानामभयप्रदम् ।
वामेनाप्यन्यहस्तेन स्वकट्यामवलम्बितम् ॥ ९३ ॥

एवं सुसंस्थं पुरुषं पश्येद्देवं समाधिना ।
मम कर्मवशादेव तव पादविनास्थितिः ॥ ९४ ॥

कर्मक्षयादहं प्राप्तस्तव पादाब्जवर्तने ।
अद्यप्रभृति दासोऽहं देवदेव प्रसीद माम् ॥ ९५ ॥

इति स्तुत्वा जगन्नाथं देवदेवं जनार्दनम् ।
आत्मानं शेषभूतं तं दासोऽहमिति भावयेत् ॥ ९६ ॥

आसनाद्युपचाराणि मनसा संप्रकल्प्य च ।
तत्र संपूज्य मनसा पश्चादर्चनमारभेत् ॥ ९७ ॥

(इति श्रीवैखानसे आत्रेये समूर्तार्चनाधिकरणे प्रथमतन्त्रे प्रवेशो अष्टा
नाम षष्ठोऽध्यायः) ॥

---



# अनुबन्धः—ख

ऋषय ऊचुः—

यतः प्रसूतिर्जगतां कालं चान्तं तथैव च ।
तेषां स्थानं च भेदं च अस्माकं भगवन् वद ॥ १ ॥

बलिरुवाच—

प्रकृत्या परिपन्नं हि सर्वमेतच्चराचरम् ।
तत्रैव लीयते सर्वं परस्मिन् ब्रह्मणि स्थितम् ॥ २ ॥

युगद्वयं सहस्राभ्यां ब्रह्मणो दिनमुच्यते ।
तावतीर्वत्सरास्तस्य दिने मन्वन्तराणि च ॥ ३ ॥

एकेन सप्ततिः कालो मनोरेकस्य कल्पितः ।
प्रलये महदाख्ये तु सर्वाण्यस्मिन् लयं गते ॥ ४ ॥

अवान्तराश्च प्रलया महान्तः प्रलयास्तथा ।
चक्रवद्भ्रमते कालो विरामो नास्ति कर्हिचित् ॥ ५ ॥

पञ्चाशत्कोटिविस्तीर्णा चतुरश्राभवच्च भूः ।
सप्तद्वीपानि तत्र स्युः समुद्राश्च तथैव च ॥ ६ ॥

मण्डलाकारवद्भूमेरुपर्युपरि वेष्टिताः ।
नामानि सप्तद्वीपानां श्रृणुध्वं तु यथाक्रमम् ॥ ७ ॥

जम्बूप्लक्षौ शाल्मली च कुशः क्रौञ्चः पुनस्तथा ।
शाकपुष्करनामानौ समुद्राश्च तथैव च ॥ ८ ॥

लवणेक्षुसुरासर्पिर्दधिक्षीरोदकास्तथा ।
भूभागमध्यमे मेरुः लक्षोच्छ्रायेण संस्थितः ॥ ९ ॥

भूमेस्तु मध्यमे देशे अन्तष्षोडशयोजनाः ।
योजनानां सहस्राणि भूमेरूर्ध्वं प्रकाश्यते ॥ १० ॥

द्वात्रिंशच्च सहस्राणां योजनानां च विस्तृतिः ।
भूमेस्तु मध्यमे देशे कर्णिकावच्च संस्थिते ॥ ११ ॥

शतयोजनविस्तीर्णैः शृङ्गैश्शतसहस्रकैः ।
तत्संख्येन प्रमाणेन तस्य पार्श्वे महीधराः ॥ १२ ॥

हिमवान्निषधश्चैव हेमकूटस्तु दक्षिणे ।
प्रथमं भारतं वर्षं ततः किंपुरुषं मतम् ॥ १३ ॥

नाम्ना शृङ्गीति विज्ञेयः वर्षत्रयमथो पुनः ।
रम्यं हिरण्मयं चैव उत्तराः कुरवस्तथा ॥ १४ ॥

प्रत्येकं षट् च वर्षाणि योजनानां सहस्रशः ।
इलावृताख्यवर्षश्च तन्मध्ये मेरुरुत्तमः ॥ १५ ॥

मेरोश्चतुर्दशान्तस्य षड्योजनक्षुविस्तराः ।
त्रीणि चैव सहस्राणि चत्वारः पर्वतास्स्मृताः ॥ १६ ॥

हैरण्यरूपसंयुक्ता उच्छ्रायेऽयुतयोजनाः ।
पूर्वस्यां मन्दरो नाम्ना याम्यां वै गन्धमादनः ॥ १७ ॥

प्रतीच्यां विपुलो नाम चतुर्दिक्ष्वथ पार्श्वतः ।
चत्वारो वृक्षका भेदाः कदम्बो जम्बुपिप्पली ॥ १८ ॥

वटश्चैवं समाख्यातः तेषां प्रत्येकमायतम् ।
जम्बूसमाश्रयाद् द्वीपो जम्बूद्वीप इति स्मृतः ॥ १९ ॥

शीतान्तोऽथ मुकुन्दश्च कुररी माल्यवानपि ।
वैकङ्को नाम पञ्चैते पुरस्तात्केसराचलाः ॥ २० ॥

त्रिकूटशिरसौ चैवं पन्नगो रुचकाह्वयः ।
निषधो नाम पञ्चैते दक्षिणे केसराचलाः ॥ २१ ॥

वैडूर्यश्शिखिवासश्च कपिलो गन्धमादनः ।
जारुधश्च स्थिराः पञ्च केसराः पश्चिमे मताः ॥ २२ ॥

वृषभः शंखकूटोऽथ हंसो नागाह्वयस्तथा ।
कालाञ्जनसमाख्यात उदीच्यां केसराचलाः ॥ २३ ॥

द्वात्रिंशच्च सहस्राणां योजनानां च मानतः ।
स्वर्गापवर्गफलदाः कर्मणां यन्त्रिणामिह ॥ २४ ॥

सह्यो महेन्द्रो मलयः शुक्तिमानृक्षवानथ ।
विन्ध्यश्च पारियात्रश्च एते सप्त कुलाचलाः ॥ २५ ॥

योजनानां सहस्राणि विस्तारे नवयोजनाः ।
एवं भारतमाख्यातं परलोकपदार्थिनाम् ॥ २६ ॥

वर्षेष्वन्येषु सर्वेषु केवलं फलमश्नुते ।
भारते चातुराश्रम्यचातुर्वर्ण्यविवर्धनम् ॥ २७ ॥

इह कुर्वन्ति तं यज्ञं यजन्ते पुरुषर्षभम् ।
तस्मात्तु भारतं श्रेष्ठं सर्वधर्मपदार्थिनाम् ॥ २८ ॥

अन्येषु षट्सु द्वीपेषु तथा वर्षाणि सप्त च ।
तत्तद्वर्षेषु सर्वेषु प्रत्येकं कुलपर्वताः ॥ २९ ॥

वर्णाश्रमविभेदाश्च तत्र तत्र व्यवस्थिताः ।
सप्तमे पुष्करद्वीपे मानसोत्तरनामतः ॥ ३० ॥

भूमिभृद्वलवान् भाति योजनानां सहस्रशः ।
विस्तारेण समुन्नत्या पञ्चाशदपि विस्तृतिः ॥ ३१ ॥

तस्मिन् भूभृद्वने श्रेष्ठे द्वे वर्षे परिमण्डले ।
इन्द्रादिलोकपालानां तस्य मूर्ध्नि पुरस्तथा ॥ ३२ ॥
पुष्करश्च गिरिस्तस्मादच्छोदैः पूर्णवारिभिः ।
ततो हिरण्मयी भूमिः स··············॥ ३३ ॥
तपनीयमयो नाम्ना लोकालोकाचलो बहिः ।
चतुरश्रः समश्चैव सालवत्सर्वलोकभृत् ॥ ३४ ॥
योजनायुतमुन्नत्या सर्वमावृत्य तिष्ठति ।
तावानेवास्य विस्तारः सर्वतो मूर्ध्नि च क्रमात् ॥ ३५ ॥
रविस्तु तद्बहिः पार्श्वे स (न?) द्योतयति सर्वदा ।
तद्बहिस्तमसावृत्य समन्ताद्वेष्टितो गिरिः ॥ ३६ ॥
बहिरण्डकटाहेन महता तदनन्तरम् ।
या तया ध्रियते पृथ्वी जगत्सर्वं चराचरम् ॥ ३७ ॥
अतलं वितलं चैव नितलं सुतलं तथा ।
रसातलं महातलं पातालं चैव सप्तमम् ॥ ३८ ॥
एकैकमुच्छ्रयं तेषां योजनानां सहस्रशः ।
अतलादिषु रत्नानां दीप्त्या चैव दिवानिशम् ॥ ३९ ॥
जनैराकाङ्क्ष्यते कश्चित् न सूर्यो न च चन्द्रमाः ।
अतलादिषु सर्वेषु स्वर्गादष्टगुणं सुखम् ॥ ४० ॥
भुज्यते भोगनिरतै रक्षोभिर्दैत्यदानवैः ।
न दरिद्रा न रोगार्ता नाशक्ता न च दुःखिताः ॥ ४१ ॥
भूलोकस्यैव चाधस्तान्नरकाख्याः स्मृता भुवः ।
प्रथमं रौरवं तस्मिन् महच्च तदनन्तरम् ॥ ४२ ॥

ततस्सप्तसु पुन्नामा कुम्भी शूलाधिरोहणम् ।
सूच्यग्रं च क्षुरमतः खङ्गः कर्दम एव च ॥ ४३ ॥

सूकरीतैलपक्षश्च महाज्वालापि कम्पिनी ।
असिपत्रः पूयवहः व्याघ्रसिंहवृकादिकः ॥ ४४ ॥

तप्तस्तम्भो शुना भक्ष्यः शाल्मली हेमपुष्पिणी ।
लालोदकं रक्तसिन्धुः शक्तिच्छेदमतःपरम् ॥ ४५ ॥

एवमाद्यास्तथा चाथ नरका उदिताः क्रमात् ।
पतन्ति तेषु पापिष्ठाः फलं भुञ्जन्ति मानवाः ॥ ४६ ॥

ज्ञानं कर्माणि सर्वाणि भस्मसात्कुरुते सदा ।
अतःपरं क्षितेर्व्योम्नि लक्षयोजनसंयुतात् ॥ ४७ ॥

रश्मिभिः स्वै रविस्तिष्ठन् जगद्भासयते सदा ।
रथस्य वामपार्श्वे तु चक्रं दिव्यं प्रतिष्ठितम् ॥ ४८ ॥

मानसे चोत्तरे पार्श्वे मूर्ध्नि चक्रस्य पद्धतिः ।
मुमुक्षवस्तेन पथा यान्ति विष्णोः परं पदम् ॥ ४९ ॥

दर्शनादर्शनाद्भानोरुदयास्तमयौ मतौ ।
यैर्दृश्यतेऽथ भानुस्तु तेषां तत्रोदयः स्मृतः ॥ ५० ॥

यत्र याति तिरोभावस्तत्रास्तमय ईरितः ।
रश्मयोऽर्कस्य पूर्वाह्णे दीर्घा भान्तीति नित्यशः ॥ ५१ ॥

ह्रस्वा भवन्ति सायाह्ने तेषां यान्ति न दर्शनम् ।
एवं द्वित्रितयः पुंसां सर्वेषां मेरुरुत्तरम् ॥ ५२ ॥

पतन्ति भानवो भानोस्तिर्यगूर्ध्वमधो गताः ।
भूसूर्ययोरन्तरालं भुवस्तलमितीरितम् ॥ ५३ ॥

सिद्धविद्याधराश्चैव गन्धर्वास्सहदानवाः ।
वसन्ति मुदितास्सर्वे स्वपुरेषु पृथक् सदा ॥ ५४ ॥

दिवाकराच्च लक्षे तु चन्द्रस्थानमुदाहृतम् ।
तत्रोपरिष्टात्तिष्ठन्ति नक्षत्राणि यथाक्रमम् ॥ ५५ ॥

लक्षत्रयं तदूर्ध्वे तु बुधस्थानमुदाहृतम् ।
तथा चोशनसः स्थानं लक्षद्वयमुदाहृतम् ॥ ५६ ॥

तस्मात्तु योजनातीते भौमस्य स्थानमुत्तमम् ।
तस्माल्लक्षक्रमत्येत्य गुरुस्तिष्ठति सुप्रभः ॥ ५७ ॥

तत्प्रमाणमतीत्यैव सौरेः स्थानमुदाहृतम् ।
लक्षद्वयमतीत्यैव मुनयस्सप्त ईरिताः ॥ ५८ ॥

तदूर्ध्वे चोत्तरे तास्तु ऋषीणां च सहस्रशः ।
ततो ध्रुवस्य संस्थानं सर्वेषामुपरि स्थलम् ॥ ५९ ॥

द्वादशारमधश्चक्रं द्वे द्वे वै तस्य नाभिषु ।
तिस्रस्तिस्रस्तु ऋषयः मासपास्तेष्वरेषु च ॥ ६० ॥

एषामरेषु मेषादिराशयो द्वादश स्थिताः ।
मासा द्वादश चैत्राद्याः वसन्तप्रमुखास्तथा ॥ ६१ ॥

षडर्तवस्संक्रमौ द्वौ विषुवायनकद्वयम् ।
सितासितौ च पक्षौ च युगभेदाश्च वत्सराः ॥ ६२ ॥

त्रुट्यादयः कलाश्चैव चक्रधारेषु निष्ठिताः ।
ध्रुवः स्थितोः नाभिमध्ये प्रादक्षिण्येन राशयः ॥ ६३ ॥

प्रसव्येन ग्रहास्सर्वे चक्रवक्रमते सदा ।
कुलालचक्रमध्यस्थो मृत्पिण्डा इव सर्वदा ॥ ६४ ॥

भ्रमन्ति परितस्सर्वे ध्रुवं ज्योतिर्गणास्सदा ।
आदित्यध्रुवयोर्मध्ये देशः स्वर्गसमाह्वयः ॥ ६५ ॥

तस्मिन् वसन्ति गीर्वाणा विमानेषु पृथक्स्थिताः ।
असंख्याताश्च तत्र स्युः तेजोमयवपुर्धराः ॥ ६६ ॥

गङ्गाजलं च पुष्पाणि कल्पवृक्षसमुद्भवाः(?) ।
चिन्तामणिश्चाप्सरसस्तेषां भोगा उदाहृताः ॥ ६७ ॥

भूसूर्ययोरन्तराले सिद्धाद्या निरुपद्रवाः ।
उपेन्द्रमूर्तिर्भगवानासीनस्तत्र सर्वदा ॥ ६८ ॥

रक्षति स्वर्गनिलयान् स्वेनैवोत्तरतेजसा ।
भूर्भुवस्स्वस्त्रयो लोकाः पञ्चलक्षा उदाहृताः ॥ ६९ ॥

अतःपरं महर्लोकः योजनैः कोटिभिर्युतः ।
योजनानां सहस्राणि पुनस्तद्द्विगुणायतः ॥ ७० ॥

कोटिद्वयं तदूर्ध्वे तु प्राजापत्यमुदाहृतम् ।
लक्षयोजनविस्तारं सालप्रासादसंकुलम् ॥ ७१ ॥

उत्तरे ब्रह्मलोकस्य वैष्णवं स्थानकं महत् ।
लोकयोरन्तरे तावल्लक्षयोजन संमिते ॥ ७२ ॥

तथास्य दक्षिणे भागे शिवलोकः प्रकीर्तितः ।
शिवलोकं चतुर्द्वारं तस्मिन्नास्ते शिवः स्वयम् ॥ ७३ ॥

तावत्येव स्थिते माने विश्वात्मा विश्वसृट् पतिः ।
तस्मात्परस्मात्पुरतः चतुष्कोटिप्रमाणके ॥ ७४ ॥

ततः कोटिमतीत्यैव पञ्चपञ्चदशे वरे ।
अध्यास्ते भगवान्विष्णुः शङ्खचक्रगदाधरः ॥ ७५ ॥

पञ्चमूर्तिमयो विष्णुः कोटियोजनसंयुते ।
आस्ते श्रीभूमिसहितो वैनतेयनिषेवितः ॥ ७६ ॥

अण्डैश्चपरिपर्यन्ते स्थितोर्ध्वे कोटियोजने ।
शुद्धं हिरण्मयं यज्ञमचिन्त्यं विस्मयावहम् ॥ ७७ ॥

एतेनाण्डकटाहेन सर्वलोकास्समावृताः ।
उपर्युपरि ते लोकाः कपित्थफलवत् स्थिताः ॥ ७८ ॥

तद्देशस्योत्तरे देशे वारिणा परिवेष्टितम् ।
आवृत्य वारिणा चाण्डमग्निना च तथैव च ॥ ७९ ॥

तद्वच्च वायुना व्योम्ना महता च समावृतम् ।
महश्चापि प्रधानेन प्रधानं तमसा वृतम् ॥ ८० ॥

तदनन्तमपर्यन्तं न संख्या विद्यते मया ।
हेतुभूतमशेषस्य तमसा प्रकृतिः परा ॥ ८१ ॥

अण्डानामीदृशान्येव सहस्राण्ययुतानि च ।
बहुनात्र किमुक्तेन तेषां संख्या न विद्यते ॥ ८२ ॥

अण्डानि तानि सर्वाणि व्याप्य नारायणः स्थितः ।
अन्तर्बहिश्च तत्सर्वं साक्षिवत् सर्वमीक्षते ॥ ८३ ॥

महतस्तमसा व्याप्य लोकास्सुबहुयोजनाः ।
चतुर्द्वारः क्रमव्यूहा अनिरुद्धपदास्तथा ॥ ८४ ॥

अच्युतोऽनन्तरं तेषां सत्यं च पुरुषः स्मृतः ।
विभाव्यश्च महाविष्णुः सर्वलोकानतीत्य सः ॥ ८५ ॥

एकैकस्यान्तरे कोटियोजनानामितीरितम् ।
तेभ्यो बहिःस्थितो लोकः सदा विष्णुरजः परः ॥ ८६ ॥

स शेषभोगपर्यङ्के मणिमण्टपशोभिते ।
श्रीभूमिसहितस्तस्मिन्नष्टाभिश्शक्तिभिर्युतः ॥ ८७ ॥

प्रणमद्भिस्सेव्यमानस्सामीप्यादिपदस्थितैः ।
मुक्तैश्चैवं च कालज्ञैः सिद्धैः किङ्करतां गतैः ॥ ८८ ॥

भगवद्धर्मनिष्ठैश्च बहुभिर्भगवन्मयैः ।
विस्तारः कथितश्चैवं चतुराननशासनात् ॥ ८९ ॥

सारासारं समुद्धृत्य सत्यमेतदुदाहृतम् ॥

ति श्रीवैखानसे अत्रिप्रोक्ते विष्णुतन्त्रे समूर्तार्चनाधिकारे भुवनकोशवर्णनं नाम प्रथमोऽध्यायः ॥



## पाठभेदाः



नारायणः पिता यस्य माता चापि हरिप्रिया ।.
भृग्वादिमुनयः पुत्रास्तस्मै विखनसे नमः ॥ इति ग-मातृकायां प्रारम्भ

1. a **ग**-सर्वार्थकोविदम्—(मु) विश्वहितोदयम्. अनन्तरं "त्रय्यसुवेत्तारं वैखानसमतानुगम्" इति अधिकं **ग**-मातृका

1. b **ग**-संरक्ताः—(मु) संसक्ताः. 2. b **क,घ**-पूजामहे-पृच्छामहे.

3. b नास्ति **क**-मातृकायाम्. 4. a **क**-कस्यैवा—(मु) क

5. b **क**-अत्रिस्सं—(मु) अत्रिस्तान्. **ग**-ह—(मु) सः.

6. b **घ**-नारायणपरं—(मु) नारयणः परं. 7. b **ग**-तस्त—(मु) तासु तस्यायनं.

8. a **घ**-व्यापी—(मु) स्यापि. 9. a **ग**-सर्व—(मु) वि

10. a **ग**-सनातनः-(मु)सुरेश्वरः. 11. b **ग**-जनार्दनः-(मु)अखि

13. a **क**-स—(मु) स्व. ,, b **घ**-उत्तवीर्य—(मु) यत्त

16. a **क,घ**-जास्सर्वे—(मु) जाश्च.

17. a **ग**-वृद्धिः कर्म च तद्विधिः—(मु) पृथक्कर्म चतुर्विधम्.

17. b **ग**-तद्वशो—(मु) तद्विधिः. **घ**-तद्विधे—

18. b **ग**-तासां कर्म चैव गतिस्तु या—(मु)स्वेन कर्मणैव गति

19. a **क,घ**-त्रैस्सह—(मु) त्र्यग्रह.

22. a **ग**-हरिं—(मु) विभुं. b अनन्तरं "नित्यं नारा मर्चयन्ति नमन्ति च" इति अधिकं **ग**-मातृकायाम्

25. b **ग**-यदश्वमेधं यज्ञस्य—(मु) धर्मत्वमेव यज्ञस्य.

,, **घ**-यन्मर्त्य—(मु) धर्मत्व.

26. a **ग**-महात्मानं यमै—(मु) यमैस्सन्नियमै.

27. a **ग**-स्मृताः—(मु) ततः.

29. a अनन्तरं " वेदस्सम्मिलितावस्थां शाखां वैखानसीं विदुः " इति अधिकं **ग**-मातृकायाम्. 29. b **ग**-मुनिः—(मु) मुनीन्.

30. a **ग**-तं मुनिं ब्रह्मवित्तमम्—(मु) यं च वैखानसं तथा.

30. a अनन्तरं " तद्बद्विखनसा प्रोक्तं शास्त्रं वैखानसं मतम्" इति अधिकं **ग**-मातृकायाम्.

30. b **क,ग**-द्वयं—(मु) मतं. **घ**-सद्वयं—(मु) से मतं.

32. a **क**-शासनं—(मु) तद्द्वयं. 33. a अनन्तरं " शास्त्रं विज्ञाय तेनैव विस्तरेण वदाम्यहम्" इति अधिकं **ग**-मातृकायाम्.

34. b **ग**-वक्ष्यामि विधिमुत्तमं—(मु)विज्ञेया विधिवित्तमैः.

35. a अनन्तरं " स्वप्राधान्यविहीनत्वात्परिपन्न विधीयते " इति अधिकं **ग**-मातृकायाम्. 37. b **ग**-उत्तमस्य—(मु) उत्तमार्चा.

40. b **ग**-पुण्यतमैश्शुभैः,—**घ**-पुण्यतमेप्सुभिः (मु) पूजोत्सवादिकाः.

44. a **ग**-तथापि—(मु) सूतादि. 45. b **ग**-दीन्—(मु) दि.

## अध्यायः २

3. a **ग**-विप्रं स्वाध्यायसंयुक्तं गृहस्थं लक्षणान्वितम्.

3. b **ग**-सन्ध्योपासनतत्परं—(मु) भक्त्यध्यात्मगुणैर्युतं.

4. a **ग**-परायणं—(मु) समन्वितं.

4. b ग-पत्नीपुत्रसमायुक्तं ध्यानाध्यात्मगुणान्वितम् ; अनन्तरं,
" सुप्रसन्नेन्द्रियं शान्तं ज्ञानिनं शान्तमानसम् ।
पारम्पर्यक्रमायातं वैष्णवं भक्तिसंयुतम् ।
अनन्यदेवताभक्तं नित्यं विष्णुपरायणम् ।
विष्णोर्नित्यार्चनायुक्तं ध्यानकर्मणि निश्चलम् ॥" इति अधिक

5. ग-आलयार्चाविधानज्ञं मन्त्रानुष्ठानकोविदम् ।
प्रायश्चित्तविदं दान्तं समाहूयाभिपूज्य च ॥

7. b ग-क्रूरात्मानमरिष्टं च पाषण्डं च जडं तथा । 8. a ग-हृद्रोः युतं—(मु) उन्मादेन युतं. 9. a घ-त्पूर्वं—(मु) त्वेवं.

9. b ग-कर्मधर्मे—(मु) कर्मेदं. अनन्तरं, यत्नेन विहितं चार्थमा धारयिष्यति । स्वयमाचरितं तस्मादाचार्यस्समुदाहृतः ॥ अधिकं ग-मातृकायाम् . 13. a क-चापि—(मु) वापि.

15. a क-भवेदिति–(मु) समे समं. 16. a ग-सिद्धिः–(मु) वृ

17. b ग-ग्रामस्यापहृतिः—(मु) ग्रामस्येत्याहृता.

20. a क-ब्राह्मणश्च यथान्यायं सञ्जातो ब्राह्मणस्स्मृतः ।
,, घ-ब्राह्मण्यां च यथान्यायं सञ्जातो ब्राह्मणस्स्मृतः ।

25. b ग-श्रौत—(मु) शौच. 27. a क-तरुणालयं—(मु) बाल

29. a क-पार्श्वा—(मु) पाता. ग-शान्तये—(मु) पुष्टये.
,, b ग-लयो—(मु) प्रजा. 30. a ग-वेदान्त—(मु) वैदिक.

30. b क-तेन तु—(मु) मार्गतः.

34. a क-यत्ततो—(मु) शयितं.

36. a अनन्तरं " सहकुम्भं समानीय बालागारं प्रविश्य च । रत्न विना पीठे मन्त्रेणावाहयेत्प्रभुम् ॥ दक्षिणे चोत्तरे देव्यौ श्री स्थापयेद्बुधः " । इति अधिकं ग-मातृकायाम् .

38. b क-तन्मध्यमं ब्रह्मभागं रुद्रभागं विभज्य च.

43. a प्रथमपादानन्तरं 44. चतुर्थपादः क-मातृकायां दृश्यते. ग-दीनां ---(मु) कानां. घ-गृह्णामि......शयनं च, एष भागोऽस्ति.

47. a क-तीरे—(मु) मध्ये. 50. a ग-राज्ञोऽप्यन्ये - (मु) राजधानौ.

51. a क-दण्डिके—(मु) दण्डके.

54. b क-तृतीयपादानन्तरं 56. a प्रथमपादपर्यन्तं त्रुटितम्.

54. b घ-सोग्रहार......नगरं एष भागो न दृश्यते.

56. b क,घ-तोषितं—(मु) कौशलं.

अध्यायः ३

2. a क-लेच—(मु) लक्ष्मीं. 3. a क-कारयेत्-- (मु) शक्तितः.

7. a घ-क्षीणि---(मु) क्षिणं.

अध्यायः ४

17. b 18 a and b न दृश्यन्ते क,घ-मातृकयोः.

25. a क-तानभ्य-—(मु) नाम्नाभ्य. 28. b क-मातृकायां नास्ति.

36. b ग-राज्ञां—(मु) राज्ञः. 37. a ग-बालालयार्चनात्पूर्वं मूलस्यारम्भणं च यत्। ,, b क-कर्तुर्हारक—(मु) तत्तु हारक.

39. a ग-वरयेत्पाचकानपि---(मु) वरयित्वा च तैः क्रमात्. अनन्तरं " स्थानाचार्यं चार्चकांश्च पाचकान्परिचारकान्। तत्तद्-गृहे प्रतिष्ठाप्य यजमानोऽतिभक्तितः" ॥ इति अधिकं दृश्यते.

41. a अनन्तरं 42. b दृश्यते ग-मातृकायाम्. 49. a ग-यजमानः —(मु) जलेनैव. 50. b ग-विसूत्रेण—(मु) विधानेन.

अध्यायः ५

1. a क,ग-गुप्तेषु—(मु) उप्तेषु. „ b क-तस्य पश्चिमदेशे (मु) सस्यस्य पार्श्वे देशे. 2. b क-प्राङ्मुखस्थानां प्राङ्मुखास्ताः. 4. b क-बहुधान्यानि—(मु) बहुल

6. b क-वत्सशेषैस्स्थितैरपि—(मु) वत्सास्यनिस्सृतैरपि.

7. a ग-तासां खुरैस्तनैः—(मु) श्वासैस्तथैव च.

12. a क-अग्निं चोष्णाम्बुविततं—(मु) अग्निं वितथमुष्णाम्बु.

13. b क,घ-रोगं—(मु) रागं. 14. a घ-भ—(मु) फ.

15. a ग-चैवं विचिन्तयेत्—(मु) चैषां बलिं ददेत्.

17. a ग-इन्द्रजं—(मु) इन्द्राजं. 17. b ग-रुद्रजं—(मु) र

21. a क-स तु पुष्पैः–(मु) सक्तवपूपैः. 22. b ग-घोटा–(

23. a क-पुरुषं–(मु) वपुषं. 23. b ग-सुरस्यं—(मु) सुर

24. a ग-शक्रं—(मु) चक्रं. 25. b क-प्रागग्रान्—(मु) प्र

27. b क-अस्तु स्वस्तीति—(मु) वास्तुस्वस्त्यस्तु.

„ „ घ-अस्तु स्वस्तीति सर्वत्र यत्नात्संस्नापयेज्जलम् ।

अध्यायः ६

22. a ग-पुरस्तादाह—(मु) पुरु आह.

24. a क-सराम—(मु) सरान. 27. a ग-कुण्डलैः—(मु)

29. b क-स्वस्तिसूक्तसमायुक्तं देवेशं सम्प्रणम्य च ।

32. a क-विराडित्युक्त्वा—(मु) विराजोसीति

34. b ग-यथादिशं विधानेन—(मु) एतेन विधिना चैवं.

35. b ग-मध्ये ब्रह्माणमिन्द्रादीनीशानान्तं यथाक्रमम् । घ-ब्राह्मे—(मु) वाह्मे. 39. a ग-श्रीभूदेव्योस्तथैवाथ—(मु) श्रीदेव्यास्त्वाल्ये वाथ.

अध्यायः ७

8. घ-विस्तारात्—(मु) विस्तारः. 10. a ग-स्थूपिकैकांश—(मु) स्थूपी चैकांश. 18. a ग-मङ्गला—(मु) मङ्गना.

28. a ग-कौशिकं भद्रमेव च—(मु) भूतवैहारमेव च.

30. b ग-अपि—(मु) वापि. 36. a ग-सौवर्त—(मु) नौवृत्तं.

36. a घ-दौर्वृत्त—(मु) नौवृत्तं 37. b ग-पाथिकं—(मु) पाशिकं.

38. a ग-शान्तिकं—(मु) शाहिकं. b क-हरितं चन्दनान्तकं—(मु) हरिच्छन्दमनन्तकं. b घ-हरितं चन्दनाङ्क्तकं b ग-हरितं चन्दनान्तरं—

39. a ग-भूताकाराव्रृतं तथा—(मु) भूताकारमिलावृतं.

40. a क-द्वादशाष्टौ—(मु) षण्णवति.

अध्यायः ८

12. b ग-खण्डं—(मु) बन्धं. 13. a ग-नचेच्छेत्तद्विमानेषु तत्कर्ता तु विनश्यति. 14. b ग,घ-प्रोक्ताः—(मु) व्यालाः.

15. a ग-हंसमालिकया युक्ताः हंसमालाश्रिताः स्मृताः. b ग-गजसिंहाश्रयाः प्रोक्ताः तद्वन्मालायुतास्स्मृताः.

16. a ग-घोटं कोमलकं—(मु) गोकर्णं कोमलं. घ-मर्ण—(मु) कर्ण.

,, b घ-स्फुटं—(मु) स्फुट. ग-वटावृत्तं—(मु) स्फुटवृत्तं.

19. a घ-भेदतः—(मु) भेदकाः. 20. b ग-नवाङ्गुलिक—
वाङ्गुल्यः पाद. 21. a ग-कुम्भं नास्यथवा कुर्यात्—
कुम्भं ताटी पृथक्कार्या. b घ-मध्यमोत्तम—(मु) उत्तमान्तर.

22. a ग-अन्योन्यकर्ण—(मु) अन्योन्यं कण्ठ.

23. b ग-हस्तिमालिकया युक्ता भूतमाला हरस्य च.

31. b ग,घ-विवर्जयेत—(मु) निवेशयेत्. 38. a ग-द्वारितं
भेदकं—(मु) द्वारोत्सेधं तु वेरकं. ,, b ग-कवाटं
प्रोक्तं अष्टहस्तस्तु विस्तरः.40. b ग-तलेतले—(मु) तलो
41. b ग-षडस्यूनमितं—(मु) षड् हस्तेन लिकं.

अध्यायः ९

5. b घ-परिकल्पितं-(मु)परमेष्ठिना. 6.a क-मण्डपमेव-(मु)मण्ड
6. b घ-भद्रखण्ड्यो-(मु) छलबिन्दू. 8. b घ-स्थितिः-(मु)
10. a ग-उत्तरायां च तद्भवेत्—(मु) उत्तरार्धं च यद्भवेत्.
11. b ग-भुवङ्गस्य पतङ्गस्य—(मु) भुवङ्गस्स्यात्पतङ्गो.
15. a घ-तत्रि—(मु) तल. 25. b ग-नास्ति. घ-द्विगु -(मु)
28. b, a ग-मातृकायां नास्ति 33. a क-पीठं—(मु) वीशं.
34. a घ-णादिदि—(मु) णादि. तान्कु—(मु) तान्नकु.
35 b क-द्वयं घ-द्वय—(मु) द्वारं. क-उत्तमत्रिक—(मु) उत्त

अध्यायः १०

2. a ग-मृदः—(मु) ह्रदात्. ग-ह्रदादपि—(मु) खलादपि
,, ,, घ-भवा-(मु) खला. 12. a ग-मालमथाय-(मु) मा
18. a घ-दिवा—(मु) मृदो.

23. a क-कुलीरवासिं---(मु) कौलीरवासां.

24. b क-हैलकोत्पलं ग-नीलमे—(मु) मूलमेव च.

29. a क-चिह्नं—(मु) द्रव्यं. 33. a ग-अन्ते—(मु) अन्तः.

34. b घ-मन्त्रेण—(मु) वस्त्रेण. 42. a क,घ-स्वस्ति—(मु) विष्णु.

44. b अनन्तरं " अथमूर्तेष्टके " त्यारभ्य आध्यायपरिसमाप्ति एका-
दशाध्यायः । इतःप्रभृति ग्रन्थसमाप्तिपर्यन्तम् अध्यायसंख्याति-
रिच्यते घ-मातृकायाम् । 46. b घ-स्थूपि—(मु) स्थूपीं.

47. a घ-दिप्रारम्भे—(मु) वदायामा. 49. a ग-दक्षिणे च विवस्वतं
इन्द्रं वै पश्चिमेऽर्चयेत् । 59. a ग-प्रतिमानं तथा दारुः शुभ
इत्युच्यते बुधैः ।

अध्यायः ११

1. a अनन्तरं ग-विष्वक्सेनाश्रयस्थाने भूतपीठाश्रयस्तथा। इत्यधिकम्.

2. b ग-पञ्चमं—(मु) पञ्चशः.

4. a ग-विवस्वान्मित्रः क्षत्ता च परिवारास्तथा इमे ।

8. b ग-द्वाविंशतिकभेदांस्तानशक्तः परिकल्पयेत् ।

12. b ग-ईशानं सारस्वतं च पश्चिमाभिमुखौ स्मृतौ ।

12. b घ-ईशं—(मु) दुर्गां. 14. b ग-सभास्क—(मु) श्वाष्टभास्क.

15. a घ-कृत्वा—(मु) प्रोक्तान् . 25. a क,घ-दश—(मु) नव.

28. b ग-मपि–(मु)महा. 33. a क-दक्षिणां ततः–(मु)दन्तिनायकम्

34. a क-भ्यन्तरं—(मु) प्यक्षहं. ,, b ग-श्रियं—(मु) चक्रं.

39. b घ-देव—(मु) वेद. 43. a क-तीर्थसुखं—(मु) च वादिकं.

44. b क-दक्षतीर्थौ च—(मु) दक्षिणे भित्तौ.

45. b क,घ-सिद्धि—(मु) स्वधां. 49. b क-त्रलि—(मु) रवि.

52. a क-शुक्रं—(मु) शक्रं. 54. a घ-पद्मा—(मु) पद्म.

55. a घ-रविसंयुतां—(मु) संयुतां क्रमात्. 58. a ग-नित्य—(मु तीर्थ. 61. b क,घ-नास्ति. 64. a क-तथैव परिकत च—(मु) तथैकपरिचारश्च. 64. b ग-द्वौ चाप्यधममध्यमे (मु) स्तथैकोर्चक उच्यते.

65. b ग-मातृकायां न दृश्यते. 65. a घ-वक्तारौ—(मु)चर्तारौ.

66. a ग-द्वावेव परिचर्तारौ चत्वारश्चार्चका मताः ।

,, b ग-अर्चनार्थं च संप्रोक्ताश्चत्वारः परिचारकाः ।

71. a घ-वक्ता—(मु) चर्ता.

73. a अनन्तरं, ग "अधमोत्तममार्गस्य तथैवं मध्यमाधमम् । अर्चकाः त्रयः प्रोक्ताः त्रिगुणाः परिचारकाः ॥ चत्वारिंशतिकाश्चै तस्माच्चैवोत्तमाधमाः"। 74. b ग-मातृकायां नास्ति.

अध्यायः १२

1. a ग-जन्म—(मु) जाति. 4. b क,घ-श्लक्ष्णां—(मु) कृष्णां.

6. a ग-मातृकायां नास्ति. b घ-पुंबेरस्य—(मु) पुंभावेषु. घ-स्त्व बेरस्य—(मु) स्त्रीभावेषु. 13. b ग-नाशितं—(मु) निन्दि

14. a ग-धननाशनं—(मु) कुलनाशनं. 16 a क-रुग्मे—(मु) द्रु

16. b ग-पृश्निको—(मु) वृश्चिको.

17. a ग-पृषज्जलं—(मु) दृषज्जलं. 18. a ग-भोग—(मु) गर्भा.

19. b ग-पृश्निकः—(मु) वृश्चिकः. ,, न्यवेन्दुके—(मु) गवेधुके

20. a ग-कपोतगर्भवर्णस्य मण्डले गृहगौलिका.

22. a अनन्तरं, "मण्डले वंशजाभे तु वालुकास्तल निर्दिशेत्" इत्यां ग-मातृकायाम्. 23. a ग-स्वस्य—(मु) सस्य.

24. b ग-,, कार्पण्यं—(मु) वक्रण्ठ. 27. b ग-पृथक्—(मु) वपुः.
28. a ,, तत्प्रभाते तु तत्तोयैः संप्रक्षाल्य प्रदर्शयेत्.
28. b ग-भृङ्गा—(मु) मांसीं. 29. b ग-हेमपात्र—(मु) एकरात्रः.
31. a क-कर्माशी—(मु) कुष्ठं च. घ-कूश्माण्ड—(मु) कुष्ठं च.
31. b ग-मुक्ताद्रवस्तु संयक्तं शेषपाणिप्रदर्शनम् (?).
32. a क-अङ्गान्—(मु) सङ्गान्. 33. घ-येद्रूप—(मु) च्छेदं प्र.

## अध्यायः १३

6. a क-सन्निवर्त्य—(मु)सन्निवृत्य. 8. b घ-विधानवित्—(मु)मनोरमे.
9. a घ-अङ्कुरानर्पयित्वा तु—(मु) अङ्गारं तर्पयित्वा तु.
11. b घ-तेत्सुत—(मु) चोच्यते. 14. b घ-तत्र—(मु) मन्त्र.
15. b क-स्नानार्थानि—(मु) साधनानि ततो.
,, ,, ग-संविधायगुरूस्तथा—(मु) होमस्योत्तरपार्श्वतः.
16. b ग-हलिका—(मु) गुलिका. घ-ताडनं—(मु) ताटनीं.
17. b घ-वसवः प्रथमे—(मु) वस त्वमत्र चे.
22. b घ-परिष—(मु) मर्ष. 32. b ग-आलयं—(मु) शिलां.
33. a घ-चाभ्यर्च्य-(मु)चाभ्यज्य. 34. a क-मनोजानि-(मु)मानोन्मान.
36. a ग-लेपयेत्—(मु) रेखयेत्. 37. b क-चिह्नयेत्—(मु) एतयोः.
38. b क-विद्वान्—(मु) छिद्यात्. 39. a ग-क्षकात्—(मु) क्षणात्.
43. b ग-लङ्घयेत्—(मु) लयं नयेत्.
45. a ग-रात्रौ—(मु) वस्त्रै. 49. b घ-सम्पूज्य—(मु)संयोज्य.
50. a आरभ्य 51 a पर्यन्तभागः नास्ति, ‘घ’ मातृकायाम्.
52. b क,घ-नास्ति. 54. b ग-अन्ये च—(मु)अन्यत्र.

56. b क,ग-यानकं — (मु)स्थानकं. 58. b क-पञ्चपूर्ति—पश्चान्मुक्ति. ग-कीर्तिप्रवृद्धये—(मु) मुक्तिप्रदायकं.

59. b ग, घ-देवस्य—(मु) देशस्य. 59. b घ-भवेत्—(मु) म

The colophon, इति............णे विमानार्चनकल्पे एकबेरप्रा विधिर्नाम चतुर्दशोऽध्यायः ॥ 'घ' मातृकायां.

अध्यायः १४

4. a अनन्तरं, "पश्चाग्नीनां तु तन्मध्ये शय्यावेद्यास्ततस्तत 'ग' मातृकायामधिकम् .

10. a घ-पावकं (मु) वैष्णवं. „ b घ-वष्णव पौ—(मु) हुत

18. b क-ध्रुव—(मु) कुड्य. 23. a ग-कुड्ये—(मु) करै.

25. b क-यत्रैः—(मु) यन्त्रैः 29. a ग-ध्रौवंबेरं—(मु) दृढमेवं

31. a, b, 32. a न सन्ति 'घ' मातृकायाम्.

36. b क-नयननन्दनं—(मु) नयनबन्धनं. ग-सुन्दरं—(मु) बन्धनं

अध्यायः १५

2. a क,ग,घ-मधूकं—(मु)बन्धूकं. 7 b ग-प्रक्षालनं—(मु)प्रद

13. b क-गत्वाल्ये च संशोध्य—(मु) गत्वा जलेन संशोध्य.

अध्यायः १६

2. b ग-मिष्टधीः(मु) कारुभिः. घ-गृहीतेनैव मानेन—(मु) ि ह्वेरयोग्यानां. 4. a ग-अर्धोन—(मु) अर्धेन. घ-ः (मु) पश्चात्. 7. b ग-तलयो—(मु) दण्डयो. 8. b घ-ः —(मु) दण्डस्य. 9. b क,घ-वक्षो—(मु) मध्य.

12. b घ-णानां—(मु)णं च. 13. a ग-वक्तं पङ्कजवत्-वक्रमङ्कुशवत्.

14. a क-तन्त्रेण—(मु)ताम्रेण. b ग-आर्यासनस्य—(मु)यथासनं स्यात्.
16. a ग-कुञ्चिता—(मु) उचिता. 17. a क-पाद (मु) पार्श्व
ग-कूर्परो—(मु) कटचूर्वो: 19. b ग-श्रीभूशूलान्समादाय
देव्योर्वै कल्पयेत्पृथक् । 23. b ग-तथैवस—(मु) यवद्वय.
24. a ग-यवमलापिनिर्दिष्टं भागं जानुं प्रकल्पयेत्.
24. b ग-नाभ्भो—(मु) नाहे.
25. a ग-चरणं हस्तनिर्दिष्टं एवमेव क्रमेण वै. b ग-मातृकायां नास्ति.
27. b ग-नारायणस्य देवस्य देव्यो रूप्योः प्रधानतः ।
28. b ग-विकल्प्य युक्तावै कारयेद्गुरुत्वरः ।

## अध्याय: १७

5. a घ-तस्याश्च--(मु) शालायाः.
9. a क-चतुरतालं समन्ततः—(मु) कलशान्सप्तविन्यसेत्.
,, b ग-द्रव्यान् (?) सप्तसु सन्यस्य प्रभुं चापि समर्चयेत्
11. a क-शूलानां आसनाय तु—(मु) शूलानादायचादरात्.
11. b ग-ततो देवं स्वस्तिसूक्तं आचार्यस्तु समुच्चरन् ।
12. a ग-प्रतद्विष्णुरिति मन्त्रेण श्वभ्रे संस्थापयेत्ततः ।
16. a क,घ-द्रव्यै—(मु) देव्यो.
,, b ग-पीठेपु च समानयेत्—(मु) पीठे शुद्धाम्बरेण तु.
18. b ग-पूर्वोक्त—(मु) वस्त्रैश्च. 25. b क-दैवत्य—(मु) वारुणं.
25. b घ-गार्हपत्ये चाप्लुत्यं विष्णुसूक्तं सवैष्णवम् ।
26. a ग-ऐशान्यं वैष्णव तथा—(मु) ऐशं सौरं च तत्र वै.
26. a ग-आरभ्य. 27. a पर्यन्तं नास्ति.
28. b क-अङ्ग—(मु) अन्त. 31. a ग-तत्पदं—(मु) तमलं.

33. a क-वारि—(मु) द्वार. 38. b घ-येरोक्त—(मु) तेनोक्त.

अध्याय: १८

2. b क-सर्व—(मु) राज्य. 7. a ग-विमानगृहविस्तारं उत्त
प्रवदन्ति. b तथैव प्रवदन्ति स द्वारतुल्यं च मध्यमम् ।

8. a अनन्तरं, अत:परं प्रवक्ष्यामि ध्रुवबेरविधिं क्रमात् । इति अधिकं ग

11. b क-युक्तं—(मु) व्यक्तं. 12. a घ-एतत्—(मु) यत्तत्.

12. b ग-सर्वाङ्गमर्थसादृश्यं अर्धचित्रमिति स्मृतम् ॥ 13. a घ-इतीरि
—(मु) इति त्रिधा. 16. a क-सहैव सर्वं संदृश्यं भूषणान्यम्ब
तथा. b तत्तद्बिम्बं—(मु) तत्तत्स्थाने.

17. b क-शयाने यानकेऽथवा—(मु) शयने वाऽपि कारयेत् ।

20. b ,, सर्वाङ्गमप्यर्थदृश्यमर्थमेकवदाचरेत् ।

21. a ,, सर्व—(मु) अर्ध. 24. a घ-त्यत्तु—(मु) त्सूत्र.

32. b ग-व्याजिनीभ्यां—(मु)व्यजनेन. 33. b क-त्रिधा—(मु)द्विध

36, 37 श्लोकौ क-मातृकायां न स्त:. 37. b ग-एवं स्थानकमुद्दिष्टमार
च प्रचक्षते । 41. b क-भाग—(मु) भोग.

45. a ग-शिल्प्या प्रतिमा देव: पादपीठे जरंध्रुव:(?) ।

50. b घ-तत्तद्रत्नं समर्पयेत्—(मु) तत्रत्यांश्च समर्चयेत्.

54. b ग-एवमेवासने प्रोक्तं रत्नन्यासं समुच्यते.

अध्याय: १९

7. a ग-मातृकायां नास्ति. 9, 10, श्लोकौ घ-मातृकायां न स्त:.

13. घ-शास्त्रेण षट् च—(मु) शास्त्रोक्तं तत्र.

19. a घ-न का—(मु) तु का. 19. b ग-मार्गेण—(मु) मानेन.

21. घ-ङ्गं सर्व—(मु) ङ्गोपाङ्ग.

25. b ग-अधिवासौ द्वौ—(मु) न्मेषादिकं तद्वत् .

29. b ग,घ-सर्वेष्व—(मु) यथोक्त. 34. a ग-भक्तया—(मु) शक्तया.

36. a ग-तां—(मु) तौ. 38. घ-स्नपनो—(मु) मन्त्रयु.

40. a ग-शिवामये—(मु) शिलालये.

51. a अनन्तरं, " दृढं तं योजयित्वैव बेरपृष्ठस्य मध्यमे । तत्पृष्ठे स्कन्धमध्ये च तदाधारेण योजयेत् ॥ शूले छिद्रं न कर्तव्यं कुर्याच्चेत्स विनश्यति " ॥ इति अधिकं ग-मातृकायाम् .

53. a घ-" भित्ति··············बेर " पर्यन्तं ग्रन्थपातः.

54. b घ-" मध्ये " इत्यारभ्य. 56. a " हस्त " पर्यन्तं ग्रन्थपातः.

55. b ग-पार्श्वयोः—(मु)साश्रयौ. 66. घ-च लेपयेत्—(मु)तलेऽर्पयेत्.

58. b ग-स्कन्धमूर्ध्नि च पृष्ठतः—(मु) स्कन्धे च मकुटेऽप्यथ.

63. a घ-सूच—(मु) स्राव. 69. b घ-प्रतिमां—(मु) श्चापि.

70. a ग-चक्रं वीशं च शान्तं च पकं चापकमेव च.

अध्यायः २०

2. a ग,घ-स्थानकं त्रिविधं स्मृतं—(मु) तेषां भेद इहोच्यते.

4. a ग-दक्षिणे वर—(मु) दक्षिणापर.

5. b घ-संयुतं—(मु) संज्ञिकं. 8. a घ-स्थापन—(मु) स्थानक.

15. a क-कुर्यादित्यनन्तरं 15. b ' देवं ' इति पर्यन्तं ग्रन्थपातः.

„ „ घ-कुर्यादित्यनन्तरं 16. a पर्यन्तं नास्ति.

18. a ग-देवीभ्यां च मुनिभ्यां च—(मु) देवीभ्यां रहितं चापि.

22. a घ-कृत्वा समे—(मु)पीठे समे. 28. b ग-उद्वासन—ऊर्ध्वाननं.

37. a ग-रमा तु दक्षिणं पादमूरौ सन्यस्य मर्दयेत् .

38. b क-मौलिं न स्पृशते किञ्चिदुपधाने यथा तथा.

„ „ ग-उपधानेन मकुटं किञ्चित्तेन स्मृतिस्तथा.

41. a क-भेदोऽयं ...(मु) भेदेषु., बेरं—बेरे.

44. b ग-मृगेशं—(मु) मृण्मये. 46. b घ-बेरे च—(मु) वे

47. b क-शयाने चासनं तथा—(मु) शयने शयनं न च.

48. a ग-भ्रवेस्थिते समासीने—(मु) ध्रुवे शयाने त्वासीनान्.

Colophon क-मातृकायां, आसनभेदोनाम

अध्यायः २१

2. a घ-मूर्तीनां चैव सर्वेषामादिश्श्याम उदाहृतः। b घ-ना

6. a क-श्याममेवप्रशस्यते—मु श्यामं योग्यतमंभवेत्.

13, 14 श्लोकौ न स्तः 'क' मातृकायाम्. 13. घ-सुलोचतां शुभाननां. 15. a ग-भासे—(मु) भासौ.

16. a क-रुक्माभं—(मु) रत्नाभं. 16. b क-किञ्जल्कसुप्रभं जल्दप्रभं. 17. a क-सौम्यां—(मु) सन्ध्यां. 17. a " द्वितीयौद्वारपालौ च अग्निवर्णौ च कारयेत्". इ 'ग' मातृकायाम्. 17. b ग-द्वितीयद्वारपालौ तु तामसस्स्मृतः. 18. a ग-वामे तु सिद्धिदः प्रोक्तः म सम्मतः. 20. a क-किरीटिनं च द्विभुजं श गदां तु वा. घ-चद्विभुजं शक्तिपुष्पं गदा तु वा. b —(मु) विभूषितं. 21. a ग-मणिमेव च—(मु) न तत्. b ग-विना—(मु) तथा.

23. a ग-पिञ्छक—(मु) पिञ्जर. 26. b क, घ. तथाचै पितृपतिं. 27. a क-'शूलपाणिं' चैत्यनन्तरं, 29. a तिपर्यन्तो ग्रन्थभागः

31. a अनन्तरं.... ...उपलभ्यते 31. b क-मातृकायां नास्ति.

33. श्लोकः घ-मातृकायां नास्ति

अध्यायः २२

1. b क-संख्यानां संज्ञाभेदश्च—(मु) संज्ञानां संख्यामानं च.

„ „ घ-संज्ञाभेदं च—(मु) संख्यामानं च 3. a ग,घ-तनुक—(मु) कनखा. 6. a ग,घ-देहभागो—(मु) द्वादशांशो. 12. b ग-मानं समय-(मु) समयस्त्वङ्ग. 23. a ग-रत्निद्वयो-(मु) मुष्टिद्वयो.

अध्यायः २३

2. b ग-नवविंशच्छताङ्गुलं-(मु) सविंशतिशताङ्गुलं. घ-चतुर्विंशच्छताङ्गुलं

3. a ग-केशान्तं ब्रह्मरुद्रौ च ललाटान्तं तथा भवेत् ।

„ b „ तथा सप्यर्तिकेशान्तादूर्ध्वमुष्टो नवाङ्गुलम् (?)

„ c „ केशान्तमूर्ध्वमुष्णेगेन अङ्गुलन्तु तथा भवेत् ।

„ „ क-नास्ति. 4. a क-अक्षसूत्रपुटं तस्य अर्धसूत्रचतुष्टयम् ।

„ b „ पुटसूत्रार्चिभूकान्तं भागं सार्धं तथैव च ॥

6. a ग-रादिवसेत्तथा—(मु) रासीवनेत्तथा.

„ b „ शिरस्या—(मु)सीवन्या. 6. b घ-सप्त—(मु) पञ्च.

9. a घ-त्राजा—(मु) अण्डा. 10. a अक्षयित्वाक्षिकायामं—(मु) अक्षान्तात्पार्ष्णिकायामं. 11. b क-त्रि—(मु) द्वि.

16. a घ-एकादशार्धाङ्गुलिकोवक्त्रविस्तारमुच्यते.

17. a क-केशान्तनाहं त्रिगुणं अन्यत्रापि च तत्त्रयम् । 21. b आरभ्य

23. b पर्यन्तं नास्ति, ग-मातृकायाम्. 22. a क-तावदेव च विस्तृतं-(मु) नेत्राभ्यां समुदाहृतः 22. b क-मातृकायां नास्ति.

23. b ग-सूत्र—(मु) नेत्र. 24. a ग-पञ्चार्धमण्डलं—(मु) सार्धपञ्चयवं. घ-पञ्चार्धं मण्डलात्कृष्णात्—(मु)सार्धपञ्चयवं कृष्णं.

24. b ग-यवश्चोक्तं--(मु) यवाष्टांशः 27. b ग-मातृकायां
27. घ-भोज्याच्च—(मु) गोजी च. 28. a क-मातृकायां

29. b ग-अधरं तद्द्विमात्रा वा वक्त्रस्याधरपालिका. 30. a ग-
(मु) वाध्यर्धं. 30. b ग-आननं द्वियवार्धं तु वक्तमर्धं च

31. b ग-भानु—(मु) हनु. 32. a ग-भ्रूरेखा चाधरेखा
भ्रूसूत्रादास्यसूत्रान्तः 34, a ग-कुछिकाकृतिं–(मु) कर्ा

36. b ग-अष्टमध्येव मूलं तु तत्पूर्वापरपक्षयोः 37. b अनन्त
मातृकायां "परनालोर्ध्वेतियवं विस्तारायाममिष्यते" इ

40. b ग-ग्रीवायां कक्षबन्धश्च समानस्तत्प्रमाणतः 47. a
द्वयसागरः—(मु) अङ्गुलद्वियवाधिकः b ग-तालं चाष्ट
चतुर्यमिं च हेदलम् ? । घ-करं च—(मु) तारश्च, कु
चतुर्थवं. 48. b ग-तयवं तल विस्तारमेकाद्रिपञ्च

49. b ग-नखायामो यवाधिकः-(मु) घनं पृकमुदाहृतं. 52.
तिर्यगित्यनन्तरं 53. b "साग्रयो" इति पर्यन्तं

54. a क-पीठा—(मु) पिण्डा. 58. a घ—द्वाविंशद
द्वादशाङ्गुलं. b घ–त्रयोविंशति तल तः ?—(मु) अधो

61. b ग-पञ्चाङ्गुलद्वियवाधिकं–(मु) द्वयं पञ्चकमात्रकं. 63.
स्थला–(मु) पुरस्ताद. 72. a अनन्तरं, "कक्षपार्श्व
षोडशाष्टप्रमाणतः" इति 'ग' मातृकायामधिकम् ।
(मु) वंश. 72. b ग-कुक्षिपार्श्वस्य विस्तारमेकाङ्गुल

74. a ग-हिक्का पञ्चाङ्गुलार्धं स्यात् उन्नतं चतुरङ्गुलम्. 76
अष्टाविंशार्धमङ्गुलं—(मु) सार्धं वेदोष्णिकाङ्गुलम्.

78. b आरभ्य 80. b पर्यन्तोभागः 'घ' मातृकायां नास्ति

83. b ग-द्वादशार्धमात्रकं—(मु) सार्धद्वाविंशदङ्गुलं.

अध्यायः २४

3. b घ-पति—(मु) वर. 6. b ग—जे विग्वे–(मु) जार्चायाः

8. b क-वर्णश्च—(मु) गर्मश्च. 12. a ग-मोत्तमं—(मु) मं भवेत्.

16. b ग-लिधाक्रमात्—(मु)क्रमेणवै. 25. a ग-चैव—(मु) नैव.

29. a क-वर्जितः–(मु) मानकं. b. ग-अन्यानपि च–(मु) सर्वेष्वपि च.

32. a आरभ्य 36. a पर्यन्तं नास्ति 'घ' मातृकायाम्.

34. b क-अधमं—(मु) आयामं. 35. a क-ततस्स—(मु) तलं च.

38. b आरभ्य 64. a पर्यन्तं 'क' मातृकायां ग्रन्थपातः

43. b अनन्तरं 47. a 46. a,b च दृश्यन्ते, 'घ' मातृकायाम्,

46. a ग- सुपीरं—(मु) सुपीठे. 51. b नास्ति 'घ' मातृकायाम्.

63. b ग-स वै पादायतस्तस्य—(मु) सर्वैरायाद्धस्तस्य. 64. श्लोकः 'ग,घ' मातृकयोर्नास्ति.

अध्यायः २५

अयं चाध्यायः 'क' मातृकायां नास्ति. 3 a दैविकं—(मु) वैदिकं.

9. a ग-तद्बिम्बं—(मु) तद्गर्भे 13. a ग-लोहपूर्ण तु नक्षन्तं यावन्नाभिरथद्रढम् ? । 22. घ-महा—(मु) सर्व.

26,27 श्लोकौ 'घ' मातृकायां न स्तः.

अध्यायः २६

4. a क-नव—(मु) तथा. 10. a ग,घ-कङ्गु—(मु) व्रीहि.

12. a ग-हृगव—(मु) हेनव., तु—(मु) पु.

14. a ग-सप्ताष्टौ वा—(मु) सतविष्कु.

17. b क-षण्णां—(मु) पङ्क्तौ. 19. a घ-मातृकायां नास्ति.

20. a ,, ,, ,,

25. b क-कांस्ये वा मृन्मये तथा—(मु) ताम्रे कांस्यमयेऽथवा
31. b ग-जाता—(मु) गता.
36. a b, 37 a न सन्ति 'क' 'घ' मातृकयोः.
37. a अनन्तरं 'घ' मातृकायां 40. b ततः, अनिष्पन्नं कर्तुरप्यशुभं भवेत्। तस्मात्सर्वप्रयत्नेन कारयेदङ्कु इति अधिकं (घ) 37. b ग-सद्यश्चैव—(मु) सद्द
40. a क—अल वै—(मु) अह्निचेत्. 40. b and 41. क—मातृकायाम्. 41. b नास्ति 'घ' मातृकाय

अध्यायः २७

1. b ग-विष्णव—(मु) देवा, 4. b घ-तस्याधानं प्रति पूर्वार्चनादिकाः. 6. a ग-अप्रमेयं—(मु) अर्त
7. b घ-सम्पत्—(मु) सिद्धि. 11. a घ-वैखानसार नास्ति. „ b घ-श्रौताचारसमायुक्तं नास्ति.
15. a घ-नं च मत्रानुक्तान्यथाक्रमं ?—(मु) नज्ञमनुक्तक्रम
„ b घ-त्तंच—(मु) त्तादि. 20 b घ-मातृकायां नां
32. b घ-च तत्परः—(मु) जितेन्द्रियः. 33. b घ नास्ति. 35. b क,घ " अरणिं कारयेद्विद्रा दारुणा " इति 36. a क-दण्डायामसमायु द्वितालायामविस्तारां. 37. a ग,घ-दण्डायामं—(मु
38. b आरभ्य. 43. a पर्यन्तं ग,घ-मातृकयोर्नास्ति.
47. a क-शरावं—(मु) शिखावत्. b ग-तस्मादाधा–(मु)
48. b ग-होमानां तु—(मु) होता मानं. 59. b मुकुलाकृतिं—(मु) निम्नादामुकुलान्तकां. 64. b (मु) पाद. 65. a घ-मधोर्ध्वायां मध्येशूलं च—मधोदारुशूलानि. 67. छिन्नैस्स युतैः—(मु)छि

अध्यायः २८

1. घ-उक्तशुद्धि—(मु) समिधःसु. 3 मागाग्निकैस्सर्वैः— कुशैस्साग्रैरगर्भकैः. 11. a घ-वक्त्रं च विप- (मु) दुर्गन्धं वर्ज्यं. 11. a अनन्तरं 'घ' मातृकायां, "वर्जयेदिध्मनार्थं तु अन्यत्सर्वं तु निक्षिपेत्" इत्यधिकम्. 13. a घ-हीनं छिन्नं—(मु) च छिन्नं च. b ग-भिन्नं—(मु) परि.

15. अयं श्लोकः 'क,घ' मातृकयोर्नास्ति. 17. b 18. a न स्तः घ—मातृकायाम्. 21. a क,घ-मातृकयोर्नास्ति.

23. b अनन्तरं. 29. a दृश्यते. 24, 25, 26 एते त्रयश्श्लोकाः न सन्ति क,घ—मातृकयोः 28. a 29. a b न सन्ति क-मातृकायाम्. 28 a, 29 b, 38 a, 39 a न सन्ति घ-मातृकायाम्. 39. b घ-तत्रोत्सेधश्च विस्तरं — (मु) विस्ताराद्विगुणोत्सेधान्. 42. a अनन्तरं क-मातृकायां "यथा-लाभप्रमाणानि पीठन्यासार्थकानि वै," इत्यधिकं.

43. b ग-तत्सर्वत्र—(मु) तोरणाद्यैः. 44. a दामादिलम्बैश्चेत्य-नन्तरं, 44. b कदलीक्रमुकैरपि" इतिपर्यन्तं ग्रन्थपातः.

47. b अनन्तरं, गृहस्थस्त्वालये विद्वान् पञ्चार्चानादथापि च। यथोक्तं तद्वदेव स्यात् पञ्चबेरप्रपूजनम्" इत्यधिकं ग मातृकायाम्.

48. a ग-वा पुनः—(मु) कल्पयेत्. 48. b ग—नित्यप्रधानपूजार्थं कौतुकं सम्प्रकल्पयेत्। अनन्तरं, स्नपनं स्नपनार्थं चाप्युत्सवार्थं तथोत्सवम्। पञ्च त्रीणि सहैवाऽथ प्रतिष्ठामाचरेद्बुधः॥ नित्यं तु बलियात्रार्थं बलिबिम्बं च मुख्यतः। सत्र सर्वभोगार्थं भोग-बेरं च केचन" इत्यधिकम्. 53. b ग-आचार्यः कौतुका-दीनां शिल्पिभिश्शास्त्रमार्गतः. 55. a ग-नास्ति.

72. a, 75. a b, 76. a, क, घ-मातृकयोर्न सन्ति.

77. b ग-प्रतीक्ष्यति—(मु) पतिष्यति. 7 a, b क,घ-षट्—
अष्ट. 80. a ग-आज्यं कांस्ये सुवर्णेन दुग्धं प्रगृ
घ-सुवर्णेन युक्तं—(मु) सुपात्रे च. 81. a नास्ति क
कायाम्. 82. श्लोकः कघयोर्नास्ति. 89. a कघयोर्नास्ति

अध्यायः २९.

5. a क-वेदान्वै—(मु) वदन्वै. 7. ध-तथा—(मु) त्रिभिः
9. घ-ध्रुवं—(मु) एवं—चित्ते—चित्त. 11, 12, 13, श्लोका न
'क' मातृकायाम्. 11. a नास्ति 'घ' कोशे.
20. b 21. a न स्तः 'क,घ' कोशयोः 28. b घ-कृतं वै
पश्चिमे. 31. घ कृत्वा—(मु) हित्वा. 37. b क
नास्ति. 38. a घ कोशे नास्ति. 40. b ग-द्विगो
त्रिको. 57. b आरभ्य 61. b पर्यन्तं 'क' कोशे नास्ति
60. a 'घ' कोशे नास्ति. 63. घ-तस्य तु—(मु) जनस्तथा.
75 ,, घ-बेरामि—(मु) होमं न. 80. b 'क,घ' कोशयोर्ना

अध्यायः ३०

10. a क,घ-सदा भक्तिसमायुक्तान्—(मु) प्रपन्नान् भक्तिसंयुतान
11. a ग-न दुर्गुणान्—(मु) तु तद्गुणौ. 13, 14. श्लोकौ न स्तः
कोशयोः 16. घ-कर्मस्वेतान् यथायोग्यं—(मु) योग
संयोज्य. 18. b ग-वास्तुहोमश्च मन्त्रोक्तः तावन्मन्त्राङ्ग
20. b 'क' कोशे नास्ति. 25. श्लोकः 'क,घ' कोशयोर्नास्ति
26. b क,घ-आघारं सर्वहोमेषु जुहुयाद्विधिनैव ते। 31. b क-
(मु) सूत्रेण. 34. b क-इन्द्रादीनपि देवांश्चावाह्यैव ततः
35. a b 36. a न सन्ति 'क' कोशे. 36 b घ- "ग
इत्यारभ्य "चान्वाहार्ये" इति पर्यन्तं न दृश्यते.
49. b क,घ-मातृकयोर्नास्ति.

अध्यायः ३१

3. a क,घ-कोशयोर्नास्ति. 4. a घ-तत्परः—(मु) सत्कृत.

14, b 15, a b 16.a b न सन्ति 'क,घ' कोशयोः

17. b 'क' कोशे नास्ति. 17. b 18. a न स्तः 'घ' कोशे.

23. a आरभ्य 37. b पर्यन्तो भागः 46 a अनन्तरं पठ्यते 'कघ' मातृकयोः 24. b ग-सह पीडयन्—(मु) अप्यपीडयन्.

55. b घ-सर्वत्र वसनादेव—(मु) सर्ववस्तुनिवासित्वात्. 56 b आरभ्य 59. b पर्यन्तं नास्ति 'क,घ' कोशयोः 62 b घ-सर्वस्मात्—(मु) श्रीविष्णोः 76. b क-ध्रुवं च कौतुकं—(मु) न त्याज्यं कौतुकस्यापि.

अध्यायः ३२

5, 6, 7, श्लोकाः 'ग,घ' कोशयोर्न सन्ति. 16 b आरभ्य 22. a पर्यन्तं 'क' कोशे नस्ति. 18. a घ-व्रीहीणां—(मु) धान्यानां, चोर्ध्वतः—च क्रमात्. 18. b आरभ्य 21. a पर्यन्तं 'घ' मातृकायां नास्ति. 25. b 'घ' कोशे नास्ति.

27. b घ-मङ्गलान्—(मु) दीपांश्च. 37 a घ-क्रमादेवं—(मु) दिशि द्वारे.

38. श्लोको नास्ति 'क,घ' कोशयोः 43. a घ-काल—(मु) तल.

50 a नास्ति क,घ-कोशयोः 55. a ग-अर्धर्चाः—(मु) अध्वर्युः

58. a घ-अग्निं च—(मु) ज्ञात्वैव. 65. b 66. a b न सन्ति 'क,घ' कोशयोः

अध्यायः ३३

7. श्लोको नास्ति 'क,घ' कोशयोः 8. a क,घ-स्वस्ति चैवेह स्वाहेति—(मु) स यजेत्स्वस्ति चैवेति. 10. a नास्ति 'क,घ' कोशयोः 12. a,b नस्तः क,घ-कोशयोः 13. a नास्ति 'क' कोशे. 15, 16. श्लोकौ न स्तः क,घ-कोशयोः 20 a नस्तः

